# BIBLIOTHECA INDICA

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE

## ASIATIC SOCIETY OF BENGAL

NEW SERIES No. 1114, 1118, 1119

# GADADHARA-PADDHATI

## DVITĪYA KHANDAH

## ĀCHĀRASĀRAH

BY

GADĀDHARA RĀJAGURU

EDITED BY

PANDIT SADĀŚIVA MIŚRA

PURI

Vol. II, Fasciculus IV

Calcutta

PRINTED BY UPENDRA NATHA CHAKRAVARTI AT THE SANSKRIT PRESS
H
ASIATIC SOCIETY, 1, PARK STREET

1908

# गदाधरपद्धतौ आचारसारः।

द्वितीयखण्ड ।

श्रीगदाधरराजगुरुप्रणीत ।

एसियाटीकसोसाइटीनामिकाया सभाया

अनुमत्या

श्रीपुरुषोत्तमक्षेत्रनिवासिना

पण्डितश्रीसदाशिवमिश्रेण

संस्कृत ।

---

कलिकाता-राजधान्यां

श्रीउमेन्द्रनाथचक्रवर्त्तिना

संस्कृतयन्त्रे मुद्रित ।

एसियाटीकसोसाइटीनामिकया सभया प्रकाशितश्च ।

---

१९ ८ खीष्टाब्द ।

# PREFACE

In these days of elaborate enquiry and learned research our Sanskrit lore which was gradually sinking into dark oblivion, is now coming to light through the liberal patronage of Government and arduous efforts of many private individuals We are highly indebted to the Asiatic Society which has done incalculable good in this direction and if the Society continues working for some years to come all our Sanskrit Shastras are likely to be revived About 25 years ago Dr Rajendra Lal Mittra L L D C I E deputated one of the travelling Pandits of the Society Pandit Ramnath Tarkaratna to visit Orissa for collecting Sanskrit works Again in 1894 the Society engaged Pandit Benod Behari Bhattacharyya for the same purpose I had the honour and pleasure of accompanying the learned Pandit in his travel and did all I could to help him in collecting many invaluable works which the Society had not found else where Hence my connection with the Society and my acquaintance with their worthy Philological Secretary Máhamahopadhyáya Haraprasad Sastri through whose kindness I was honoured with the work of editing *Gadadharpadhati* a big Smriti code of excellent merit written by Gadadhar Rajguru The entire work divided into five parts viz Achár Sár Dána Sár Sudhi Sár Brata Sar and Kala Sar has already been printed and published by the Asiatic Society The present volume now printed and published is Achár Sár Kála Sár deals with the determination of the appropriate and auspicious

time for the performance of several rites and ceremonies which form the daily religious duties of a devout Brahmin For what is Hindu life but a routine of religious practices duly observed in right moment and in right order Achár Sar deals with the several religious rites as well as the manner in which one should take his meals sleep etc during a day i e 24 hours The arrangement of their subjects is strictly logical their language chaste and style lucid A superficial reader will I dare say bear testimony to the vast erudition and rare originality of their author Gadadhar Padhati is not certainly a very ancient work Its author lived not more than 170 years ago We learn from the work itself and from the geneology of his

कृष्णात कौशिक वाजपेयि तुलसीवंशात ह्युत्पण्डिता
द्दीतिग्रन्थकृत स रायगुरुरित्यासीत वदान्याग्रणी ।
पुत्र शारदराजपेयमखकृद् विद्वान हरेकृष्णभू
नाथश्रीमहिषी गुरुहलधराभिख्योऽग्रजो धामकृत ॥
वेदान्तादिसमस्तशास्त्रनिलयो नीलाम्बराख्योऽनुज
स्तस्य श्रोत्रियोऽतिदैवविदभूत्साहित्यविद्यार्णव ।
सद्वैयाकरणश्च नीतिनिपुण श्रीनीलशैलेश्वित
मञ्जुस्नानसुखोत्सवानवयवस्तोत्रं च योऽरचयत ॥
धीरेशान स्ववितीर्णदापितमहाव्रतशासनेषूत्तमान्
संस्थाप्याध्वरिणो विधाय धनदप्रख्यान द्विजान्स्वान व्यधात ।
प्राज्ञ प्राप चतुर्भूम्यादिकमहायज्ञेषु सन्तोषयन्
विप्रादीनपि राजसूययजनित यौधिष्ठिर यो यश ॥
यो नीलाम्बरराजगुर्वभिधया ख्यात क्षितौ श्रीहरे
कृष्णाख्यक्षितिपेश्वरेभपतिना शिष्येण सम्मानित ।
सौवर्णोडुपतुष्ट्याच्युतपदाम्भोजाङ्कलग्नातप
त्राद्येन द्विपचामरप्रभृतिभिश्चान्योऽग्रचिह्नै परै ॥

family that the author was the son of Nilamber Rajguru the precepter of Harakrushna Dev a king of the Gajapati Dynasty of Orissa who reigned from 1714 to 1718 A D His uncle Haladhar Rajguru received from the said king grant of land a very large Brahmin village about 4 miles off Puri called Harekrushnapur His mother Janaki is said to be an accomplished lady of very high repute

In Conclusion I beg leave to observe that *Gadadhar padhati* is the last and best known Smriti for recognising and regulating the manners and customs of the Hindus in Orissa Of all the local Smritis used in Orissa this work is mostly accepted and is considered to be of highest authority The object of the Society in publishing this valuable work will be fulfilled if it help the Hindus in solving the social problems of the Hindu life I must express my gratefulness to the Raja of Khalikota in the Ganjam district for his kindness in supplying me from his library with a copy of Achar Sar which I could not get elsewhere

---

यज्वा यज्ञरमो यमेश्वर इति भ्राता ह्यहत्पण्डित
स्त नीलाम्बरनामकं च पितरं श्रीजानकीं मातरम् ।
नत्वा राजगुरुगदाधरसुधीः कालसाराभिधं
ग्रन्थं प्रारभते विलोक्य यमिमं नि सभया सज्जना ॥

* Gajapati is the same as the Ganga Dynasty The founder of this dynasty was Chauranganga Dev who was a native of Orissa and is represented as the son of Gokarneswar near Mahendra Hill in the southern part of Orissa —Vide Madala Panji of the Puri Jaganath Temple and Gangavansamcharita a historical drama in Sanskrit

सद्वैयाकरणश्च नीतिनिपुणः श्रीनीलमैलेश्वरु-
र्मञ्जस्नानमुखीश्चानवयवस्तोत्र च योऽवर्णयत् ॥
धीरेशान स्ववितीर्यदापितमहासत्त्वासनैपूत्तमान्
सत्राण्याधरिणो विधाय धनदप्रख्यान द्विजांस्तान व्यधात् ।
प्राज्य प्राप चतुर्मुखादिकमहायज्ञेषु सन्तोषयन्
विप्रादीनपि राजसूयजनित यौधिष्ठिर यो यश ॥
यो नीलाम्बरराजगुर्व्वभिधया ख्यात क्षितौ श्रीहरे
कृष्णाख्य क्षितिपेश्वरेभपतिना श्रिश्रेण सम्मानित ।
सौवर्णोडुचतुष्टयाच्युतपदाम्भोजाङ्ककृष्णातप
वारीन द्विपचामरप्रभृतिभिश्चात्मीयचिह्नै परै ॥
यज्वा यज्ञरमो यमेश्वर इति भ्राता तृहत्पण्डित
स्त नीलाम्बरनामक नृपगुरुं तात प्रसू जानकीं ।
नत्वा राजगुरुर्गदाधरसुधीराचारसाराभिधम
ग्रन्थ प्रारभते विलोक्य यमिम नि सग्गया सज्जना ॥

इह खलु विष्ण्वाराधनमेव परमपुरुषार्थस्तच्च आचारवत एव सिध्यतीति, आचारसाराभिधो ग्रन्थ प्रारभ्यते।

विष्णुपुराणे,—

वर्णाश्रमाचारवता पुरुषेण पर पुमान् ।
विष्णुराराध्यते पन्था नान्यस्तत्तोषकारक ॥

अत्र वर्णाश्रमाचारस्य कालोपजीवनेन प्रवृत्तत्वात् आदौ कालो निरूप्यते। स च कालो द्विविध । नित्योऽनित्यश्चेति। तत्र

कालकालापरनामा ईश्वर एव नित्यकाल । तथा च तैत्तिरीय-शाखाया नारायणीये ।

सर्वे निमेषा जज्ञिरे विद्युत पुरुषादधि ।
कला मूहूर्त्ता काष्ठाश्च अहोरात्रश्च सर्व्वश ॥
अर्द्धमासाश्च ऋतव संवत्सराश्च[1] कल्पिता । इति

कूर्म्मपुराणेऽपि,—

अनादिरेष भगवान कालोऽनन्तोऽजय पर ।
सर्व्वगत्वात् स्वतन्त्रत्वात् सर्व्वात्मत्वान्महेश्वर ॥

तथा तत्रैव,—

पर ब्रह्म च भूतानि वासुदेवोऽपि शङ्कर ।
कालेनैव च सृज्यन्ते स एव ग्रसते पुन ॥

श्रुतिश्च । "स विश्वकृत् विश्ववेदात्मा योऽभिज्ञ कालकालोऽगुणी सर्व्वविद्य प्रधान क्षेत्रज्ञ इति । निर्गुण ससारमोक्षस्थितिबन्ध हेतुरिति ।

ज्योति शास्त्रे,—

भूतानामन्तकृत्काल कालोऽन्य कलनात्मक ।

तस्मात् जन्यकालस्य वासुदेवादीनामपि कलनात् काल परमेश्वर । तस्य सर्व्वकर्म्मारम्भे स्मर्त्तव्यत्वात् तन्निरूपणम् । तथा च स्मरति ।

सर्व्वेषु कालेषु समस्तदेशेष्वशेषकार्य्येषु तथेश्वरेश्वर ।
सर्व्वै स्वरूपैर्भगवाननादिर्ममास्तु माङ्गल्यविवृद्धये हरि ॥

---

(१) संवत्सराश्च कल्पिता इति ।

यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिकम् ।
न्यून सम्पूर्णतां याति सद्यो वन्दे तमच्युतम् ॥ इति ।

परमेश्वरस्य निर्गुणत्वात् कथं तस्य आराधनेत्याशङ्कायामाह ।

निर्गुणो अव्ययः कालो द्वौ तयोराद्यः परेश्वरः ।
सोऽवाङ्मनसगम्योऽपि देही भक्तानुकम्पया ॥ इति

वाशिष्ठरामायणे कालस्वरूपं यथा,—

जटापाशधरः श्रीमान् कुण्डली कवचान्वितः ।
चतुष्षट्कमयोदारवक्त्राष्टकसमन्वितः ॥
मासद्वादशकोद्दामभुजद्वादशकोद्भटः ।
स्वाकारसमया वक्त्रा हृत किङ्करसेनया ॥

इत्यादि यद्यप्यस्ति, तथापि भक्तानुजिघृक्षया स्वीकृतनानामूर्त-त्वेन नानामूर्त्तिधारणम् ।

तथा च भगवद्गीतायाम्,—

यो यो यां यां तनुं भक्तः श्रद्धयार्चितुमिच्छति ।
तस्य तस्याचलां श्रद्धां तामेव विदधाम्यहम् ॥
स तया श्रद्धया युक्तस्तस्याराधनमीहते ।
लभते च ततः कामान् मयैव विहितान् हि तान् ॥
यजन्ते सात्त्विका देवान् यक्षरक्षांसि राजसाः ।
प्रेतान् भूतगणांश्चान्ये यजन्ते तामसा जनाः ॥ इति

अत एव लोकेऽध्यात्मविद्यामोपायं सर्वेऽपि स्वेच्छया एकैकां देवता-मुपासते । तथा च मन्त्रा अपि ईश्वरात्मकत्वात् ।

नानाविधशक्तिमयी सा जयति कालतत्त्वभेदादी ।

भाविभवद्भूतमयं कलयति जगदेव कालोऽत्र ॥

इति भोजराजश्रीवाग्भटवचनेऽपि कालस्य मायाकार्यत्वं सङ्गच्छते । अत्र सरूपार्थे मयप्रत्ययः । प्रारब्धकर्मान्तेऽपि ईश्वर-स्मरणं । न्यूनं सम्पूर्णतां यातीत्युक्तं । तत्समर्पणं च भगवद्गीतायाम् ।

यत्करोषि यदश्नासि यज्जुहोषि ददासि यत् ।

यत्तपस्यसि कौन्तेय तत् कुरुष्व मदर्पणम् ॥ इति ।

पूर्ववदत्रापि च यो यां देवतामुपास्ते, स तत्र समर्पयेच्चेन्न कश्चिद्विरोधः । देवीपूजादौ तथा शिष्टानां समाचाराच्च ।

नित्यकालजन्यकालोत्पत्तिमाह मनुः ।

कालं कालविभक्तीश्च नक्षत्राणि ग्रहांस्तथा ।

सृष्टिं ससर्ज चैवेमां स्रष्टुमिच्छन्निमाः प्रजाः ॥ इति ।

श्रुतिस्तु पूर्वमुदाहृतैव । तत्र जन्यकालेषु निमेषादिपरार्धान्तेषु संवत्सरः प्रधानं, अन्ये गुणभूताः । 'सोऽकामयत द्वितीयो मम आत्मा जायेतेति मनसा वाचं मिथुनं समभवत्तदेतामाश्रित संवत्सरोऽभवत्" इति श्रुतेः ।

एवं नानासमुत्थानाः कालाः संवत्सराश्रिताः ।

अणुश्च महतश्चैव सर्वे समवयन्ति तम् ॥ इति स्मृतेश्च ।

कालस्य जन्यत्वपक्षे चिरक्षिप्रप्रत्ययोपाधिद्वारैव कलयति चाक्षि-पति इत्यर्थः । एवं सामान्यविशेषकालौ निरूपितौ । संवत्सरादि-कालविशेषास्त*द्भूतानि च मत्कृते कालसारे द्रष्टव्यानि । प्रकृतमनुसरामः । तत्रादौ वर्षनिरूपणम् ।

ब्रह्मक्षत्रियविट्शूद्रा वर्णा स्त्वाद्यास्त्रयो द्विजा ।

इति यद्यपि ब्राह्मणक्षत्रादिभिश्चत्वारो वर्णा विभक्ता, तथापि "नन्दान्ता क्षत्रिया मता" इत्यादिवचनात् यथाकथञ्चित्समाधाने ऽपि क्षत्रियाणां वैश्यानाञ्च बहुपुरुषीयशूद्रसम्बन्धेनैव शूद्रत्वादेव ब्राह्मणशूद्रावेव वर्णौ कलौ । यद्यपि ब्रह्मचारि गृहि वानप्रस्थ-भिक्षुरूपाश्चत्वार आश्रमास्तथापि 'देवरेण सुतोत्पत्तिर्वानप्रस्था श्रमग्रह" इत्याद्युक्त्वा "कलौ युगे त्विमान् धर्म्मान् वर्ज्यानाहुर्मनोषिण" इति सारसंग्रहवचनात् ब्रह्मचारिगृहस्थसन्यासि-रूपास्त्रय एव आश्रमा कलौ । तत्राश्रमधर्म्मस्वरूप निरूप्यते ॥

"आदौ गुरौ वसेत् । द्वितीयमायुषो भाग क्रतदारो गृहे वसेत् । वने वसेत्प्रव्रजेत्" । इति विधिचतुष्टयम । तत् यथाग्नि-मादधीतेति विधिविहिताधानजन्यात्मनिष्ठसंस्कार आहिताग्नित्व स च प्रध्वस्ताग्नेरपि तिष्ठति । तत् संस्कारवन्तमेवाधिकृत्य आहिताग्निर्नानृत वदेत् इत्यादयो धर्म्मा । एव गुरौ वसेदिति विधिवशाद् गुरौ वत्स्यामीति य सङ्कल्प, तज्जन्यसंस्कार एव ब्रह्मचारित्वम् । तमधिकृत्यावकीर्णपशवादयो धर्म्मा विधीयन्ते । तस्यावधि समावर्त्तनम् । एव दारकरणोत्तरं गृहे वत्स्यामीति य. सङ्कल्प तज्जन्यसंस्कारविशेष एव गार्हस्थ्यम् । अत एव स्त्रीकरेऽपि संस्कारस'त्त्वाद् गृहस्थ इति तस्य गृहस्थधर्म्माधि-कार' किन्तु पत्नीसहायसाध्यकर्म्मस्वेवानधिकार । तस्य

---

(१) संस्कारवत्त्वात् ।

चावधिर्वानप्रस्थाश्रमपरिग्रहः । एवं वने वत्स्यामीति य सङ्कल्प स्तज्जन्यसंस्कारविशेष एव वनस्थत्वमिति तद्वन्तमेवाधिकृत्य अफालकृष्टाश्नोर्द्धरेतस्त्वादयो धर्म्मा विधीयन्ते इति गृहस्थतन्त्र-स्यानधिकार एव। एतेन वानप्रस्थाश्रमो नाम वनवासादयो धर्म्मा एवेति कैश्चिल्लिखित तन्निरस्तमेवेत्यनुसन्धेयम । एव प्रव्रजिष्यामि, इति य सङ्कल्प, तज्जन्यसंस्कारविशेष एव पारिव्रज्यम् । तद्वन्तमेवाधिकृत्य यतिधर्म्मा । तद्यथा ।

सिद्धमन्नं गृहस्थाय वानप्रस्थाय गोरसम् ।
यतये काञ्चनं दत्त्वा नरक प्रतिपद्यते ॥

इत्यादीनामव्यवस्था स्यात्। स्नातकस्यापि गुरुगृहे वसतोऽव कीर्णप्रायश्चित्तापत्ते । समावर्त्तनानन्तरं तु दारकरणपर्य्यन्तमना-श्रमित्वम् । तस्यैव तथैवानाश्रमे वास इति उपपातकित्वम् ।

"अनाश्रमी न तिष्ठेत दिनमेकमपि द्विज " ।

इति दक्षोक्तिरपि तत्परैव। तस्य तु उपनयनात् पूर्वमिव केषुचित्कर्म्मसु स्नातकधर्म्मेष्वधिकार ।

इत्याश्रमस्वरूपनिरूपणम् ।

तत्र गृहस्थधर्म्मास्तदितरधर्म्माश्चास्मत्कृते संस्कारसारे सविशेषतया द्रष्टव्या । ऐकाश्रम्य तु प्रत्यक्षविधानात् गृहस्थस्येत्युक्तवता च गौतमेन गार्हस्थस्य प्रत्यक्षश्रुतिसिद्धत्वमुक्ताश्रमान्तराणां स्मार्त्त-त्वेन दौर्बल्यमुक्तम् । तन्नित्याचारो लिख्यते । तत्राचारप्रशसा । पराशर,—चतुर्णामपि वर्णानामाचारो धर्म्मपालनम् ।
आचारभ्रष्टदेहाना भवेद्धर्म्म पराङ्मुख ॥

तथा,— देवानाञ्च मनुष्याणां पितॄणाञ्चैव सर्व्वदा ।
तृप्तिं करोति बहुला कर्म्म कुर्व्वन् यथोदितम् ॥

सामान्येनाह मनु,—

यद्यत् परवशं कर्म्म तत् तद् यत्नेन वर्ज्जयेत ।
यद्यदात्मवशं कर्म्म तत्तत् सेवेत यत्नत ॥
सर्व्वं परवशं दुःखं सर्व्वमात्मवशं सुखम् ।
एतत् विद्यात् समासेन लक्षणं सुखदुःखयो ॥
यत्कर्म्म कुर्व्वतोऽस्य स्यात् परितोषोऽन्तरात्मन ।
तत्प्रयत्नेन कुर्व्वीत विपरीतं तु वर्ज्जयेत् ॥

यत्कर्म्म कुर्व्वत इति शास्त्राविरुद्धमित्यर्थ ।

अकुर्व्वन् विहितं कर्म्म निन्दितञ्च समाचरन्[1] ।
अनिग्रहाच्चेन्द्रियाणां नर पतनमृच्छति ॥

इति तदुक्ते ।

शास्त्रविरुद्धेऽप्यपवाद उक्तो याज्ञवल्क्येन ।

कर्म्मणा मनसा वाचा यत्नाद्धर्म्मं समाचरेत् ।
अस्वर्ग्यं लोकविद्विष्टं धर्म्ममप्याचरेन्न तु ॥

अत एव पुण्यपापविवेकवचने विश्वामित्र ।

यमार्य्याः क्रियमाणं हि शंसन्त्यागमवेदिन ।
स धर्म्मो यं विगर्हन्ति तमधर्म्मं प्रचक्षते ॥

आगमवेदिभि क्रियमाणमिति सम्बन्ध । इति

---

(१) समाचरन् ।

तत्र,—

उपनीय गुरुः शिष्यं महाव्याहृतिपूर्वकम्।
वेदमध्यापयेदेनं शौचाचारांश्च शिक्षयेत्॥

इति याज्ञवल्क्योक्ते गुरुशिक्षया धर्मशास्त्रेभ्यः कर्मानुष्ठानम्।
तत्र धर्मप्रमाणानि मनुराह,—

वेदोऽखिलो धर्ममूलं स्मृतिशीले च तद्विदाम्।
आचारश्चैव साधूनामात्मनस्तुष्टिरेव च॥

तथा,—

श्रुतिस्मृत्युचितं[1] धर्ममनुतिष्ठन् हि मानवः।
इह कीर्त्तिमवाप्नोति प्रेत्य चानुत्तमं सुखम्॥

तथा च मनुयाज्ञवल्क्यौ,—

श्रुतिस्तु वेदो विज्ञेयो धर्मशास्त्रन्तु वै स्मृतिः।
ते सर्वार्थेष्वमीमांस्ये ताभ्यां धर्मो हि निर्बभौ॥
योऽवमन्येत ते तूभे हेतुशास्त्राश्रयाद्द्विजः।
स साधुभिर्बहिष्कार्यो नास्तिको वेदनिन्दकः॥

तथा च मनुः,—

अर्थकामेष्वसक्तानां धर्मज्ञानं विधीयते।
धर्मं जिज्ञासमानानां प्रमाणं परमं श्रुतिः॥
श्रुतिद्वैधं तु यत्र स्यात् तत्र धर्मावुभौ स्मृतौ॥
उभावपि हि तौ धर्मौ सम्यगुक्तौ मनीषिभिः॥

---

(१) स्वनुदितम्।

उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुति ॥

यथा,— यस्मिन् देशे य आचार पारम्पर्य्यक्रमागत ।
वर्णाना सान्तरालाना स सदाचार उच्यते ।

ऋग्यजु सामाथर्वरूपश्चतुर्विधो वेद । अखिल साङ्ग । अङ्गानि तु ।

शिक्षा कल्पो व्याकरण निरुक्त छन्द एव च ।
ज्योति शास्त्रञ्च वेदाना षडङ्गानि प्रचक्षते ॥

(१)कल्पपदेन स्मृति मन्वादीना धर्म्मशास्त्रम् ।

याज्ञवल्क्य,—

वक्तारो धर्म्मशास्त्राणा मनुर्विष्णुर्यमोऽङ्गिरा ।
वशिष्ठदक्षसंवर्त्तशातातपपराशरा ॥
आपस्तम्बोशनोव्यासा कात्यायनबृहस्पती ।
गौतम शङ्खलिखितौ हारीतोऽत्रिरहं तथा ॥

अहं याज्ञवल्क्य । अयं तु अष्टादशस्मृतिवक्तृभ्योऽभ्यधिक । अष्टादशस्मृतिवत् मत्प्रणीतधर्म्मशास्त्रं अध्येतव्यमित्यर्थ । तथा उपाष्टादशस्मृतिकृत । तत्र शङ्खापस्तम्बाभ्या प्रचेता उक्त । तत्र यमस्मृतौ । देवल सुमन्तु जैमिनि जमदग्नि प्रजापति विश्वामित्र पैठीनसि-पितामह-बौधायन-छागलेय-जाबाल-च्यवन-मरीचि कश्यप नारद-दक्षा । एते षट्त्रिंशत् ।

---

(१) कल्पपदेन कल्पा कात्यायन आश्वलायनादि सूत्राणि च गृह्यन्ते।

मन्वादिस्मृतयो यास्तु षट्त्रिंशत् परिकीर्त्तिता ।

इति भविष्यपुराणोक्ते । योगियाज्ञवल्क्य-वृद्धमनु-वृद्धशाता-तप प्रभृतीनि तैरेव कृतानि । एतत्-व्यतिरिक्ता या स्मृतय-उपलभ्यन्ते शिष्टपरिगृहीता ऋग ग्रेफ ग्रल पुच्छ-कार्ष्णाजिनि व्याघ्र-कश्व-जातूकर्ण्य-लौगाक्षि-व्याघ्रपाद-गर्ग-गार्ग्य-नाडीजङ्घ पुलस्त्य-पुलह-भृगु-गौतम-शौनक-यज्ञपार्श्व बैजवाप-शाट्यायन-भीष्म-शौनक-भव्यक्रतु कश्यपऋष्य-गोभिलाश्वलायनप्रणीता स्तासा मपि तथा स्मृत्यन्तरेषु चेत्यनेन भविष्यपुराण एव परिगणितानि । शील श्रुति-स्मृति-प्रत्यक्षदृष्टनिषेधव्यतिरिक्तनिषेधपरिपालनं स्वभावकृतम् । यथा भोजनव्यतिरेकेण मया उदकं न पेयमित्यादि । एतदभिप्रेत्य याज्ञवल्क्येनोक्तम् ।

"सम्यक् सङ्कल्पज कामो धर्ममूलमिदं स्मृतम्" इति ।

सम्यक् सङ्कल्पज काम इति सङ्कल्पो निवृत्तसङ्कल्प । तज्जन्यकामो निवृत्तीच्छा । यत्तु भारते ।

अद्रोह सर्वभूतानामित्यादि शीललक्षणम् ।

यच्च हारीतेनोक्तम् । ब्राह्मणता, देवपितृभक्ततेत्यादि तत् सर्वमुप लक्षणमित्यवधेयम् । सता शिष्टानामाचार श्रुतिस्मृतिप्रत्यक्ष दृष्टव्यतिरिक्तधर्म्मानुष्ठानम् । यथा कङ्कणबन्धनादि । चात्मतु-ष्टिश्च विकल्पविषये । यथा

गर्भाष्टमेऽष्टमे वाब्दे ब्राह्मणस्योपनायनम् ।

इत्यादौ इच्छैव नियामिका । निर्वभो नि ग्रेषेण प्रकाशक्त । कदिति इत्यादि दृष्टान्त । सूर्य्यनक्षत्रवर्जित काल , समयाश्रुषित

अरुणकिरणवान् काल उदित । प्रविरलतारकोऽनुदित काल ।
तत्र परस्परविरुद्धकालश्रवणेऽपि सर्वथा विकल्पेन यज्ञोऽग्निष्टोम
प्रवर्त्तते । "उदिते होतव्य" मित्यादिवाक्य वैदिकश्रुति ।
जावालि ,—

श्रुतिस्मृतिविरोधे च श्रुतिरेव बलीयसी ।
अविरोधे सदा कार्य्यं स्मार्त्त वैदिकवत्सदा ॥

तुल्यबलयो श्रुत्यो स्मृत्योर्वा विरोधे गौतम । "तुल्यबलविरोध
विकल्प" इति ।
याज्ञवल्क्य —

पुराण न्याय मीमासा धर्मशास्त्राङ्गमिश्रिता ।
वेदा स्थानानि विद्यानां धर्मस्य च चतुर्दश ॥

मनु ,—

आयुर्वेदो धनुर्वेदो गान्धर्वश्चेति ते त्रय ।
अर्थशास्त्र चतुर्थं तु विद्या ह्यष्टादश स्मृता ।

अर्थशास्त्रम्, नीतिशास्त्रम् ।
भविष्यपुराणे,—

अष्टादश पुराणानि रामस्य चरित तथा ।
विष्णुधर्मादि शास्त्राणि शिवधर्माश्च भारत ॥
कार्ष्णिश्च पञ्चमो वेदो यन्महाभारत स्मृतम् ।
सौराश्च धर्मा राजेन्द्र मानवोक्ता महीपते ॥
जयेति नाम एतेषां प्रवदन्ति मनीषिण ।

विष्णुधर्मोत्तरं विष्णुधर्मस्य भेद इति न पृथक् निर्दिष्टम् ।

भविष्यपुराणे तथा स्मृत्यन्तरेषु चेत्यनेन विष्णुरहस्यशिवरहस्यादि कम्। पारस्करादिगृह्यसूत्राणि पञ्चरात्राणि च परिगृहीतानि। "श्लोका सूत्राणि" इति काण्वपाठा। तत् स्मृत्यन्तरे श्लोक इति प्रामाणिकानां लिखन प्रमाणम्।

प्रतिकञ्चुकरूपेण पूर्वशास्त्रार्थगोचरम।

यदन्यत् कुरुते तस्य धर्म प्रत्यप्रमाणता॥

इति भट्टाचार्य्यादिभिरुक्तत्वात् पौरुष स्मृतिवाक्यसदृश वाक्या न्तर स्मृतिवाक्यपर्य्यालोचनात् पूर्व न प्रमाण तत पर प्रमाणमेव। यथा कालमाधवीयकारिकादि।

योगियाज्ञवल्क्य,—

साङ्ख्य योग पञ्चरात्र वेदा पाशुपत तथा।

अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत्॥

साङ्ख्यस्य वक्ता कपिल परमर्षि स उच्यते।

हिरण्यगर्भो योगस्य वक्ता नान्य पुरातन॥

पञ्चरात्रस्य कृत्स्नस्य वक्ता नारायण स्वयम्।

यच्च भट्टाचार्य्यै साङ्ख्य-योग-पञ्चरात्र-शाक्य-निर्ग्रन्थ इत्या द्युदाहृत्याप्रमाणमध्ये गणित तद्वेदविरोधोपक्रमात् वेदविरुद्ध-वामाचारादिपरं पञ्चरात्रपरमेव। साङ्ख्ययोगस्य तु वैधहिंसानिषेध-प्रतिषेधप्रतिपादनांशेन वेदविरोधादेव तदङ्ग[1] नाप्रामाण्यपरम्। ॐकाराधिकारे योगियाज्ञवल्क्य,—

---

(१) तदंशे।

पञ्चरात्रे स्थितो ह्येष भगवद्वाचक स्मृत ।
पञ्चरात्रार्थकुशलो मातृचक्रविशारद ॥

स भवेत् साधकश्रेष्ठ इति पञ्चरात्रस्य प्रामाण्यमुक्तवानिति सर्वांशे तस्याप्रामाण्यम ।

वराहपुराणे,—

मुक्त्वा तु मम शास्त्र वै शास्त्रमन्यत[1] प्रभाषते ।

तथा,— मम शास्त्र वहिष्कृत्य अस्माकं य प्रपद्यते ॥

इति भागवतापराधे गणित लक्ष्मीधरै । मम शास्त्र मदुक्त पञ्चरात्र शास्त्रमिति व्याख्यात स्मृतिप्रामाण्यप्रसङ्गे भट्टाचार्य्ये । एतेन सामुद्रिकवास्तुविद्यादि व्याख्यातमिति वास्तुविद्याप्रामाण्यम् ।

वराहपुराणे वास्तुविद्यारूपघटनागमप्रामाण्यमुक्तम् । तेन हयशीर्षमयसंग्रहादिघटनाशास्त्राणि पौरुषेया अपि प्रपञ्च-सारशारदादिमन्त्रागमाश्च पञ्चरात्रत्वेन महाजनपरिस्मृता[2] सर्वदेशीयाविगीताचारविषया प्रमाणान्येव ।

पुराणानि यथा,—

ब्राह्म पाद्मं वैष्णव च शैव भागवत तथा ।
तथान्यत् नारदीयञ्च मार्कण्डेय च सप्तमम् ॥
आग्नेयमष्टमञ्चैव भविष्यं नवम स्मृतम् ।
दशम ब्रह्मवैवर्त्त लैङ्गमेकादश स्मृतम ॥

---

(१) मम शास्त्राणि शास्त्रमन्यत् ।

(२) महाजनपरिगृहीता ।

वाराहं द्वादशञ्चैव स्कान्दञ्चैव त्रयोदशम् ।
चतुर्दशं वामनञ्च कौर्मं पञ्चदशं स्मृतम् ॥
मात्स्यञ्च गारुडञ्चैव ब्रह्माण्डञ्च ततः परम् ।

तथा,--

नन्दाया यत्र माहात्म्यं कार्त्तिकेयेन वर्ण्यते ।
नान्दीपुराणं तल्लोके नन्दाख्यमिति चोच्यते ॥

तच्च स्कान्दैकदेशः ।

यत्र साम्बं पुरस्कृत्य भविष्येऽपि कथानकम् ।
प्रोच्यते तत् पुनर्लोके साम्बमेव मुनिव्रते ॥
एवमादित्यसञ्ज्ञा च तत्रैव पठ्यते तथा[1] ।
अष्टादशेभ्यस्तु [2]तथा पुराणं यत्तु दृश्यते ।
विजानीध्वं मुनिश्रेष्ठास्तदेतेभ्यो विनिर्गतम् ॥

यथा कालिकापुराणादीनि लक्ष्मीधर । तेन भगवत्या इदं भागवतं कालिकापुराणमिति ये वदन्ति ते निरस्ताः । यच्चापरं प्रसिद्धभागवतभिन्नं पुराणान्तरं भागवतं शङ्कन्ते, यच्च वायुपुराण-देवीपुराणादि तदप्येतेषु अन्तर्गतम् । भविष्योत्तरं भविष्यपुराणस्यैकदेशः । कूर्मपुराणे, उपपुराणान्यष्टादशोक्तानि ।

अन्यान्युपपुराणानि मुनिभिः कथितानि[3] वै ।
अष्टादशपुराणानि श्रुत्वा संक्षेपतो द्विजाः ॥

---

(१) परिपठ्यते ।

(२) पृथक् ।

(३) कथितानि ।

इत्युक्ता गणितम। नारसिंह, नन्दिपुराण, शिवधर्माख्य, दुर्वास पुराण तदष्टादशोपपुराणान्तर्गतमेव। न्यायपद न्याय वैशेषिकपरम्। मीमांसापदेन पूर्वोत्तरमीमांसे। धर्मशास्त्रादी न्युक्तानि।

मनु,—अनाम्नातेषु धर्मेषु कथं स्यादिति चेद्भवेत्।

य शिष्टा ब्राह्मणा ब्रूयु स धर्म स्यादशङ्कित ॥
धर्मेणाराधितो यैस्तु वेद सपरिबृंहण ।
ते शिष्टा ब्राह्मणा ज्ञेया श्रुतिप्रत्यक्षहेतव[१] ॥
दशावरा वा परिषद् य धर्म परिकल्पयेत्।
त्र्यवरा वापि वृत्तस्था त धर्म न विचालयेत्।
एकोऽपि वेदविद्धर्म य व्यवस्येद्द्विजोत्तम ॥
स विज्ञेय परो धर्मो नाज्ञानामुदितोऽयुतै ।
प्रत्यक्षमनुमानञ्च शास्त्रञ्च विविधागम ॥
त्रय सुविदित कार्य्य धर्मशुद्धिमभीप्सता ॥

तथा,— आर्ष धर्मोपदेशञ्च वेदशास्त्राविरोधिना।
यस्तर्केणानुसन्धत्ते स धर्म वेद नेतर ॥

तर्कोऽत्र मीमांसा।

तथा दक्ष,—

उक्त कर्म्म क्रमो नोक्तो न काल स्वत एव हि।
द्विजानान्तु हितार्थाय दक्षस्तु स्वयमब्रवीत् ॥

---

(१) हेतुत ।

प्रातरुत्थाय यत् कर्म्म यद्विजेन दिने दिने ।
तत्सर्वं सम्प्रवक्ष्यामि द्विजानामुपकारकम् ॥
उदयास्तमयं यावत् न विप्र क्षणिको भवेत् ।
नित्यनैमित्तिकैर्युक्तः काम्यैश्चान्यैरगर्हितैः ॥
स्वकं कर्म्म परित्यज्य यदन्यत् कुरुते द्विजः ।
अज्ञानादथवा लोभात् स तेन पतितो भवेत् ॥

तथा,—

दिवसस्याद्यभागे तु कृत्यं तस्योपदिश्यते ।
द्वितीये च तृतीये च चतुर्थे पञ्चमे तथा ॥
षष्ठे च सप्तमे चैव अष्टमे च पृथक् पृथक् ।
विभागेष्वेषु यत्कर्म्म तत्प्रवक्ष्याम्यशेषतः ॥
नैमित्तिकानि कार्य्याणि निपतन्ति यदा यदा ।
तदा तदा तु कार्य्याणि न कालस्तु विधीयते ॥

यत उक्तं कर्म्म सन्ध्यादिभिः । क्रमकालावपि नोक्तावेव । ततो दक्ष्यः काल क्रम च स्वयमब्रवीत् । "दिवसस्याद्यभागे तु" इत्यादिना, तदनुष्ठानकर्म्मणां क्रमो विधीयते । 'द्वितीये च तथा भागे वेदाभ्यासो विधीयते" इत्यादौ वक्ष्यमाणवचने क्रमवतां स्वरूपमव गम्यते । वक्ष्यमाणवचने कालविधिरपि । नित्यकर्म्मणामष्टधा विभागेनैव काल उक्तः । "नैमित्तिकेषु कार्य्येषु[1] न कालस्तु विधीयते" इति न तेषु कालनियमः । तत्सत्पतनायैव[2] तेषां

(१) कार्य्येषु । (२) पतन एव ।

कारण। अत्र दिवसस्याद्यभाग इति वचनात्। उदयास्तमयं यावदिति वचनाच्च दिवसस्यैवाष्टधा विभाग। न तूष काल प्रदोषप्रवेशेनाष्टधा विभाग।

अष्टमे लोकयात्रा तु बहि सन्ध्या तत परम्॥

इति अष्टमभागानन्तर सन्ध्याया उक्ते। प्रातरुत्थाय कर्त्तव्यमिति वचनेन सर्वेषामेवादावेव प्रतिज्ञानात्।

"उष काले तु सम्प्राप्ते शौच तत्र विधीयते"

इति उष कालादिषु कर्म्मविधानं प्रतिज्ञातमित्यवधेयम्। एव च सति "यामद्वय शयान इति अष्टधाभागभिन्नाया रात्रे कर्म्म-कथनमपि सङ्गतम्। तेन दिवसस्याद्यभाग इत्यत्र दिवसशब्दो-ऽजहत्स्वार्थलक्षणया उष कालादिप्रदोषपर्य्यन्तपर इति केषा-ञ्चिन्मत निरस्तम्।

तत्र निमित्तोद्देशेन विहित कर्म्म नैमित्तिकम्। तन्मध्ये नियतनिमित्तक यत्तन्नित्यमुच्यते। 'यावज्जीवमग्निहोत्र जुहुयात्" "अहरह सन्ध्यामुपासीत" इत्यादि नित्यं नियतनिमित्तत्वात्। एवममावास्याश्राद्धअष्टम्येकादशीव्रतादीनि नित्यानि। सर्वा-ण्येतानि तत्र तत्र वक्ष्यन्ते।

तत्र संग्रहकारिका,—

नित्य सदा यावदायु वीप्सायोग फलाश्रुति।
प्रत्यवायोऽश्रुतत्यक्तेत्यष्टौ नित्यत्वबोधका॥

ग्रहदाहे क्षामवत्या यजेत, रविसंक्रमणे स्नायात्, इत्यादीनि नैमित्तिकानि अनियतनिमित्तत्वात्।

भविष्यपुराणे,—

फलं विनाप्यनुष्ठानं नित्यानामिष्यते स्फुटम् ।
काम्यानां स्वफलार्थं तु दोषघातार्थमेव[1] तु ॥
नैमित्तिकानां करणे त्रिविधं कर्म्मणां फलम् ।
क्षयं केचिदुपात्तस्य दुरितस्य प्रचक्षते ॥
अनुत्पत्तिं तथा चान्ये प्रत्यवायस्य मन्यते ।
नित्यक्रियां तथा चान्ये अनुसङ्गफलाम्श्रुतिम्[2] ॥

फलं विना स्वर्गादिकाम्यफलं विना । विद्यमानादियज्ञानां यथा पापक्षयार्थं नैमित्तिकानामप्यत्र नैमित्तिकपदं निमित्तविहितत्व साम्यान्नित्यनैमित्तिकोभयपरम । क्षय केचिदुपात्तस्येति उपात्तदुरितक्षय एव फलम ।

गौतम ,—

अशक्तौ मनसाप्येनमाचारमनुपालयेत ।

सामर्थ्ये तु —

प्रभु प्रथमकल्पस्य योऽनुकल्पेऽनुवर्त्तते ।
न सांपारयिकं तस्य दुर्मतेर्विद्यते फलम ॥

इति व्यायाम फलं न वा प्रत्यवायपरिहार इति मण्डनाचार्य्याः ।

मुख्यकाले यदावश्यं कर्म्म कर्त्तुं न शक्यते ।
गौणकालेऽपि कर्त्तव्यं गौणोऽप्येतादृशो मत ॥

(१) दोषघातार्थमेव च ।
(२) अनुषङ्गफलाम्श्रुतिम ।

प्रारब्ध काम्यऽङ्गहानौ तु यस्तूपेत्य न यथार्थ करोति, असमाप्तौ विरमेत् तत्राग्नेयोविधिश्चान्द्रायण चेति[1]। काले प्रारब्धस्य देवात्कालातिक्रमेऽकालेऽपि समापनम। काम्येष्वेवाधिकारिता। योगियाज्ञवल्क्य,—

अज्ञानादथवा मोहात् प्रच्यवेताध्वरेषु यत्।
स्मरणादेव तद्विष्णो सपूर्ण स्यादिति स्मृति ॥

स्कान्दे,— यस्य स्मृत्या च नामोक्त्या तपोयज्ञक्रियादिषु।
न्यूनं सम्पूर्णतां याति सद्यो वन्दे तमच्युतम ॥

अन्यच्च,—

वेदोदिताना नित्याना कर्म्मणा समतिक्रमे।
स्नातकव्रतलोपे च प्रायश्चित्तमभोजनम ॥

इद सामान्यत ।

यत्र यत्र विशेषस्तु तत्र तत्र च वक्ष्यते।

तत्र नित्यकर्म्मणां नानाफलसम्बन्धेऽपि सर्व्वेऽविशेषादिति जैमिनीययोगसिद्ध्यधिकरणन्यायेन एकस्मिन् प्रयोगे एकमेव फलम्। नित्यकाम्यकर्म्मणो, काम्ये कृते नित्यमनुष्ठित स्यात् इति न्यायेन सकृदेवानुष्ठानम्। सर्व्वकर्म्मारम्भे प्रणवोच्चारण यथाह,

आपस्तम्ब,—

तस्मादोमित्युदाहृत्य यज्ञदानतप क्रिया।
प्रवर्त्तन्ते विधानोक्ता सतत ब्रह्मवादिनाम ॥

(१) चेति।

निमन्त्रणं प्रयोक्तव्यं कर्म्मारम्भेषु सर्व्वश ।
तिस्र सार्द्धास्तु कर्त्तव्या मात्रास्तत्त्वार्थचिन्तकै ॥
देवावाहनकालेषु[1] प्लुतं कुर्य्यात्र सर्व्वथ ।

तद्वचनं कालनिर्णये लिखितम् । तत्र रात्रेश्चतुर्थप्रहरे शयनादुत्थानम् । तत्रादौ नारायणं नमस्कुर्य्यात् ।

वामन पुराणे,—

सर्व्वमङ्गलमाङ्गल्यं वरेण्यं वरदं शिवम् ।
नारायणं नमस्कृत्य सर्व्वकर्म्माणि कारयेत् ॥

अपवित्र पवित्रोवा इत्याद्युक्ते ।

अन्यत्र, यथाशक्तिकृतैरङ्गैरपि नित्य प्रसिध्यति ।
सर्व्वाङ्गानां तु सम्पत्तौ काम्येष्वेवाधिकारिता ।
नमोऽस्तु प्रियदत्तायै तव चेति दिने दिने ॥
भूमिमाक्रमते प्रात शयनादुत्थितश्च य ।
स सर्व्वकामसम्पन्न सुखं याति यमालयम् ॥

इति मन्त्रं पठित्वा शय्यायां उत्थाय भूमौ पादौ न्यसेत् ।

"रात्रिवास परित्यज्य शुद्धं तत्रैव चिन्तये"दिति ब्रह्मवैवर्त्तोक्तेन वस्त्रान्तरं परिधाय सान्तादि प्रोक्षण पादप्रक्षालनाचमनादिशुद्धिं विदध्यात् । तदनन्तरम्,—

अज्ञानतिमिरान्धस्य ज्ञानाञ्जनशलाकया ।
चक्षुरुन्मीलित येन तस्मै श्रीगुरवे नम ॥

(१) देवताह्वानकाले तु ।

इति पठित्वा मनसा गुरु नमस्कुर्य्यात् ।

अपवित्र पवित्रोवा सर्व्वावस्था गतोऽपि वा ।
य स्मरेत्पुण्डरीकाक्षं सवाह्याभ्यन्तर शुचि ॥

इत्युक्ते विष्णुस्मरणेनैव शुचित्व सपाद्य वस्त्रान्तरपरिधान विनापि नामकीर्त्तन कुर्व्वन्ति ।

शयनादुत्थितो यस्तु कीर्त्तयेन्मधुसूदनम ।
कीर्त्तनात्तस्य पापानि नाशमायान्त्यशेषत ॥

इति वचनान्मधुसूदननामकीर्त्तन कुर्यात् ।

यदुत्साहादिक कर्म्म यत्त्वया[1] प्रेरितो हर ।
करिष्यामि त्वदाज्ञायामिति विज्ञापन मम ॥
साधु वासाधु वा कर्म यद् यदाचरित मम ।
तत्सर्व भगवन विष्णो गृहाणाराधनं परम् ॥
प्रात प्रबोधितो विष्णो हृषीकेशेन यत्त्वया ।
यद् यत्कारयसीशान तत्करोमि तवाज्ञया ॥

त्रैलोक्यचैतन्यमयादिदेव,
श्रीनाथ विष्णो भगवन् प्रसीद ।
प्रात समुत्थाय तव प्रियार्थं
ससारयात्रामनुवर्त्तयिष्ये ॥
ससारयात्रामनुवर्त्तमान
तवाज्ञया श्रीनृहरेऽन्तरात्मन् ।

---

(१) तत्र ।

स्वर्गातिरस्कारकलिप्रमाद
भयानि मा नाभिभवन्तु भूमन् ॥
जानामि धर्मं न च मे प्रवृत्ति
र्जानाम्यधर्मं न च मे निवृत्तिः ।
केनापि देवेन हृदिस्थितेन
यथा नियुक्तोऽस्मि तथा करिष्ये ॥

इति करिष्यमाणसवकर्मणां भगवत्समर्पणम् ।

दक्षः —

प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।

इति वाक्यादयोऽभ्यसनीयः ।

ब्राह्मे मुहूर्ते बुध्येत धर्मार्थौ चानुचिन्तयेत् ।
चिन्तयेत् कायक्लेशांश्च वेदतत्त्वार्थमेव च ॥

ब्राह्मे मुहूर्ते रात्रेः पश्चिमो याम इति स्मृतिरत्नमालायाम् ।

तथा चाङ्गिरा —

उत्थाय पश्चिमे यामे रात्रेराचम्य चोदकमित्यादि ।

रात्रेस्तुरीययामस्य मुहूर्तो यस्तृतीयकः ।
स ब्राह्म इति विज्ञेयो विहितः संप्रबोधने ॥

इति प्रयत्नस्य पश्चान्तरम् ।

विष्णुपुराणे —

ब्राह्मे मुहूर्ते स्वस्थे च मानसे मतिमान्नृप ।
विबुद्धश्चिन्तयेद्धर्ममर्थं तदविरोधिनम् ॥

अपीडया तयोः काममम् । इति तत्र किञ्चिद्वेदाभ्यासस्यानु

छानाय धर्मार्थकामान सोपायान् परस्पराविरोधेन विचिन्त्य वेदतत्त्वार्थस्य ब्रह्मणो ध्यानं कार्य्यम् । अतएव ब्रह्मणोऽय ध्यानी पथिक इति ब्राह्मसंज्ञा । निराकारध्यानाशक्तस्य विष्णोर्ध्यानम । शक्तन योगाभ्यासोऽपि कार्य्यं ।

इज्याचारदमाहिंसादानस्वाध्यायकर्म्मणाम ।
अय तु परमो धर्मो यद्योगेनात्मदर्शनम ॥

इति याज्ञवल्क्योक्त —

सतत कीर्त्तयन्तो मा यजन्तश्च दृढव्रता ।
नमस्यन्तश्च मां भक्त्या नित्ययुक्ता उपासत ॥

इति भगवदुक्त ।

यन्नामकीर्त्तनं पसां विलायनमनुत्तमम ।
मैत्रयाशेषपापानां धातूनामिव पावक ॥

इति विष्णुपुराणोक्तेश्च । तथा —

यस्मिन्न्यस्तमतिर्न याति नरकं स्वर्गोऽपि यच्चिन्तने ।
विघ्नो यत्र निवेशितात्ममनसो ब्राह्मोऽपि लोकोऽल्पक ।
मुक्तिं चेतसि य स्थितो 'शु सुधिया पसां ददात्यव्ययम् ।
किं चित्र यदघ प्रयाति विलय तत्राच्युते कीर्त्तिते ॥

विष्णुधर्म्मोत्तरे —

ध्यायन् कृते यजन् यज्ञैस्त्रेतायां द्वापरेऽर्च्चयन् ।
यदाप्नोति तदाप्नोति कलौ संकीर्त्त्य केशवम् ॥

(१) स्थितोऽमलधियाम ।

विष्णुधर्म्मे —

नामसंकीर्त्तनं विष्णोः क्षुत्प्रस्खलितादिषु[1] ।
यः करोति महाभाग तस्य तुष्यति केशवः ॥
कलेर्दोषनिधे राजन्नस्ति ह्येको महान् गुणः ।
कीर्त्तनादेव कृष्णस्य मुक्तबन्धः परं व्रजेत् ॥

विष्णुपुराणे —

अवशेनापि यन्नाम्नि कीर्त्तिते सर्व्वपातकैः ।
पुमान् विमुच्यते सद्यः सिंहत्रस्तैर्मृगैरिव ॥

अपि च । सांकेत्यं पारिहास्यं वा स्तोभं हेलनमेव वा ।
वैकुण्ठनामग्रहणमशेषाघहरं विदुः ॥

तेन भक्तिश्रद्धातिरेकेणापि नामकीर्त्तनमात्रादेव पापक्षयः ।

यावज्जीवं प्रणवमथवा व्याहृतिर्द्धोष्य वा ।
यावुर्वेद्यं वसतिमथवा[2] वाराणस्यां विदध्यात् ॥
गङ्गा स्नाता कलिमलमुषकल्पदत्तानीरवेला ।
विष्णोर्नामाम्यभिजपभवतप्रोक्तिरेषा चतुर्धा ॥

इति, देवेन्द्रदयालेन । अत्र नामकीर्त्तनस्य मुक्तिहेतुत्वं तत्त्वज्ञानद्वारा ज्ञानोत्पादकत्वेन ।

चक्रायुधस्य नामानि सदा सर्व्वत्र कीर्त्तयेत् ।
नाशौचं कीर्त्तने तस्य स पवित्रकरो यतः ॥

---

(१) क्षुतप्रस्खलितादिषु ।
(२) वाराणस्याम् ।

इति वचनात् । अशौचेऽपि नामकीर्त्तनम् ।

नारसिंहे —

इति संकीर्त्तिते विष्णोर्नारकैर्भक्तिपूर्व्वकम् ।
नारकी यातना सर्व्वास्तदा नष्टाश्च तत्‌क्षणात् ॥

अत्यन्ताशुचीनां नारकिणामपि अधिकारः ।

यद्वा नृसिंहकल्पे —

यदि स्यादशुचिस्तत्र शरीरार्थं न उच्चरेत् ।
मन्त्रो हि सर्व्वजन्तूनां सर्व्वदैव शुचिः स्मृतम् ॥

लेपाद्यशौचे सूतकादौ चैवेति व्यवस्था । अतेन नाशुचिर्द्दर्षि पितृनामानि नतूच्चरेदिति लेपाशौचविषयम् । तथा च "सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्व्वकर्मसु" इत्युक्तदोषप्रसङ्गोऽपि नास्ति ।

औषधे चिन्तयेद्विष्णुं भोजने च जनार्द्दनम् ।
शयने पद्मनाभञ्च मैथुने च प्रजापतिम् ॥
सङ्ग्रामे चक्रिणञ्चैव प्रवासे च त्रिविक्रमम् ।
नारायणं तनुत्यागे श्रीधरं प्रियसङ्गमे ॥
दुःस्वप्ने स्मर गोविन्दं विपत्तौ मधुसूदनम् ।
कानने नरसिंहं तु पर्व्वते रघुनन्दनम् ॥
जलमध्ये वराहं च पावके जलशायिनम् ।
मायासु वामनं देवं सर्व्वकार्य्ये च माधवम् ॥
इति षोडश नामानि प्रातरुत्थाय यः पठेत् ।
सर्व्वकार्य्यमवाप्नोति विष्णुलोकं स गच्छति ॥

एवमादीनां तत्कालविधानादेव नाशौचदोषः ।

तन्नास्ति कर्मजं लोके वाग्जं मानसमेव च ।
न क्षीयते कलौ यत्तु गोविन्दनामकीर्त्तनात् ॥
सकृदुच्चारयेद्यस्तु जगन्नाथेति हेलया ।
ब्रह्महत्यादिपापेभ्यो मुच्यते नात्र संशयः ॥
जगन्नाथेति यन्नाम कीर्त्तयिष्यन्ति ये नराः ।
अपराधशतं तेषां क्षमिष्ये नात्र संशयः ॥

एवमादीनि विष्णुनामानि बहुकीर्त्तनीयानि तथा यो देवो यस्येष्टः स तन्नामकीर्त्तनमृषिकीर्त्तनमपि कुर्य्यात्। ब्राह्मे मुहूर्त्ते बुध्येत स्मरेद्देववरानृषींश्चेत्युक्तेः । तद्विस्तरभयान्न लिख्यते।

तदेव नामकीर्त्तनरूपाणि स्नानसन्ध्याद्यधिकारसम्पादनानपेक्षणात् शयनादुत्थानमात्रेण कर्त्तव्यानि। यानि तु स्तोत्ररूपाणि जपरूपाणि वा प्रातरुत्थाय कर्त्तव्यत्वेन विहितान्यपि तानि स्नातोऽधिकारी भवति दैवे पैत्रे च कर्मणि। सन्ध्याहीनोऽशुचिर्नित्यमित्यादिवाक्यात् सन्ध्योत्तरकार्य्याणि।

उत्थानानन्तरमात्रकर्त्तव्ये तु लेपाशौचापनयनवस्त्रपरिवर्त्तनादि व्यवधानस्यापि दोषत्वापत्तेः । न हि तादृशसन्देहव्युदासाय पृष्ठ सवनीयेन[1] यजेरन्नित्यादि कालाशौचाद्यनादरेणानन्तर्यमाद्रियते ॥

१) अस्पृश्यनिरासाय पुरोडाशनीयेन ।

## अथ प्रात काले दर्शनीयादर्शनीयानि ।

कात्यायन —

पापिष्ठ दुर्भगां मद्य नग्नमुत्कृत्तनासिकम ।
प्रातरुत्थाय य पश्येत्तत्कलेरुपलक्षणम ॥
श्रोत्रिय सुभगाङ्गाश्च अग्निमग्निचित तथा ।
प्रातरुत्थाय य पश्यदापद्भ्य स प्रमुच्यते ॥
कल्यमुत्थाय यो मर्त्य सस्पृशेद्गा घृत दधि ।
सर्षपाश्च प्रियङ्गुश्च कल्मषात् स प्रमुच्यत ॥

प्रातरुत्थायेति वचनात् स्पर्शे उषसि स्नानाद्यनपेक्षेति कश्चित् । वस्तुतस्तु स्नानादिशुद्ध्यनन्तर स्पर्शनम् । तथाचारस्य दर्शनात् ।

एतदस्मत्पितामह कृष्णहरपण्डितमहापात्रकृते नीतिरत्नाकर लिखितमनुसन्धेयम । विष्णुपुराणे —

प्रभाते मैथुने होमे प्रस्रावे दन्तधावने ।
स्नानभोजनजप्येषु मौन चैवाष्टकर्मसु ॥

कर्मोपयुक्तपठनीयवाक्यव्यतिरिक्तशब्दानुच्चारण मौनशब्दार्थ ।

मौनकालमाहाचार्य —

सन्ध्ययोरुभयोर्जप्ये भोजने दन्तधावने ।
पितृकार्ये च दैवे च तथा मूत्रपुरीषयो ॥
तत कल्य समुत्थाय कुर्यान्मैत्र नरेश्वर ।
नैऋत्यामिषुविक्षेपमतीत्याप्यधिक भुव ॥

मैवं विड्भिरम । निशोऽपाने समाश्रित इति वाक्यात् । अत्र देशकालनियम पुरुषार्थोऽपि नित्यकर्ममध्यपाठात् दुरितक्षय फलश्च न परिसंख्यातदोषदुष्टत्वात् । अतएव देवलेन —

सदैवोदङ्मुख प्रात सायाह्ने दक्षिणामुख ।
विसृजन्मूत्रविष्ठे नित्यं सन्ध्यासु परिवर्जयेत् ॥

इति सन्ध्याकाले निषेध श्रूयते । एवं चान्यकालिकरणे दोषाभाव । सन्ध्यायामप्यावेगे कार्यम् । स्नानाद्येव महासुरता इति शब्दाश्रयावस्थानश्रुतत्वाविगवारत्वेनाशौचापादकत्वात् । नाद्यपि क्षणमपि तिष्ठेदिति शौचस्य विधयत्वेनावशे सति सन्ध्यायामुत्सर्गस्य विहितत्वान्न निषेधविषयत्वम् । आपस्तम्ब दूरादवसथान्मूत्रपुरीषे कुर्यात् दक्षिणां दिशं गत्वेति शेष । अस्तमिते बहिर्ग्राममाराद्वसथान्मूत्रपुरीषे वर्जयेत् । आराद्दूरे ।

मनु —

तिरस्कृत्योच्चरेत्काष्ठ पत्रं लोष्ट तृणानि च ।
नियम्य प्रयतो वाचं संवीताङ्गोऽवगुण्ठित ॥

विष्णुपुराणे नयश्रीयैस्तर्वैरित्यादि ।

दिवा सन्ध्यासु कर्णस्थब्रह्मसूत्र उदङ्मुख ।
कुर्यान्मूत्रपुरीषे च रात्रौ च दक्षिणामुख ॥

हारीत — प्रावरणे वेष्टयित्वा मूर्धानं शौचायाभासन्य दक्षिणबाहुपार्श्वे कमण्डलुमाधायोत्सर्ग कुर्यात् । प्रावरणं ऽत्र वस्त्रादिना । संख्यानवस्य यज्ञकर्णे यज्ञोपवीत कर्णे दत्वा, एतेनात्र उत्तरीयनियम । मिश्रनीलम्बरपुष्पी ।

वायुपुराणे —

शुष्कतृणैर्वा काष्ठैर्वा पत्रैर्वेणुदलेन वा ।
मृण्मयैर्भाजनैर्वापि अन्तर्धाय वसुन्धराम् ॥

यम —

प्रत्यङ्मुखस्तु पूर्व्वाह्ने अपराह्ने पराङ्मुख ।
उदङ्मुखस्तु मध्याह्ने निशायां दक्षिणामुख ॥

अतएव व्यवस्था ।

देवलवचनात् त्रिमुहूर्त्तात्मकप्रात सायकालयोर्दक्षिणामुखत्वम् । यमस्मृते त्रिमुहूर्त्तादूर्द्ध पूर्व्वाह्नघटिकाद्वये प्रत्यङ्मुखत्वम् । पूर्व्वाह्नत्रिमुहूर्त्ताधोघटिकाद्वये प्राङ्मुखत्वम् । रात्रौ दक्षिणामुखत्वमित्यादि ।

याज्ञवल्क्य —

न प्रत्यग्न्यर्कगोसोमसन्ध्याम्बु स्त्रीद्विजन्मन ।
एतेषामुक्तगोऽभिमुखत्वञ्च ।
यम प्रतपक्षानमेव च ।

मनु —

छायायामन्धकारे वा रात्रावहनि वा द्विज ।
यथासुखमुख कुर्य्यात्प्राणबाधभयेषु च ॥
न मूत्रं पथि कुर्वीत न भस्मनि न गोव्रजे ।
न फालकृष्टे न जले न चित्यां न च पर्वते ॥
न जीर्णदेवायतने न वल्मीके कदाचन ।
न ससत्त्वेषु गर्त्तेषु न च गच्छन्नपि स्थित ॥

गमननिषेधात् प्रस्रावस्यापि निषेध उपविष्ट एव कुर्यादित्यर्थ ।

न नदीतीरमासाद्य न च पर्वतमस्तके ।

पुन पर्व्वतमस्तकनिषेधो दोषातिशयार्थ

देवल —

वापीकूपनदीगोष्ठचैत्याम्भ पथिभस्मसु ।

वल्मीकाख्ये श्मशाने वा विण्मूत्र न समाचरेत् ॥

चैत्यो ग्रामप्रसिद्धो वृक्ष काम्य कमनीयप्रदेश ।

यम —

पल्वलानि तडागानि नदीप्रस्रवणानि च ।

न च गोमयभस्मानि फालकृष्ट च वर्जयेत् ॥

तुषाङ्गारकपालानि देवतायतनानि च ।

राजमार्गश्मशानानि क्षेत्राणि च खलानि च ॥

उपरुद्धा न सेवेत छाया वृक्षस्य चतुष्पथम् ।

वृक्ष शोभितम् ।

उदक चोदकान्त च पन्थान परिवर्जयेत् ।

वर्जयेत् वृक्षमूलानि चैत्यश्वभ्रविलानि च ॥

राजमार्गचतुष्पथनिषेधो दोषातिशयार्थ ।

हारीत —

न चत्वरोपचारयोर्मूत्रपुरीषे कुर्यात् ।

न तीर्थे न शस्यपूर्णे न यज्ञभूमौ यज्ञीयानां वृक्षाणामधस्तात्।

तीर्थ जलावतरणमार्ग ।

वशिष्ठ गोसेन ग्रावच्छोपजीव्यच्छायासु ।

प्राङ्गणो हरितस्निग्धो भूप्रदेश[१] स्वां छायां प्रतीति शेष ।
नोषरे न पराशुचौ तथा नाकाशे । आकाशे अट्टालिकादौ ।

यथाकाश स्मृतो भौमस्तस्मात्संवृते क्वचित् ।
कुर्यान्मूत्र पुरीष वा न भुञ्जीत स्वपन्न च ॥

इति वायुपुराणवचनादसंवृतदेश एव आकाश ।
आपस्तम्ब —

स्वाश्च न मेहेत न सोपानत्को मूत्रपुरीष कुर्यात स्वा छाया प्रतीति शेष ।

विष्णुपुराण —उत्सर्गे वै पुरीषस्य मूत्रस्य च विसर्जने ।

तिष्ठेन्नातिचिरात[२] तत्र न च किञ्चिदुदीरयेत ॥

यम —न पश्येदात्मन शकृत् ।

दृष्ट्वा सूर्य निरीक्षेत गामग्निं ब्राह्मणास्तथा ।

एतच्च शौचानन्तरं —

इष्टतामशुचिनिस्त्वमह्नि प्राणानुपस्पृशेत् ।
गात्राणि चैव सर्वाणि नाभि पाणितलेन तु ॥

इति मत्स्ये ।

सूर्यादिदर्शने मनुना प्रायश्चित्तस्योक्तत्वात् कामतोऽधिक प्रायश्चित्तम ।

तैलाभ्यङ्ग तथा वान्त मैथुने क्षुरकर्मणि ।
मूत्रोच्चारे नर कृत्वा पञ्चगव्येन शुध्यति ॥

इति शिष्टा ।

(१) भूभाग । (२) नातिचिरम ।

## शौचम् ।

याज्ञवल्क्यः —

गृहीतशिश्नश्चोत्थाय मृद्भिरभ्युद्धृतैर्जलैः ।
गन्धलेपक्षयकरं शौचं कुर्यादतन्द्रितः ॥

देवलः —

अशौचाच्चोत्सृजेच्छिश्नं प्रक्षाल्योच्चारयोः स्वयम् ।

अन्यत्रोपविश्य शौचं कुर्यादित्यर्थः शिश्नधारणं वामहस्तेन धर्मविद्दक्षिणं हस्तमित्याद्यक्तं ।

हारीतः —

गुदं लोष्ठेन प्रमृजीत शुष्कक्ताष्ठेन वा ।

आपस्तम्बः अश्मानं लोष्ठमार्द्रौषधीन् वनस्पतीन् दूर्वामाच्छि मूत्रपुरीषयोः शोधने वर्जयेत् । गौतमेन पर्णेन निघर्षणं निषिद्ध व्यासः —अश्ममूलफलाङ्गारैरस्थ्नाच्चाथाचावर्द्धिना ।

एवं शुष्ककाष्ठेन गुदमार्जनं तदभावे अश्ममूलफलाङ्गारादि कुशार्द्रौषधिवनस्पतिदूर्वालोष्ठव्यतिरिक्तेन द्रव्येण तदभावे लो गुदमार्जनं ।

लोष्ठस्य विहितनिषेधात् विकल्पः ।

ब्राह्मे —उद्धृतोदकमादाय मृत्तिकां चैव वाग्यतः ।
उदङ्मुखो दिवा कुर्याद्रात्रौ चेद्दक्षिणामुखः ॥
आहरेत् मृत्तिकां विप्रः कूलात्ससिकतां तथा ।
नाखक्षुष्टाच्च वल्मीकाच्च फालाच्च च कर्दमात् ॥
न मार्गाच्चोषराच्चैव शौचशिष्टात्परस्य च ।

कुर्यादित्यत्र शौचमित्यध्व ।

विष्णुपुराणे —मृदस्तजलास्तथा

शौचावशिष्टां शौचाय न दद्यात् लेपसम्भवाम ।

भक्त प्राक्षवपत्रां[1] च हलोत्खाता च पार्थिव ॥

शातातप —शुची देशे तु सग्राह्या शर्कराश्म विवर्जिता ।

रक्ता गौरास्तथा श्वेता मृत्तिकास्त्रिविधा स्मृता ॥

न मृद गोदक चापि निशाया न च गोमय ।

न गोमूत्र प्रदोष च ग्रह्णीयाद्बुद्धिमान्नर ॥

अशुचिशङ्कया तु शिष्टा

अष्टाङ्गुलानि खानित्वा उद्धरेत्तु मृद तत ।

वामहस्तेनाथ शौच कार्य्यम् ।

तथाच शिष्टा —

धर्म्मविद्दक्षिण हस्तमध शौच न याजयेत् ।

तथैव वामहस्तेन नाभेरूर्द्ध न शोधयेत् ॥

पर तु वालुकामयादिदेशे सर्वथा मृत्तिकाऽसम्भव शौचलोपापत्तौ

गुणलोपन मुख्यस्य चेति—

यस्मिन् देशे च यत्तोय या भूमिया च मृत्तिकेति ।

मन्वाद्युक्तानुरोधाच्च यथाकथञ्चित् मृत्तिकामात्र ग्राह्यम ।

मनु — एकालिङ्गे गुदे तिस्रस्तथा वामकरे दश ।

उभयो सप्त दातव्या मृद शुद्धिमभीप्सता ॥

(१) इति शेष । ( ) भक्त प्राग्वपत्राम ।

शङ्खः — तिस्रस्तु मृत्तिका देया कृत्वा नखविशोधनम्।

दक्षः — अर्धप्रसृतिमात्रा तु प्रथमा मृत्तिका भवेत्।
द्वितीया च तृतीया च तदर्धार्धप्रमाणतः॥
लिङ्गेऽप्येवं समाख्याता त्रिपर्वी पूर्यते यथा।
आर्द्रामलकमात्रेण मृदं गात्रविशोधनम्॥

इति शौचमृत्तिकापरिमाणं तावन्मात्रम्।

दक्षः — न्यूनाधिकं न कर्तव्यं शौचं शुद्धिमभीप्सता।

एतल्लेपापगम एव।

लेपानपगमे तु देवलः —

यावत्साध्विति मन्येत तावत् शौचं विधीयते।
प्रमाणं शौचसङ्ख्याया न शिष्टैरनुमन्यते॥

एवमन्यान्यपि वचनानि समाधेयानि।

मूत्रशौचे दक्षः —

एका लिङ्गे तु सव्ये त्रिरुभयोर्मृद्द्वयं स्मृतम्।
मूत्रशौचं समाख्यातं शुक्रे तु द्विगुणं स्मृतम्॥

सव्ये वामे त्रिः। उभयोर्हस्तयोः। अत्र पादयोरनुक्तावपि पूर्ववत् त्रयं त्रयम्। एतान्मूत्रोत्सर्गशौचप्रमाणानि। तदपेक्षया शुक्रोत्सर्गशौचं द्विगुणम्।

मनुः — एतत् शौचं गृहस्थानां द्विगुणं ब्रह्मचारिणाम्।
त्रिगुणं तु वनस्थानां यतीनां स्याच्चतुर्गुणम्॥

दक्षः — यदुक्तं तु दिवाशौचमर्धं रात्रौ विधीयते।
आतुरस्य तदर्धं स्यात् तदर्धं तु पथि स्मृतम्॥

आतुरोऽत्र जलसङ्गवर्जिष्णुरोगी एतद्विण्मूत्रोत्सर्गनिमित्त विण्मूत्रलेप तु मृज्जलाभ्यां शुद्धि न सङ्ख्यानियम ।

तथाच मनु —

विण्मूत्रोत्सर्गशुद्ध्यर्थं मृद्वार्य्यादेयमर्थवत्।
दैहिकानां मलानाञ्च शुद्धिषु द्वादशस्वपि॥

तथा — वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविट् नखा ।
श्लेष्माश्रुदूषिकास्वेदो द्वादशैते नृणां मला ॥
षण्णां क्रमेण चैतेषां शुद्धिरुक्ता मनीषिभि ।
मृद्वारिणा तु पूर्व्वषामितरेषां तु वारिणा॥

इति वाक्यात्समाचार ।

अत्र विशेष यमेनोक्त —

मूत्रे तिस्र पादयोस्तु हस्तयोस्तिस्र एवच।
मृद पञ्चदशामेध्ये हस्तादीनां विशेषत ॥
एतदाशौचमूत्रादिस्वाशशौचमुदाहृतम्[1]।

देवल —

देशकालं तथात्मानं द्रव्यं द्रव्यप्रयोजनम्[2]।
उपस्थितां[3]मवस्थाञ्च ज्ञात्वा शौच प्रकल्पयेत्॥

---

(१) पादयोर्द्वे स्वहोत्ता च।
(२) उत्सर्गकालाद्यन्यत्र परकीये तु कथ्यते।
परस्य योषितस्सर्वैरेतोविण्मूत्रजे तथा॥
चतुर्थांशपि वर्णानां हानिर्यन्मृत्तिका कृता ।
(३) उपपत्ति।

यस्मिन् देशे कृतं शौचं वारिणा तत्तु शोधयेत् ।
न शुचिस्तु भवेत्तस्य मृत्तिकां यो न शोधयेत् ॥

ब्रह्मवैवर्त्ते —

न यावदुपनीयन्ते द्विजा शूद्रास्तथाङ्गनाः ।
गन्धलेपक्षयकरं तेषां शौचं विधीयते ॥

न सङ्ख्यानियम इत्यर्थः ।

विण्मूत्रोत्सर्गार्थमुपविष्टस्य तदकरणे वृद्धपराशरः —

उपविश्य तु विण्मूत्रं कर्त्तुरस्य न विन्दति ।
स कुर्यादर्द्धशौचं तु स्वस्य शौचस्य सर्वदा ॥

अतोद्धृतोदकासम्भवेऽनुद्धृतेनापि ।

शिष्टाः — कुर्यादनुद्धृतेनापि यदि निर्जन्तुकं जलम् ।
वितस्तिमात्रं सन्त्यज्य कुर्यात् शौचं जलाशयात् ॥

क्वचिच्च —अरत्निमात्रं सन्त्यज्य कुर्याद्वारिण्यनुद्धृते ।
पश्चात्तज्जलशुद्धिः स्यात् तथैवान्यत्र वा पुनः ॥

मासमात्रं कुर्य्यादिति गुरुदोषाज्जले शौचोदकपरिहाराय यत्नः कार्य्यः तेनान्यकमण्डलुसम्भवेऽप्यतत्र कार्य्यं ।

हारीतः —

तिसृभिः पादौ प्रक्षाल्य गोमयेन मृदा कमण्डलुं परिमृज्य पूर्व्ववदुपस्पृश्य आदित्यं सोममग्निं वीक्षेत ।

शङ्खलिखितौ —

आचम्य ईशानं मनसा ध्यायेत्,-ईशानोऽत्र सर्वशो विष्णुः स्मृत्वा विष्णुं सनातनमिति वा ।

ब्रह्मवैवर्त्त --

कृत्वा शौचमिदं विप्रो मुखं प्रक्षालयेत् सुधी ।

मेधातिथि -आकारनिमित्त -कमण्डलुशब्दो न जातिनिमित्त तेन सुवर्णरजतताम्रादिनिमित्तकानां कमण्डलूनां तत्तज्जातीय शुद्धि कार्य्या आश्वीत विष्णुस्मरणं विण्मूत्रशुक्रशौचाङ्ग नाचमनाङ्ग सामादिवीक्षणं यथासम्भवं इति शौचम् ।

अथाचमनम् ।

देवल शौचलक्षणमित्याहुमृदम्भोगोमयादिभि ।

लेपे स्नेहे च गन्धे च व्यपकृष्टे सुदूरत ।

पश्चादाचमनं वापि शौचार्थं वक्ष्यते विधि ॥

गोमयेन शरीरोपघाते शुद्धिर्वाच्या एतेन आचमनान्तरमेव कर्म्माहतालक्षणं शौचं भवति ।

देवल --प्रथमं प्राङ्मुख स्थित्वा पादौ प्रक्षालयेत् शनै ।

उदङ्मुखो वा दैवत्य पैतृके दक्षिणामुख ॥

दैवकर्म्माङ्गाचमनाङ्गपादप्रक्षालने प्राङ्मुखत्वमुदङ्मुखत्व वा पित्र्याच मनाङ्ग पादप्रक्षालने दक्षिणामुखत्व[1] वा । प्रत्यक्पादावनेजम मिति आपस्तम्बीय आचमनार्थक्रियमाणव्यतिरिक्तविषयम ।

तथा —इत्येवमङ्गिराजानु प्रक्षाल्य चरणौ पृथक् ।

हस्तौ चामणिबन्धाभ्यां पश्चादासीत संयत ।

शिखां बद्धा वसित्वा द्वे निर्णिक्ते वाससी शुभे ॥

---

१) प्राङ्मुखत्व वा

तूष्णीं भूत्वा समाधाय नोद्गच्छन्न विलोकयन् ।

उद्गच्छन् उत्तिष्ठन् विलोकयन् दिश इति यमस्मृतेः ।

न गच्छन्न प्रधावंश्च न चलन्न परान् स्पृशन् ।

न हसन् नैवमाचामेत्[1] न वीक्षयन् न लोकयन् ॥

कम्पमानः सकृत्[2] त्वाचामेन्न हृदयं वीक्षयन्निति स्मार्थैः पिच ।

केशान्नीविमधः कायमस्पृशन् धरणीमपि ।

अथातः प्रथमास्तीर्थाद्द्विषणान्ति पिबेत् समम् ।

अशब्दमनवस्रावमवहिर्जान्व[3] बुद्बुदम् ॥

प्रथमास्तीर्थाद्ब्राह्मादित्यर्थः ।

द्विस्ततोऽङ्गुष्ठमूलेन परिमृज्यात्ततो मुखम् ।

नाग्राङ्गुल्या न पृष्ठेन परिमृज्यात् कथञ्चन ॥

आपस्तम्बः —

तिष्ठन् प्रह्वो वा नाचामेत् ।

मरीचिः, —भुक्तासनस्थोऽप्याचामेन्नान्यकाले कदाचन ।

व्यासः —शिरः प्रावृत्य कण्ठं वा मुक्तकच्छशिखोऽपि वा ।

अकृत्वा पादयोः शौचमाचान्तोऽप्यशुचिर्भवेत् ॥

तथा विना यज्ञोपवीतेनेत्यादि ।

सोपानत्को जलस्थो वा मुक्तकेशोऽपि वा नरः ।

उष्णीषवानाचामेद्वस्त्रेणावेष्ट्य वा शिरः ।

---

(१) न हसन् नैवाचामयन्नात्मानं न विलोकयन् । आकम्पयन् कम्पमानः ।

(२) कम्पमानः आत्मानम् ।

(३) अवहिर्जान्वबुद्बुदम् ।

गौतम —

वाग्यतो हृदय स्पृशन्निश्चतुर्वाप आचमेत् ।

त्रिश्चतुर्वेति भावशुद्धापत्तया हृदयगामिनी रप ।

भविष्ये, —समौ च चरणौ कृत्वा तथा बद्धशिखो नृप ।

घनाङ्गुलिकर कृत्वा एकाग्र सुसमाहित ॥

नारसिंहे —

दक्षिण तु कर कृत्वा गोकर्णाकृतिवत पुन ।

त्रि पिबेद्वोक्षित तोयमास्यं हि परिमार्जयेत् ॥

भरद्वाज —तोय गृहीत्वा दक्षिणेन तु

मुक्ताङ्गुष्ठकनिष्ठे तु शेषणाचमन चरेत् ।

दक्ष —

सन्नत्याङ्गुष्ठमूलेन द्वि प्रमृज्यात्तता मुखम् ।

सयताभिस्त्रिभि पूर्वमास्य[१] मेवमुपस्पृशत् ॥

आपस्तम्ब —

त्रिरोष्ठौ परिमृजेदित्यके । सकृदुपस्पृशेद्दिरित्यके । दक्षिणन पाणिना सव्य प्रोक्ष्य पादौ शिरश्चेन्द्रियाणि उपस्पृशेत् पादौ शिरश्च प्रोक्षयेदित्यन्वय । सकृदुपस्पृशेदोष्ठाविति सम्बन्ध ।

ओष्ठस्पर्शानन्तरं दक्ष —

अङ्गुष्ठेन प्रदेशिन्या घ्राण पश्चादनन्तरम् ।

अङ्गुष्ठानामिकाभ्यां तु चक्षु श्रोत्रे पुन पुन ॥

(१) पूर्वमेव एव ।

नाभिं कनिष्ठाङ्गुष्ठाभ्यां हृदयं तु तलेन वै ।
सर्वाभिस्तु शिरः पश्चाद्बाहू चाग्रेण संस्पृशेत् ॥

प्रदेशिनी तर्जनी ।

नाभिस्पर्शनानन्तरं व्यासः —
पुनरपश्च संस्पृशेत् हृदयस्पर्शानन्तरं चाञ्जलस्थादुदकस्पर्शनम् ।
भविष्ये —यद्भूमावुदकं वीर समुत्क्षिपति मानवः ।
वासुकिप्रमुखान्नागान् तेन प्रीणाति पार्थिव ॥
शिष्टाः —तावन्नोपस्पृशेद्विद्वान् यावत् सव्येन संस्पृशेत् ।
मनुः — ब्राह्मेण विप्रस्तीर्थेन नित्यकालमुपस्पृशेत् ॥
कायत्रैदशिकाभ्यां वा न पैत्र्येण कदाचन ।

कायत्रैदशिकाभ्यां वेति उत्तरं ब्राह्मतीर्थे व्रणादिदोषसत्त्वे बोध्यम् ।

अप पाणिनखस्पृष्टाः पिबेदाचामति द्विजः ।
सुरापानेन तत्तुल्यमित्येवमृषिरब्रवीत् ॥

इति वचनान्नखस्पर्शपरिहारः कार्यः तृष्णाक्षोभेन्द्रियस्पर्शमात्रदृष्टौ चाद्रियते । कमण्डलुस्पर्शः सोमतीर्थेनेति हारीतवचनादुद्धृतोदकेन कमण्डलोगृहीतेनाचमने सोमतीर्थाख्येन करमध्येन कमण्डलुग्रहणस्य सस्थानवचनं इत्यतः तेन ताम्रपात्रादिभ्योऽपि ग्रहणे तथा मन्तव्यम् ।

अतएव स्मृतिः —
कांस्यनायसपात्रेण त्रपुसीसकपित्तलैः ।
आचान्तः शतकृत्वोऽपि नैव शुचिमवाप्नुयात् ॥

कांस्यादिपात्राणामाकारेण कमण्डलुत्वेन प्रसङ्ग निषेध ।
अन्यथा प्रसङ्गाभावात् ।

आचामेदित्यनुवृत्तौ शङ्खलिखितौ —उद्धतपरिपूताभिरद्भिर वेक्षिताभि[1]रबुद्बुदाभि शूद्राशुच्येकपाण्यावर्जिताभिनाचामेत परिपूताभिरिति अपद्रव्यनिरासेन अवेक्षिताभिरिति दिवा । रात्रौ तु यम — रात्रावप्रेक्षिते नैव शुद्धिरुक्ता मनीषिभि ।

आपस्तम्ब —

भूमिगतास्वप्स्वाचम्य प्रयतो भवति । प्रयत आचामेत् । एतेन स्वयमप्रकृतेन आचमन न शुद्धिहेतु ।

वशिष्ठ —तस्मादुदकधारिण्या परिसृज्य कमण्डलु ।

कृत्वा चावश्यकार्याणि आचामेत प्रयतस्तत ॥

पर्य्यग्निकरण ह्येतन्मनुराह प्रजापति ।

तत कमण्डलौ । आपस्तम्ब —न वर्षधारास्वाचमेत् तथा प्रदरोदके तप्ताभिश्चाकारणात् प्रदर स्वय दीर्णो भूभाग अकारणात् व्याधिव्यतिरेकेण ।

आतुराणां स एवाह —

उदकेनातुराणान्तु तथोष्णेनोष्णपायिनाम ।

वशिष्ठ —

प्रदरादपि आपस्तदपणसम्बन्धा स्युन वर्णरसदुष्टा या स्युरशुभागमा ।

---

(१) रवेक्षिताभिरबुद्बुदाभि ।

बौधायनः पादप्रक्षालनोच्छेषेण नाचामेत् यद्याचामेत् भूमौ स्रावयित्वाचामेत्

आपस्तम्बः —

नाप्सुगदकशेषेण वृथा कर्माणि कुर्यात्। आचामेद्वा पाणिसंक्षुब्धोदकेन नाचामेत् अग्निपर्युक्षणार्थोपात्तजलशेषेण।

याज्ञवल्क्यः —

हृत्कण्ठतालुगाभिस्तु यथासङ्ख्यं द्विजातयः ।
शुध्येरन् स्त्री च शूद्रश्च सकृत् स्पृष्टाभिरन्ततः ॥
अन्तत इति चोष्ठप्रान्ते ।

हृत्पादाना परिमाणमाहोशना —माषमज्जनमात्रा हृदयङ्गमा भवतीति ।

याम्य,—स्त्रीशूद्राधिकारे आसनाच करोष्ठयो ।

शूद्राधिकारे गौतम —आचमनार्थे पादप्रक्षालनमेवैके ।

देवल — रेतोमूत्रशकृन्मोचे भोजनेऽध्यपरिश्रमे ।
शौचमेव द्विज प्रोक्तमिह चान्यत्र वर्तते ॥

शौचमाचमनं उक्तेतरस्थवातिरिक्तनिमित्त किञ्चिदङ्गरहित मप्याचमनं सम्यक् भवति, केवल शिरःकण्ठप्रावरणमुक्तकेशित्व यज्ञोपवीतत्वपादशौचानामावश्यकत्वं उक्तपञ्चनिमित्ते सर्वाङ्गा दर । अत्र यती रात्रामपि एतद्वचनात् किञ्चिदङ्गरहितानुष्ठाने ऽप्यवैगुण्यम् ।

अथाचमननिमित्तानि ।

आचमनं त्रिविध श्रौतार्थ नैमित्तिकापरसंज्ञ पुरुषार्थं कर्माङ्गं चेति ।

शङ्ख :—क्षुते श्लेष्मपरित्यागे धौतं वा भक्षितं सति ।
अववर्णस्य संलाप स्वप्न वा दन्तधावने ॥
आचम्य प्रयतो भूत्वा तत शुद्धो भवेन्नर ।

धौतं पीतं ।

अववर्ण चाण्डालादि ।

हारीत रथ्यामाक्रम्य कृतमूत्रपुरीषाभाष्यन् वा पाणिपादं प्रक्षाल्य वाचामेत् ।

पैठीनसि उच्छिष्टरेतो मूत्रस्पर्शे उत्सृज्याचम्य प्रयतो भवति त्रि प्रक्षाल्य च त देश त देश उच्छिष्टादिलिप्तम् ।

बौधायन —नीवीं विस्रंस्य परिधायोपस्पृशेत् ।

वायुपुराण निष्ठीविते तथाऽभ्यङ्ग तथा पादावसेचने ।
उच्छिष्टस्य च सम्भाषादशुच्यप्रयतस्य वा ।
सन्देहेषु च सर्वेषु शाखां मुक्ता तथैव च ॥
विना यज्ञोपवीतेन नित्यमेवमुपस्पृशेत् ।

सन्देहे आचमनं कृतं न वा आचमननिमित्तं न वेति च ।

तथा — उच्छिष्टस्य च सस्पर्शे दर्शने वान्त्यवासिनाम ।

मनु — अध्येष्यमाणश्चाचमेत् ।

आपस्तम्ब श्वावातपयन्तावोष्ठौ उपस्पृश्य । श्वावातपयन्तावलोमकौ

यम —उत्तीर्य्योदकमाचम्य अवतीर्य्य उपस्पृशेत् ।

उत्तीर्य्य जलान्निष्क्रम्य अवतीर्य्य जले प्रविश्य नोत्तरेदनुपस्पृश्य उत्तरेत् सन्तरेत् ।

देवल — यदश्च शौचनिर्मुक्तः क्षितिं प्राप्य विगच्छति ।
प्रक्षाल्याशुचिलिप्तं च स्पृष्ट्वा चैव विशुद्ध्यति ॥
शौचनिर्मुक्तः शौचस्थानादन्यत्र गतम् ।

सम्वर्त —चर्मारं रजकं वेणं धीवरं नटमेव च ।
एतान् स्पृष्ट्वा नरो मोहादाचामेत् प्रयतोऽपि सन् ॥

आपस्तम्ब —

सिंहाणिकायामालभ्ये लोहितस्य केशानामग्नेर्गवां ब्राह्मणस्य स्त्रियाश्चालभ्ये महापथं गत्वाऽमेध्यं चोपस्पृश्याप्रयतञ्च मनुष्यं नीविं च परिधायोपस्पृशेत् आर्द्रं वा शकृदोषधिं भूमिं वा अमेध्यं चतुर्विधम् ।

देवल —दूषितं वर्जितं दुष्टं कश्मलं चेति लिङ्गिनाम् ।
चतुर्विधममेध्यं स्यात् सर्वं व्याख्यायते पुनः ॥
शुच्यप्यशुचिसंस्पृष्टं द्रव्यं दूषितमुच्यते ।
अभक्ष्याभोज्यापेयानि वर्जितानि[1] प्रचक्षते ॥
त्यक्ता पतितचाण्डाला ग्रामकुक्कुटसूकरौ ।
श्वा च नित्यं विवर्ज्या स्युः षडेते धर्मतः समाः ॥
सव्रणः सूतिका सूतीमत्तोन्मत्तरजस्वला ।
मृतबन्धुरशुचय वर्ज्याश्चाष्ट स्वकालतः ॥
नेत्राम्बुविप्रुषः केशा निरस्ता नखलोम च ।
आर्द्रचर्मास्थिनिष्ठ्यूतं दुष्टमाहुर्मनीषिणः ॥

(१) वर्जितानीह चक्षते ।

मानुषास्थि शव विष्ठारेतोमूत्रार्त्तवानि च ।
कुणप पूयमित्येतत् कश्मल समुदाहृतम् ॥
दूषिते प्रोक्षणेनापि शुद्धिरुक्ता विधानत ।
दुष्ट माञ्जनसंस्कारै कश्मले सर्वथा भवेत् ॥

लपापकक्षणादिभि । यथोक्तशुद्ध पूर्व्व सम्मार्जनमाचमननिमित्तं सव्रणोऽत्र कुष्ठभगन्दरादिरोगयुक्त । न क्षतव्रणादियुक्त इति वक्तव्य । सूती प्रसवकारयित्री । मत्तो मादकभक्षणेन । उन्मत्त उन्मादरोगी मृतबन्धमृतकाशौची । एषा यथोक्तशुद्धे पूर्व्व स्नानमाचमननिमित्तम् ।

दन्तलग्नाधिकारे देवल —

न तत्र शुद्धय कुर्यादृयन्नमुद्धरण पुन ।
भवेदशौचमत्यर्थ तृणवेधाद्व्रणे कृत ॥
रुधिरस्य मुखप्रवेशे अत्यन्ताशौचात ।

देवल --

तत शरीरस्रोतेभ्योमलनिस्यन्दविस्रवात् ।
अन्नादीना प्रवेशाच्च स्यादशुद्धिविशेषत ॥

तथा —

शौचलक्षणमित्याहुमृदम्भोगोमयादिभि ।
लपस्नेहे च गन्ध च व्यपकृष्टे सुदूरत ॥
पश्चादाचमनं चेति शौचार्थं कथ्यते विधि ।

शरीरस्रोतेभ्य शरीरच्छिद्रेभ्य, मले द्वादशविध पूर्व्वोक्तम् नि स्यन्दोलालादि तयोर्विस्रव स्थानाच्चलनम् अन्नादीना

अथ पुरुषार्थाचमननिमित्तानि अमङ्गलविकृतश्वास आक्रोश स्पर्शनम्, अग्निस्पर्शनम् गोस्पर्शनम् लोष्ट्रादिरहितस्य हस्तस्य दक्षिण प्रत्युद्गम पादक्षालनं शिखाबन्धन नीविविस्रंसन वस्त्र परिधान यज्ञोपवीतबहिष्करणं स्नान भोजनारम्भ ।

उच्छिष्टदोषरहिततांबूलादिभक्षण शयनारम्भ श्मशाना क्रमण अस्पृश्य

श्मशानाक्रमण अस्पृश्यस्याशुचिकरत्वे स्नानाभावादेवाचामन पुरुषार्थे । श्मशानाक्रमण नाशुचिकरम् ।

महाभारते —

न च मेध्यतरं किञ्चित् श्मशानादिह विद्यते । इति ।

एतत्तु निमित्ताचमनस्योपात्तदुरितक्षय फलम् । क्रियाङ्गाचमन सामान्यत ।

क्रियाञ्च कुरुते मोहादनाचम्यैह नास्तिक । इति वायुपुराणोक्त विशेषतश्च प्राणस्यायमनं कृत्वा आचमेत् प्रयतोऽपि सन्नित्यादौ सन्ध्यान्तर्गतप्राणायामस्य निमित्तत्वम् ।

तत्त्वसारसंहितायाम् —

अर्चयित्वा महेशानमनाचम्य क्रियान्तरम् ।
कुर्व्वन् किल्बिषमाप्नोति सत्यमीश्वरभाषितम् ॥

तथा —

आदित्यञ्च गणाध्यक्ष क्षेत्रपालञ्च पार्व्वतीम् ।
आराध्याचमनं कार्य्यं सुधिया कर्म्मसिद्धये ॥

तर्पयित्वा च मिथ्याव्यमेतेषां त्रिदशाधिप ।
सद्य आचमनं कार्य्यं कर्मान्तरविशुद्धये ॥
इत्यादौ कर्माङ्गाचमनम् ।

तथा —

श्राद्ध पिण्डदानादौ कर्माङ्गमाचमनम् । अतएव पैतृके दक्षिणा मुख इति पादप्रक्षालने दिङ्मुखनियम उक्त । शुद्ध्यर्थाचमनमेव कर्माङ्ग न पृथक्कर्माङ्गमाचमनम् ।

अथ द्विराचमननिमित्तानि ।

याज्ञवल्क्य —

स्नात्वा पीत्वा क्षुते सुप्ते भुक्ते रथ्योपसर्पणे ।
आचान्त पुनराचम्य वासोऽन्यत् परिधाय च ॥

आपस्तम्ब । भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचामेत् । द्वि परिमृजेत् । सकृदुपस्पृशेत् । भोजनपूर्व्वाचमने हि परिमार्जन नियम । अन्यत्र द्विस्त्रिर्वा । ओष्ठस्पर्शनमात्र सकृत् । अन्यत्र सकृत्त्रिर्वा । कम्बलकार्पासरथ्याचत्वरश्मशानाक्रान्तिष्वाचान्त पुनराचामेत् । कम्बलं कठिन श्लेष्मा श्वासोच्छ्वासादिकाले विक्षत चत्वर भूतादीनां बलिदानस्थानम् ।

शङ्खलिखितौ मूत्रपुरीषष्ठीवनादिषु शुक्लमाल्याभिधानं पुन रुपस्पृशेत् । शुक्ल पदार्थ चादिपदं शुक्लोत्सर्गस्याप्युपलक्षणम् । द्विराचमनाधिकारे वशिष्ठ ओष्ठौ संस्पृश्य च तथा यत्र स्या तामलोमकौ, स्नान पानं क्षुत स्वाप । भोजनान्त रथ्योपसर्पण,

वस्त्रपरिधापन भोजनारम्भ कठिनस्त्रवात्याग कास विज्ञत श्वास चत्वराक्रमण श्मशानाक्रमण मूत्रपुरीषोत्सर्ग ष्ठीवन परुषवाक्याभिधान शुक्रोत्सर्ग इत्यष्टादशद्विराचमननिमित्तानि। शुद्धश्च नैमित्तिके च यथासम्भव द्विराचमनेऽपि सकृदेवेन्द्रियस्पर्शन कार्य्यं न हि । द्विराचमनेऽपि सर्व्वार्पितत्वादिविचार पूर्व्ववत् ।

अथाचमनानुकल्प आपस्तम्ब स्वप्ने सन्धयौ सिङ्घाणिकास्रा वालम्भ लोहितस्य केशानां अग्नेर्गवा ब्राह्मणस्य स्त्रियाश्चानम्भ महापथ गत्वाऽमेध्य चोपस्पृश्याप्रयतमानुषम् । नोवीं च परिधाय अप उपस्पृशेत् ।

आर्द्र वा सकृतोषधि भूमि वा उक्तनिमित्तस्याचमनासम्भव आर्द्रगोमयस्पर्शनम् । तदभावे आर्द्रतृणस्पर्शनम । तदसम्भव भूस्पर्शनम् ।

पराशर —

क्षुत निष्ठीवन चैव दन्तस्लिष्ट तथा वृत ।
पतितानाञ्च सम्भाषे दक्षिण श्रवण स्पृशत् ॥
प्रभासादीनि तीर्थानि गङ्गाद्या सरितस्तथा ।
विप्रस्य दक्षिण कर्णे सन्तीति मनुरब्रवीत् ॥
आदित्योवरुण सोमोवायुरग्निस्तथैव च ।
विप्रस्य दक्षिणे कर्णे नित्य तिष्ठन्ति देवता ॥

तदाक्षशेषात् सर्व्वत्राचमननिमित्ते दक्षिणकर्णस्पर्शनमनुकल्प ।

---

(१ अनृतो ।)

एषु च निमित्तेषु श्रवणस्पर्शनमुक्तम् इति वाक्यान्तरेण च आचमनस्यैव विधानात्। दन्तश्लिष्टे आचमनविध्यभावात् कर्णस्पर्शनं युक्तम्।

मार्कण्डेयपुराणे —

क्षुत्वा निष्ठीव्य वासश्च परिधायाचमेत् बुधः ।
कुर्यादाचमनं स्पर्शं गोपृष्ठस्यार्कदर्शनम् ॥
कुर्वीतालम्भनं वापि दक्षिणश्रवणस्य तु ।
अविद्यमाने पूर्वोक्ते उत्तरप्राप्तिरिष्यते ॥

क्षुत्निष्ठीवनवस्त्रपरिधानेषु प्रथमकल्प आचमनं तदसम्भवे गोपृष्ठस्पर्शनम्। तस्याप्यसम्भवे सूर्यदर्शनम्। तदसम्भवेऽपि दक्षिणकर्णस्पर्शनम्।

क्षुते निष्ठीवने सुप्ते परिधानेऽश्रुपातने ।
कर्मस्थ एषु नाचामेद्दक्षिणं श्रवणं स्पृशेत् ॥

इति रत्नाकरलिखितवाक्यात् कर्ममध्ये एषु कर्णस्पर्शनं मुख्यः कल्पः ।

स्मृत्यन्तरे —

गङ्गा वै दक्षिणे कर्णे नासिकायां हुताशनः ।
उभावपि च स्पृष्ट्वा तत्क्षणादेव शुध्यति ॥

एतदुक्तनिमित्तादन्यत्राचमनानुकल्परूपम् ।

## अथाचमनापवादः' ।

अत्राङ्गिरसौ मधुपर्के च सोमे च अप्सु प्राणाहुतिषु च ।
नोच्छिष्टस्तु भवेद्विप्रो यथात्रेर्वचनं तथा ॥

अत्राप्स्विति प्राणाहुतिसाहचर्य्यादापोशानपरमिति लक्ष्मीधर । तदन्यजलपाने त्वाचमनम् ।

शातातप —

दन्तलग्ने फले मूले भक्ष्यस्नेह तथैव च ।

ताम्बूले चेक्षुदण्डे च नोच्छिष्टो भवति द्विज ॥

फले मुखशुद्ध्यर्थं कटुतिक्तकषायादौ अत्र शुद्ध्यर्थमाचमनं नास्ति। नैमित्तिकं स्यादेव। अतएव भट्टा परस्पृष्टताम्बूलभक्षण तदवसाने आचमनं च दुराचार इत्याहु ।

गौतम दन्तश्लिष्ट दन्तधावनादन्यत्र जिह्वाभिमर्शनात् प्राक् च्युतेरित्येके। च्युतेरास्रावावत् निगिरन्नेव तच्छुचि । अन्यत्र जिह्वामर्शनात् यावज्जिह्वया दन्तेभ्यो तत्भिदोनोपलभ्यते इत्यर्थ ।

सत्यजिह्वाभिमर्षे यावन्न च्यवते तावच्छुचिरित्येके मन्यन्ते । च्युतेरास्रावावत् स्नातवत् निगिरन्नेव तच्छुचि ।[१]

आपस्तम्ब यदवशिष्यते मुखे दन्तलग्नातिरिक्तमपि तदपि निगिरन्नेव शुचिरित्यर्थ ।

पैठीनसि भूमिगता विन्दव परास्पृष्टा पूता विप्रुष स्पृष्ट्वा शिरोमज्जिकेभ्याचामेत्। विन्दव आचमनविन्दव परास्पृष्टा

(१) तदवसानाचमनम् ।

(२) देवल —भोजने दन्तलग्नानि निहृत्याचमनं चरेत् । दन्तलग्नमसंहार्य्य लेपं मन्येत दन्तवद् ।

वसिष्ठ —न स्नानुगतोलेप अन्तर्धिरिदर्थं । अन्त्राप्यसमर्थे आचान्तस्याव शिष्टं निगिरन्नेव तच्छुचि ।

स्पृष्टा पूता न प्रत्यवहेतव अङ्गपतिता अपि रोमहयाद्रभाव मापादयित समर्था एवाचमननिमित्तं भवति ।

याज्ञवल्क्यः —

मुखजा विप्रुषोमेध्यास्तथाचमनविन्दव ।
श्मश्रु चास्यगत दन्तसक्तं त्यक्त्वा तत शुचि ॥

मुखविप्रुष ग्रासविन्दव श्मश्रु चास्यप्रविष्टमुच्छिष्ट न करोति दन्तसक्तं चान्नादिक स्वयमेव च्युतं त्यक्त्वा शुचिर्भवति अच्युत तद्वत्सम तथाच पूर्वोक्तनिमित्ताचमनेन विकल्पत इति विज्ञानेश्वर ।

मनु —

स्पृशन्ति विन्दव पादौ य आचामयत परान् ।
भूमिगास्ते समा ज्ञेया न तैरप्रयतोभवेत् ॥

अन्याचमनार्थं जल ददतोयेऽम्बुविन्दव पादौ स्पृशन्ति त शुद्ध भूगतेनाम्बुना तुल्या इति कुल्लुकभट्ट । विस्तरस्तु अस्मत्कृत शुद्धिसारे च द्रष्टव्य ।

बृहस्पति —

प्रचरन्नन्नपानेषु यदोच्छिष्टमुपस्पृशेत् ।
भूमौ निधाय तद्द्रव्यमाचान्त प्रचरेत्पुन ॥
अरण्येऽनुदके रात्रौ चौरव्याघ्राकुले पथि ।
कृत्वा मूत्रपुरीषे तु द्रव्यहस्तो न दूष्यति ॥
शौच तु प्रथम कुर्यात् पादौ प्रक्षालयेत्तत ।
उपस्पृश्य तदभ्युक्ष्य गृह्णीत शुचितामियात् ॥

मनुः —उच्छिष्टेन तु संस्पृष्टो द्रव्यहस्तः कथञ्चन ।

अनिधायैव तद्द्रव्यमाचान्तः शुचितामियात् ॥

एतदन्नव्यञ्जनादिव्यतिरिक्तद्रव्यविशेषमिति विश्वरूपः । इत्या

चमनप्रकरणम् ।

अथ दन्तधावनम् ।

नरसिंहपुराणे —

मुखे पर्य्युषिते नित्यं भवत्यप्रयतो नरः ।

तस्माच्छुष्कमथार्द्रं वा भक्षयेत् दन्तधावनम् ॥

खदिरश्च कदम्बश्च करञ्जश्च वटस्तथा ।

तिन्तिडीवेणुपृष्ठश्च आम्रनिम्बौ तथैव च ॥

अपामार्गश्च विल्वश्च अर्कश्चोदुम्बरस्तथा ।

नारदः —

एते प्रशस्ताः कथिता दन्तधावनकर्म्मणि ॥

दन्तकाष्ठस्य वक्ष्यामि समासेन प्रशस्तताम् ।

आम्रपलाशविल्वानामपामार्गशिरीषयोः ।

वदरस्य कदम्बस्य करवीरकरञ्जयोः ॥

सर्व्वे कण्टकिनः पुण्याः क्षीरिणश्च यशस्विनः ।

कटुतिक्तकषायाश्च धनारोग्यसुखप्रदाः ॥

अष्टाङ्गुलेन मानेन तत्प्रमाणमिहोच्यते ।

प्रादेशमात्रमथवा तेन दन्तान् विशोधयेत् ॥

अत्र भक्षयेदिति भक्षणधर्म्मप्राप्तश्च तेनाद्यन्तयोर्द्विराचमनम् ।

आचमनस्य भोजनाङ्गत्वं भोजनप्रकरणेऽक्ष्यम् ।

कात्यायन —

नारदाद्युक्तवार्क्षं यदष्टाङ्गुलमपाटितम् ।
सत्वचं दन्तकाष्ठं स्यात्तदग्रेण प्रधावयेत् ॥
उत्थाय नेत्रे प्रक्षाल्य शुचिर्भूत्वा समाहितः ।
परिजप्य च मन्त्रेण भक्षयेद्दन्तधावनम् ॥
आयुर्बलं यशो वर्चः प्रजाः पशुवसूनि च ।
ब्रह्म प्रज्ञां च मेधां च त्वं नो देहि वनस्पते ॥

इति काष्ठाभिमन्त्रणम् ।

विष्णु —

न दक्षिणापराशामुखः । उदङ्मुखः प्राङ्मुखो वा वटासनार्कखदिरकरञ्ज-करवीरसर्जारि-मेदापामार्गमालतीककुभ[1]बिल्वानामन्यतमं कषायं कटुतिक्तं वा कनीनिकाग्रवत् सकूर्चं द्वादशाङ्गुलं

प्रातर्भुक्त्वा च यतवाक् भक्षयेद्दन्तधावनम् ।

हारीत —

वाटे पालाशकोविदारश्लेष्मातकतिल्वकशाकजम्बुनिगुण्डीशिग्रुषण्डी वैणवजं प्रथमासवदरीकरञ्जमध्यमनवामीत्येके । दधित्थ हरितक्याम्रकर्णप्रासादयनवामीत्यपरे । बिल्वखदिरासनपालाश शिरीषापामार्गाणामन्यतममव्रणाङ्गम् । नातिसूक्ष्मं नातिस्थूल मपीडिताग्रं प्राङ्मुखमुदङ्मुखो वा वाग्यतः पादौनोदन्तकाष्ठं भक्षयेत् । वाटे स्पर्शवाटे तिल्वक बिल्वक । शाकश्च

(१) मधुककुभबिल्वानामन्यतमम् ।

शागवन इति प्रसिद्ध'। शिखण्डी मयूरशिखा। दधित्थ कपित्थ' एवे अपरे इत्युभयत्रापि वर्जयित्वति शेष' पालाश आम्रातक छच्च आद्र सर्वाश्चिकं ततोऽन्यदनार्द्रं अपोविताश्मीवचूर्षिता श्रम् अनोश्रन्थि दन्तधावनकाले श्रोष्ठसमीपग्निरहितम्।

विष्णु न पलाश दन्तधावन स्यात्।

न श्लेष्मातकारिष्टविभीतकधवधन्वनवर्जितम्।

न कोविदारशमीपीलुपिप्पलेङ्गुदगुग्गुलु ॥

न वन्धकनिगुण्डीशिग्रुतित्वतिन्दुक ।

न पारिभद्राम्लिकामोचकशाल्मलीपषवर्ज्यम मधुर आद्र गोष्ठ शुष्क न शुषिरं न पूतिगन्ध न पिच्छिल दन्तकाष्ठ भक्षये दित्यर्थ'। धन्वन धमन पोलु गुडफल पारिभद्र पालधुया इति प्रसिद्ध ।

स्मृत्यन्तरे —

गुवाकतालहिंतालास्तथा ताली च केतकी।

खर्जूर नारिकेल च सप्तैते तृणराजका ॥

तृणराजपलाशैश्च न कुर्य्याद्दन्तधावनम्।

इष्टकालोष्टपाषाणैरन्यैरङ्गुलिभिस्तथा ॥

मुक्त्वा चानामिकाङ्गुष्ठौ वर्ज्जयेद्दन्तधावनम्।

अत्र ये क्षीरकण्टकितिक्तकटुकषाया अपि निषिद्धास्तेषां विहित निषेधे विकल्पापत्त पर्य्युदासात्यतिनिषिद्धेनाप्युपादानम्।

आसन शयनं यानं पादुके दन्तधावनम्।

वर्ज्जयेद्व्रतिकामस्तु पालाशं नित्यमात्मवान ॥ इति—

वाक्यात्कत्यायचौरिचोऽप्यस्य न प्रतिनिषिद्धत्वमपि ।

महाभारते —प्रक्षाल्य हस्तौ पादौ च मुखञ्च सुसमाहित ।

दक्षिणं बाहुमुद्धृत्य कृत्वा जान्वन्तरालत ॥

चौरिचोऽप्यथवा भक्षयेद्दन्तधावनम् ।

त्याज्यं सपत्रमम्लातमूर्द्ध्वशुष्कं च पाटितम् ॥

त्वग्विहीनं अग्निमुखं तथा पालाशशिंशपम् ।

ऋजु वितस्तिमात्रं च कीटादिभिरदूषितम् ॥

पारस्कर —

दन्तप्रक्षालनादीनि नित्यमपि अन्नाद्यायेति मन्त्र तेन दन्त धावनाङ्ग, परिजप्य च मन्त्रेणेति कात्यायनोक्तौ काष्ठसंस्कारत्वेन मन्त्रजपविधिरिति भिन्नार्थत्वादनयो समुच्चय आयुर्बलं यशो वर्च इत्यादिमन्त्रलिखित ।

अन्नाद्याय व्यूहध्व० सोमोराजाय मागमत् ।

समे मुख प्रमार्क्ष्यते यशसा च बलेन च ॥

इति पारस्करसौत्रमन्त्र इतिहय पठनीयम् ।

विष्णु —

प्रक्षाल्य भक्षयेत्तत्कुर्यात्तु शौचे देशे प्रयत्नत ।

भारते—पतितेऽभिमुखे सम्यग्मोक्ष्यमाप्नोत्यभीप्सितम् ॥

ऐश्वर्यभङ्गमाप्नोति क्षिप्ते तदग्रतो भुवि ।

नरसिंहपुराणे—

प्रतिपद्दर्शषष्ठीषु नवम्यां चैव सप्तमी ॥

दन्तानां काष्ठसंयोगोदहत्यासप्तमं कुलम् ।

महाभारते —

भक्षयेत् प्रातरुत्थाय पर्व्वस्वपि च वर्जयेत् ॥

तानि विष्णुपुराणे—

चतुर्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।

पर्व्वाण्येतानि राजेन्द्र रविसङ्क्रान्तिरेव च ॥

स्मृत्यन्तरे —

श्राद्ध जन्मदिने चैव विवाहे मुखदूषिते ।

व्रते चैवोपवासे च वर्जयेत् दन्तधावनम ॥

न भक्षयेद्दन्तकाष्ठमेकादश्यां नरेश्वर ।

आदित्यदिवसे चैव तस्मादेनोमवाप्नुयात् ॥

तथाच—

श्राद्धादिभोजनोत्तरदन्तधावनस्य सुखार्थदन्तधावनस्यापि निषेधो भोगत्वात् ।

सर्वभोगविवर्जित इति वचनात् ।

व्रतोपवासदिवसे खादित्वा दन्तधावनम् ।

गायत्र्या शतशः पूता चपः प्राश्य विशुध्यति ॥

अत्र चतुर्व्वर्गस्येऽपि धर्मे नित्यकर्म्मान्तरवदप्रतिहताङ्गहानेऽपि फलोदयात् काष्ठान्तरेण जिह्वोल्लेखः तोयगण्डूषैर्वैतुयो मुख चालनं, दन्तकाष्ठप्रत्याख्यानेन भक्ष्णूषकरणे सकृदेवाभिमन्त्रय द्वादशगण्डूषाचामिकसाधनत्वात्

पैठीनसिः —

अलाभे वा निषेधे वा काष्ठानां दन्तधावनम्।

पर्णेन वा विशुद्धेन जिह्वोल्लेखं समाचरेत्॥

स्मृत्यन्तरे —

कुहूषष्ठ्योर्नवम्यां वै पक्षादौ दन्तधावनम्।

पर्णैरन्यत्र काष्ठैस्तु जिह्वोल्लेखः सदैव हि॥

व्यासः —

अलाभे दन्तकाष्ठानां निषिद्धायां तथा तिथौ।

अपां द्वादशगण्डूषैर्विदध्याद्दन्तधावनम्॥[1]

एवमादिषु पर्णगण्डूषयोर्विकल्पः पर्णपक्षेऽपीह तस्यापि तुल्यत्वात्, अतएवास्मद्देशे सर्व्वदा पर्णपक्षेणैव दन्तधावनसमाचार निषिद्धदिनेऽप्यदुष्टत्वात्, गण्डूषकरणपक्षे धान्यमसीत्यत्र एतत्सामा समसीतिवत् बहुवचनगण्डूषे इत्यूहः कार्यः मुमुक्षोरग्निहोत्राद्यनुष्ठानवत् आयुरादिमन्त्रोक्तकामनारहितस्यापि मन्त्रः पठनीयः।

विष्णुपुराणे —

स्नानान्तरं ततः कुर्य्यात्पुमान् केशप्रसाधनम्।

आदर्शाञ्जनमाङ्गल्यदूर्व्वाद्यालम्भनानि च॥

देवीपुराणे —

नेत्राञ्जनं निषेवेत दन्तधावनपूर्व्वकम्।

---

(१) न रात्रिवास आचारादिति आहारेऽपि तावत् वस्त्रान्तरपरिधानक्रमः। तत्र इतीदमर्थमाचमनान्तरवस्त्रान्तरपरिधानेनैव चरितार्थम्।

মনু —

মৈত্রং প্রসাধনং চৈব দন্তধাবনমঞ্জনম্ ।

পূর্ব্বাহ্ণ এব কুর্ব্বীত দেবতানাঞ্চ পূজনম্ ॥

অঞ্জনং সৌবীরাঞ্জনমিতি লক্ষ্মীধর বৈদ্যাগ্রাজীকৃমঞ্জনমপ্যঞ্চ জাতকধর্ম্মত্বাজিত্যম্ ।

ইতি দন্তধাবনপ্রকরণম্ ।

---

## अथ प्रातःस्नानम् ।

न रात्रिवासः स्नायादिति ब्रह्माण्डे यद्वस्त्रान्तरपरिधानमुक्तं तत् पुरीषोत्सर्गशौचानन्तरवस्त्रान्तरपरिधानेनैव चरितार्थम् ।

विष्णुः —

प्रातः सूर्य्यारुणकिरणग्रस्तां प्राचीमवलोक्य स्नायात् ।

कात्यायनः ।

यथाऽहनि तथा प्रातर्नित्यं स्नायादनातुरः ।
दन्तान् प्रक्षाल्य नद्यादौ गृहे चेत्तदमन्त्रवत् ॥
अल्पत्वाद्धोमकालस्य बहुत्वात् स्नानकर्मणः ।
प्रातर्न तनुयात् स्नानं होमलोपो विगर्हितः ॥

यथाऽहनीति मध्याह्नस्नानेऽतिकर्त्तव्यतातिदेशः दन्तान् प्रक्षाल्येति दन्तधावनस्य प्राथम्याभिधानात्दन्तधावनानन्तर्य्यं प्रातःस्नानस्योक्तं, अनातुरः स्नानविघ्नरोगरहितः गृहे चेदिति तत्प्रातःस्नानं कूपजलादिना गृहे क्रियते चेत् तदा स्नानाङ्गमन्त्ररहितस्नानम् अघमर्षणजपमन्त्रस्तु तोयकुम्भेनाभिषिच्यमानस्यापि स्यादेव तत्र शुद्धिरग्रे वाच्या ।

दक्षः,—

लालास्वेदसमाकीर्णः शयनादुत्थितः पुमान् ।
अत्यन्तमलिनः कायो नवच्छिद्रसमन्वितः ॥
स्रवत्येव दिवारात्रौ प्रातःस्नानं विशोधनम् ।
अस्नात्वा नाचरेत्कर्म्म जपहोमादि किञ्चन ॥

प्रात स्नान प्रशसन्ति दृष्टादृष्टकर शुभम् ।
सर्व्वमर्हति शुद्धात्मा प्रात स्नायी जपादिकम् ॥

दृष्ट मलापनयनद्वारा शरीरशुद्धि अदृष्ट नित्याचरणात्पापक्षय

विष्णु —

स्नातोऽधिकारी भवति दैवे पैत्र्ये च कर्म्मणि ।
पवित्राणां तथा जाप्ये दाने च विधिचोदित ॥
अलक्ष्मी कालकर्णी च दु स्वप्न दुर्व्विचिन्तितम् ।
अच्यानशाभिषिक्तस्य नश्यन्तीति च धारणा ॥
याम्यं हि यातनादु खं प्रात स्नायी न पश्यति ।
नित्यस्नानेन पूयन्ते येऽपि पापकृतो जना ॥

कालकर्णी दु सहदुरिता बालविधवा वा दुर्व्विचिन्तित स्वानिष्ट चिन्तन अस्नातस्य उद्धृतानुद्धृतसाधारणेन

व्यास —प्रात संक्षपत स्नान होमाय तद्विधीयते ।
स्नानच[1]विधिनिष्णात्य मध्याह्ने तत्सुविस्तरम् ॥

होमाय विस्तराभावस्यावादत्वान्निरन्तरपि प्रात संक्षेपविधि ।

एव प्रातस्नानसंक्षेपविधिमध्याह्नेऽप्यशक्तस्य । एव काम्येऽपि तीर्थ स्नानादौ संक्षेपविधिरनुकल्प ।

अनुकल्पस्याप्यतिदेशात् काम्य तु विशेष शक्तस्य प्रात संक्षेपेण करणेन न फल नित्य तु शक्तावपि संक्षेपेण नित्यकरणे प्रत्यवायाभाव एव न पापक्षयरूपं फलम् ।

1) स्नानन्तविधिनिष्णाद्यस

अथ प्रथमकल्पस्य योऽनुकल्पे प्रवर्त्तते ।

न साम्परायिकं तस्य दुर्मतेर्विद्यते फलमित्यभिधानात्

तथाच स्मृतिः —

स्नातस्य वह्नितप्तेन तथैव परवारिणा ।

शरीरशुद्धिर्विज्ञेया न तु स्नानफलं लभेत् ॥

योगियाज्ञवल्क्यः —

उषस्युषसि यत् स्नानं सन्ध्यायामुदिते रवौ ।

प्राजापत्येन तत्तुल्यं महापातकनाशनम् ॥

उषसि अरुणोदये सन्ध्यायां सूर्य्योदयात् प्राक् एवञ्च उदिते रवावित्यनुकल्पः ।

शङ्खः —

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।

क्रियास्नानं तथा षष्ठं षोढा स्नानं प्रकीर्त्तितम् ॥

अस्नातस्तु पुमान्नार्हो जप्याग्निहवनादिषु ।

प्रातःस्नानं तदर्थन्तु नित्यस्नानं प्रकीर्त्तितम् ॥

आपस्तम्बः —

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते ।

तर्पणन्तु भवेत्तस्य अङ्गत्वेन तु निश्चितम् ॥

इति वचनान्नित्ययोः प्रातःस्नानमध्याह्नस्नानयोः काम्यतीर्थादिस्नाने च स्नानाङ्गतर्पणम् । न तु क्रियाङ्गमलापकर्षणस्नानयोः स्नानदेशादिविचारो माध्याह्निकस्नानप्रकरणे ज्ञेयः परकृततडागे सप्तपिण्डानुद्धृत्य जलं प्रविशेत् ।

कूपतडागातिरिक्तपरकृतजलाशये पञ्च मृत्पिण्डान्, परकृतकूपे पिण्डत्रयं चैवाद्धिमते जलकुम्भत्रयमात्रोद्धरणं, सेतुजले पिण्डत्रयं कुम्भत्रयोद्धरणञ्च कृत्वाथापि तत्र सेव्यम् ।

बौधायनः   अग्न्यागारमापोदेवगृहं गोष्ठं यत्र च ब्राह्मणा अप्रक्षाल्य पादौ नान्तः प्रवेष्टव्यम् ।

तथाच पादौ प्रक्षालयेदिति । इदमनुकृतस्नानाङ्ग स्नानाङ्गतर्पणञ्च पङ्कत्वादेव स्नानसमकाले कर्त्तव्यम् । तदसम्भवात्तत्पूर्व्वं पश्चाद्वा कर्त्तव्यम् । तत्र साक्षिवचनाभावात् स्नानसमनन्तरमेव कार्य्यम् ।

किञ्च स्नानस्य कर्म्माधिकारसम्पादकत्वमपूर्व्वद्वारकं अपूर्व्वञ्च तर्पणाद्यङ्गसहितात् स्नानात् न स्नानमात्रात् तेन सन्ध्याधिकारसिद्ध्यर्थं स्नानं तर्पणं च कार्य्यम् ।

स्मरन्ति रत्नमालायाम् —

आचम्य प्रयतः पूर्व्वं स्नानं प्रातः समाचरेत् ।
स्नात्वा सन्तर्पयेद्देवान् ऋषीन् पितृगणांस्तथा ॥
आचम्य प्रयतो नित्यं पुनराचम्य वाग्यतः ।

समाप्य मन्त्रैरित्यादिना तर्पणानन्तरं सन्ध्याकरणस्य वाचनिकत्वात् । इदञ्च स्नानाङ्गतर्पणं शिरःस्नातस्यैव सर्व्वाङ्गजलसंयोगस्यैव स्नानशब्दार्थत्वमिति वक्ष्यति ।

तथाच मार्कण्डेयपुराणे —

शिरःस्नातस्तु कुर्व्वीत दैवं पैत्र्यमथापि वा ।

यत्तु वामनपुराणे—

स्नात्वा शिरःस्नानमथाह्निकं वा सतर्प्य तोयेन पितॄन् मनुष्यानिति।

तदनुवादित्वाच्छिरःस्नानपक्ष सतर्पणेत्यत्र परम् ।

जाबाल स्नानप्रकरणे—

नाङ्गमेकं च यमन परिदध्यात् कथञ्चन ।

पद्मपुराणे—

चतुर्भुतैश्चतैर्वा जले स्नानं समाचरेत् ।

तीर्थं प्रकल्पयेद् विद्वान् मूलमन्त्रेण मन्त्रवित् ॥

नमो नारायणायेति मूलमन्त्र उदाहृत ।

दर्भपाणिस्तु विधिना स्नायात्त प्रयत शुचि ॥

चतुर्हस्तसमायुक्तं चतुरस्रं समन्तत ।

प्रकल्प्यावाहयेद्गङ्गामेभिर्मन्त्रैर्विचक्षण ॥

विष्णो पादप्रसूतासि वैष्णवी विष्णुपूजिता।

पाहि नस्त्वेनस स्तस्मादाजन्ममरणान्तकात ॥

तिस्र कोट्योऽर्धकोटी च तीर्थाना वायुरब्रवीत ।

दिवि भुव्यन्तरीक्षे च तानि ते सन्ति जाह्नवि ॥

नन्दिनीत्येव ते नाम देवेषु नलिनीति च ।

नन्दा पृथ्वी च सुभगा विश्वकायाथ वासिता ॥

विद्याधरी सुप्रसन्ना तथा लोकप्रसादिनी[1] ।

क्षमा[2] च जाह्नवी चैव शान्ता शान्तिप्रदायिनी ॥

---

(१) लोकनिवासिनी।

(२) क्षमा।

एतानि पुण्यनामानि स्नानकाले प्रकीर्त्तयेत।
भवेत् सन्निहिता तत्र गङ्गा त्रिपथगामिनी॥
सप्तवाराभिजप्तेन करसंपुटयोजितम्।
मूर्द्धि कुर्य्याज्जलं भूयस्त्रिचतु पञ्च सप्त वा॥
स्नानं कुर्य्यान्मृदा तद्वदामन्त्र्य तु विधानत।
अश्वक्रान्ते रथक्रान्ते विष्णुक्रान्ते वसुन्धरे।
मृत्तिके हर मे पापं यन्मया दुष्कृतं कृतम॥
उद्धृतासि वराहेण कृष्णेन शतबाहुना।
नमस्ते सर्व्वलोकानां प्रभवारिणि सुव्रते॥

इति मन्त्र समुच्चार्य्य गङ्गेऽत्रागच्छेत्यावाहनम्। तीर्थेषु स्नान न गङ्गावाहन, न नदीषु नदीं ब्रूयादिति निषेधात्।

विस्तरस्तु माध्याह्निकस्नानप्रकरणे लेख्य। अत्र विधिर्वैदिक मन्त्ररहितत्वात् सर्व्ववर्णसाधारण सचितश्च। अस्य विधे माध्याह्निकस्नानपरत्वेऽपि अनुकल्परूपत्वमेव तत्र प्रातःस्नाने दक्षस्मृत्या समकक्षत्वानुवादरूपता।

एवञ्च मज्जनस्य पाक्षिकत्वान्न स्नानशब्दार्थत्व किन्तु सर्व्वाङ्ग जलसयोग एव स्नानम अनुवृतवस्तुतैर्वेति एकस्य स्नानपद स्यानुवृतपक्षे मज्जनपरत्वेन मुख्यत्वमुद्धृतपक्षे गौणत्वमिति विरो धात्। तेन सर्व्वाङ्गजलसयोग एव स्नानशब्दार्थे अन्तर्जलजपस्य तोयकुम्भनाभिषिच्यमानस्य स्यादेव। अनुद्धृतपक्षे इत्युक्त्वा च जले नाभिप्रमाणे मन्त्रपूर्व्वकमिति ब्राह्मवचनान्नाभिमात्रजले स्नानम्।

सङ्क्षेपमाह योगी याज्ञवल्क्यः —

स्नानमन्तर्जलश्चैव मार्जनाचमने तथा ।

जलाभिमन्त्रणं चैव तीर्थस्य परिकल्पनम् ॥

अघमर्षणसूक्तेन त्रिरावृत्तेन नित्यशः ।

अन्यान् वा वारुणान् मन्त्रान् कामतः सम्प्रयोजयेत् ॥

पूर्वप्रतिपन्नपदार्थानुवादेन मन्त्रविधानात् पाठक्रमादर्थक्रमो बलवत्तर इति न्यायाच पूर्व एव क्रमः । तथाच तीर्थावाहन जलाभिमन्त्रणान्तर्जलजपमज्जनानि षट् ।

असामर्थ्येन कुर्वीत, तथायं विधिरिष्यते ।

इति प्रचेतसोऽभिधाय नित्यस्य स्नानाभिधानात् प्रातःस्नाने नित्य संक्षेपविधिर्व्याख्याने विस्तरासामर्थ्ये सत्येवेति वाक्यार्थं तेन नित्येऽपि प्रातः संक्षेपविधिरिति सिद्धम् ।

विस्तृतस्नानविधिर्माध्याह्निके लेख्यः । अथ प्रातः प्रमाणेषु यत्र षट्पदार्थपदो लिख्यते । यथैव जलेन देहक्षालनं सकृत् द्विः पादप्रक्षालनं, आचमनं वस्त्रद्वयधारणं शिखोपवस्त्रधारणं शिखायज्ञोपवीतानुसन्धानं जले प्रवेशः । स्वकुलोदकपार्श्वे प्राङ्मुखतया उदङ्मुखतया वोपवेशनं निमज्जनपञ्चो वारम् । इमं मे इति मन्त्रस्य प्रजापति ऋषिर्गायत्रीच्छन्दः वरुणो देवता तीर्थावाहने विनियोगः । "इमं मे वरुण श्रुधी हवमद्या च मृडय त्वामवस्युराचके" अनेन तीर्थावाहनम् । ततो आपोहीति मन्त्रस्य प्रजापति ऋषिस्त्रिष्टुप् छन्दः वरुणो देवता जलाभिमन्त्रणे विनियोगः । ततो नाभि मग्नया पञ्चमात्र.

तदाशास्ते यजमानो हविर्भि रहेलमानो वरुणेह बोध्यु रुशःस मा न आयु प्रमोषी ।

अनेन मन्त्रेण जलस्थावरुणरूपमभिमन्त्रणम् ।

उरुंहीति मन्त्रस्य शुन शेफ ऋषि त्रिष्टुप्छन्द, वरुणोदेवता जलपाने विनियोग

उरु हि राजा वरुणश्चकार
सूर्य्याय पन्था मन्वे' तवाउ ।
अपदे पादाप्रतिधातवेक
रपवक्ता हृदयाविधि'श्चित् ॥

अनेन जलपान हिरावमनम्। योऽस्मान्मित्यस्य मन्त्रस्य प्रजापति ऋषि गायत्रीछन्द' वरुणोदेवता मार्जने विनियोग'। योऽस्मान् जिघाएसति तमभ्यु'मिति वरुण परो मत्त परस्ता। अनेन मार्जनम्। धाम्न इत्यस्य मन्त्रस्य प्रजापति ऋषि शुचेत्यन्त यजु यदाहुरिति गायत्रीछन्द वरुणोदेवता अन्तर्जलजपे विनियोग धाम्नोधाम्नो वरुणऽ स्तोवरुण नोमुञ्च ।

यदाहुरघ्न्या वरुणेति शपामहे ततो वरुण नोमुञ्च अनेन जले निमज्य जप । उदुत्तममित्यस्य मन्त्रस्य शुन शेफऋषि त्रिष्टुप्छन्द वरुणोदेवता, स्नाने विनियोग । उदुत्तम वरुणपाश मस्मदवाधमं विमध्यमऽश्रथाय, अथावयमादित्य व्रते तवानागसो

---

(१) जले ।
(२) विग ।
(३) तमश्वमीति ।

ऽदितये स्वाम इति मज्जनम्। विष्णुस्मरणं सर्वस्नानेषु। स्नानं प्रवाहाभिमुखस्य प्रवाहाभावे सूर्याभिमुखस्य। तत्र जलएव स्थित्वा माध्याह्निक वक्ष्यमाणविधिना वस्त्रनिष्पीडनान्तं स्नानाङ्ग तर्पणं यद्यपि प्राप्तं तथापि सन्ध्याहोमकालविलम्बभङ्गया संक्षेपतर्पणम्।

तथाच ब्रह्माण्डपुराणे —

स्नात्वा तु विधिवत्पातर्दद्यात्तीर्थोदकाञ्जलीन।
सव्येन चोपवीतेन मन्त्रेणानेन मन्त्रवित्॥
आब्रह्मस्तम्बपर्यन्तं जगदेतच्चराचरम्।
मया दत्तेन तोयेन तृप्यत्वेतच्चतुर्विधमिति॥

इमं मन्त्रं प्रत्यञ्जलि पठित्वा देवतीर्थेन सव्यस्य जलाञ्जलित्रय दानम्। स्नानानन्तरं पैठीनसि अन्तरुदक आचान्तोऽन्तरेव शुद्धो भवति बहिरुदक आचान्तोबहिरेव शुद्धो भवतीति तस्मादन्तरेक बहिरेकञ्च कृत्वा पादमाचामेत्

शङ्खः अनेन विधिना स्नात मध्यध्ये स्नानवाससा।
परिवर्त्तितवासाश्च तीर्थतीरमुपस्पृशेदिति।

स्नानाङ्गतर्पणादौ स्नानवस्त्रस्य न परित्यागः। विष्णुः स्नात्वोष्ण धौते वाससी बिभृयात् नाङ्गेभ्यस्तोयमुद्धरेत्। अत्र उष्णीषधारणं शिरोजलनिर्गेजनार्थं तथाच द्रोणपर्व्वणि युधिष्ठिरस्नाने।

राजहंसनिभं प्राप्यमुष्णीषं शिथिलार्पितम्।
जलक्षयनिमित्तं वै वेष्टयामि स्वमूर्द्धनि॥

तमाक्रम्य इति शिरोभिन्नाङ्गविषय हारीत स्नात्वा न गात्र मवमृज्यात् एतच्च स्नानाङ्गम्।

तथा —

स्नातोऽङ्गानि वस्त्रेण पाणिना वा न मार्जयेदिति वस्त्रपाण्यो रुद्दश्य विशेषणत्वादविवक्षा तेन वस्त्रान्तरेणापि प्रकारान्तरेण वा मार्जने स्नानवगुण्य नाधर्म्म।

यत्तु —

हस्तेन मार्जित गात्रे स्नानवस्त्रेण मार्जित।

शुनोच्छिष्ट भवेत्तावत् पुन स्नानेन शुद्ध्यतीति॥

तद्रोगादिनाऽसहिष्णोरथप्राप्त मार्जने स्नानवस्त्रस्तन्निषेधपरम इति प्रात स्नानम्। अत स्नानाङ्गानि बौधायन न नग्न स्नायात्। स्नानाधिकारे जावाल —

नार्द्रमेकञ्च वसन परिदध्यात् कथञ्चन।

तथाच —नग्न कौपीनवासा वा द्विवासा स्नाति यो नर।

वृथा स्नानफल तस्य निराशा पितृदेवता॥

इति अधोवस्त्रद्वित्वे बोध्यम। शङ्खलिखितौ अनग्नअनग्न स्नायात् नाप्सु मेहनोत्सर्पण कुर्य्यात् न पादेन पाणिना वादक मभिहन्यात् न स्रवन्तीं वृथातिक्रमेदनवसिच्य अमेध्योदक परि हरेत् अम्पोदके न स्नायात् न समुद्रोदकमवगाहेत। अनग्नन् ताम्बूलादिकमभक्षयन् स्नायादित्यथ मेहन मूत्रोत्सर्ग अङ्ग प्रक्षालनार्थं उत्सर्पण जले न कुर्य्यात् अनवसिच्य तर्पणमकृत्वा नदीमतिक्रम्य न गच्छेत्। एतच्च तर्पणकाले दृष्टार्थत्वात् अमेध्यो

योगी याज्ञवल्क्यः —

यावद्वत्राद्वर्श्चैव पितृश्चैव न तर्पयेत् ।
तावन्न पीड़येद्वस्त्रं येन स्नातो नचोदके ॥
येन वस्त्रेण स्नातस्तर्पणात्पूर्व्वं तद्वस्त्रं न पीड़येत् ।

एतदपि स्नानप्रकरणासदृशम् ।

नारसिंहे —

नद्यां स्रवन्तु च स्नायात् प्रतिस्रोतं स्थितोद्विज ।
तड़ागादिषु तोयेषु प्रत्यक्स्नानमाचरेत् ॥

योगी याज्ञवल्क्यः —

नराद्याः प्रसूता वै तेन नारा इति स्मृताः ।
अयनं तस्य ताः पूर्व्वं तेन नारायणः स्मृतः ॥
यो हि व्रतानां तपसां यमस्य नियमस्य च ।
भोक्ता च यज्ञतपसां यो योगी ध्येय एव च ॥
स्मरेन्नारायणं देवं स्नानादिषु च कर्म्मसु ।
प्रायश्चित्तेषु सर्व्वेषु दुष्कृतान्मुच्यते पुमान् ॥
प्रमादात् कुर्व्वतां कर्म्म प्रच्यवेताध्वरेषु यत् ।
स्मरणादेव तद्विष्णोः सम्पूर्णं स्यादिति श्रुतिः ॥

एवञ्च सर्व्वस्नानाङ्गभूतो प्रायश्चित्तमिदं विशेषेणाभिधानात् पञ्चकर्म्माङ्गत्वेऽपि वाक्यसंयोगात् ।

यत्तु, बौधायनः नाप्सु सतः प्रयमणं विद्यते न वाससः पल्पूलनं नोपस्पर्शनं, यद्युपहन्यादपुरेतेनोपतिष्ठते नमोऽग्नयेऽप्सु सते नम इन्द्राय नमो वरुणाय नमो वारुण्यै नमोऽद्भ्यः । प्रयमणं

प्रवन वास पक्षलन वासोमलक्षालन उपस्पर्शनं देहमलक्षालनम् । अस्नानाद् यदि प्रवनादिभिरेभिराप उपकृता स्यु तदैतत् क्रियत इत्यर्थ इति स्नानकालीनाम्याङ्गानि ।

स्नानासामर्थ्ये योगी याज्ञवल्क्य —

असामर्थ्यात् शरीरस्य कालशक्त्याद्यपेक्षया ।
मन्त्रस्नानादय सप्त केचिदिच्छन्ति सूरय ॥
आपोहिष्ठेति व मान्त्र मृदालम्भस्तु पार्थिवम् ।
आग्नेय भस्मना स्नानं वायव्य गोरज स्मृतम् ॥
यत्तु सा उपवर्षण स्नान तद् दिव्यमुच्यत ।
वाक्यच्छावगहस्तु मानस विष्णुचिन्तनम् ।
कालदोषादसामर्थ्यात सर्व्व तुल्यफल स्मृतम् ।
मानस प्रवर स्नान केचिदिच्छन्ति सूरय ।
आत्मतीर्थप्रशंसायां व्यासेन गदित यथा ॥

आपोहिष्ठेति मार्जनमन्त्रोपलक्षणम । सर्व्व तुल्यफलमिति । यद्यपि वारुण मुख्य मन्त्रस्नानादिकमपि तदसम्भवे तत्कार्य्यकारित्वा तुल्यफलम् । आत्मतीर्थप्रशंसायाम ।

आत्मा नदीसङ्गमपुण्यतोया सत्यह्रदा शीलतटा दयोर्म्मि ।
तत्रावगाह कुरु राजपुत्र न वारिणा शुद्ध्यति चान्तरात्मा ॥

इति व्यासवाक्यम् तेनैतद्वाक्यभेदाद्ब्रह्माकारात्म करचरूप निराकारविष्णुचिन्तन मानस साकारचिन्तनं तदसामर्थ्ये । वशिष्ठ ,—चिन्तितं पुण्डरीकाक्ष मन्त्रमूर्त्ति प्रभु स्मरेत् ।

तत्पादोदकधाराञ्च निपतन्तीं स्वमूर्द्धनि ॥

चिन्तयेद्ब्रह्मरन्ध्रेण प्रविशन्तीं स्विका तनुम ।
तया सन्तानयेत्सर्व्वमन्तर्देहगत मलम ॥
इद स्नानवर मन्त्रस्नानाच्छतगुण स्मृतम् ।

एवञ्च मानस सर्व्वोत्कृष्टमिति तदसम्भवेऽशुकल्पान्तर तत्र ब्राह्मापरनामक मन्त्रस्नान

यथा योगी याज्ञवल्क्य —

शन्न आपस्तु द्रुपदा आपोहिष्ठाघमर्षणम ।
एतैश्चतुर्भिस्तृचमन्त्रैर्मन्त्रस्नानमुदाहृतम ॥

अथ भौमस्नानं यथा पञ्चप्रोक्षणादि कृत्वा गङ्गामृत्तिकादिना सर्व्वाङ्गलेपनम् । तत्र मन्त्र —

अनन्तेन वराहेण उद्धृतासि वसुन्धर ।
कृष्णेनाक्लिष्टकार्य्येण चक्रहस्तेन विष्णुना ॥
धरणि त्व महाभागे भूमिस्त्व धनुरव्यये ।
लोकाना धरणि त्व हि मृत्तिके हर पातकम ॥
मनसा कर्म्मणा वाचा वरदे वारिजेक्षणे ।
त्वयाहृतेन पापेन जीवामस्त्वत्प्रसादत ॥

अय मन्त्रो यद्यपि यज्ञवराहदंष्ट्रोद्धृतमृदालम्भ उक्त तथाप्यतातिदेशेन प्रवक्तत ।

वराहदंष्ट्राभिन्नाया धराया मृत्तिका द्विज ।
मन्त्रेणानेन योविभ्रन्मूर्द्धि पापात् प्रमुच्यत ॥
आयुष्मान् बलवान धन्य पुत्रपौत्रप्रतिष्ठित ।
ब्रह्माद्युषि न्यि प्राप्य कर्म्मान्ते मोदत सुररिति ॥

कार्य्यो यो मृदालम्भः स सर्व्वोत्तरं कार्य्यः । आग्नेय यथा तत्र भस्मना कार्य्यम् । तत्र मुख्यं गार्हपत्यभस्म तदभावे आत्तभस्म तदभावे पञ्चगव्यसाधकं भस्म । न सर्व्वथा लौकिकम् ।

एवं संस्काररहितं न तु भाज्ञं कथञ्चनेति निषेधात् । मन्त्रस्तु ।

आग्नेयमग्निलिङ्गेन मन्त्रेण स्नानमाचरेत् ।
वायव्यं वायुलिङ्गेन दिव्यं सौरेण सर्व्वदा ॥

इति वाक्ये—भस्मस्नाने आग्नेयमन्त्रः ।

अग्निर्मूर्द्धा दिवः ककुत्पतिः पृथिव्या अयमपाᳪरेताᳪसि जिन्वतीत्यनेन सर्व्वाङ्गे भस्मसंयोगः कार्य्यः । अथ वायव्यं गोखुरोद्धूतरजसा वायुप्रचलितेन सर्व्वाङ्गे संयोगः ।

तत्र मन्त्रः —

वातो वायो मनोवा गन्धर्व्वाः सप्तविंशतिः ।
तेऽग्रेश्वमयुञ्जᳪस्तेऽस्मिन् जवमादधुः ॥

अथ दिव्यस्नानं तच्च अनभ्रवृष्टौ निरावरणस्यावस्थानम् । तत्र कृत्तिकादिविषमपर्य्यायनक्षत्रेषु हिमजोज्झितं गङ्गाजलमिति बुद्धिः कार्य्या । रोहिण्यादिषु युग्मनक्षत्रेषु सूर्य्यरश्मिभिरानीतं गङ्गाजलमिति बुद्धिः कार्य्या ।

उदुत्यं जातवेदसं देवं वहन्ति केतवः दृशे विश्वाय सूर्य्यं इति मन्त्रमुच्चार्य्य अनभ्रवृष्टिमध्ये निरावरणोऽवतिष्ठते ।

अथ मानसस्नानं विष्णुपदं यद्यपि सर्व्वेषामेव साधारणमेव तथाप्यविद्योपहितव्यापकस्वगुणपुरस्कारेण ब्रह्मणैव मुख्यं, साकारे

ऽपि गौणमेवेति साकारनिराकारयो गौणत्वाविशेषेऽप्याकृतीच प्रशंसायां व्यासेन गदित यथेतिवाक्यशेषात् ।

तेन निराकारस्यैव व्यासवाक्ये कीर्त्तनात् ब्रह्माकाराभ्यन्तरवृत्तिरेव मुख्यं मानसं स्नानं तदसम्भवे चतुर्भुजाद्याकारविशिष्टस्य स्मरण तस्यैव स्वरूपमिति । यद्वा अविद्याकल्पितव्यापकत्वगुणविशिष्टचैतन्यमेव मुख्याश्रयत्वादेयमिति ।

यत्तु आकाशस्थमच्युतमूर्त्तिविष्णुध्यानपूर्व्वकं तत्पादगलितामृतधारां ब्रह्मरन्ध्रेणान्तः प्रविष्टां विचिन्त्य तेन सर्व्वदेहक्षालनचिन्तनं तथाम्भोपासकानां मानसस्नानम् । जावाल —

अग्निरुक्तं भवेत् स्नानं स्नानाशक्तौ तु कर्म्मिणाम् ।
आर्द्रेण वाससा वापि मार्ज्जनं दैहिकं विदुः ॥

इति स्नानद्वयम् । तथा —

नाभेरध प्रविश्याप्सु कटिं प्रक्षाल्य मृज्जलैः ।
जलार्द्रकपटेनाङ्गशोधनं कापिलं विदुः ॥

एतदपि शिरःस्नानासम्भवे एतदसम्भवेऽङ्गप्रोञ्छनं कुर्व्वन्ति इमान्यपि कालाखेदादिदोषाप्रायत्यनिर्हरणार्थत्वेन प्रातःस्नानाशक्तौ अनुकल्परूपाणीति बोध्यम् । इति प्रातःस्नानं साङ्गं निरूपितम् ।



## अथ वस्त्रपरिधानम् ।

याज्ञवल्क्यः —

क्षालितं वाससी धौते अक्लिन्ने परिधाय च ।

अभावे धौतवस्त्रस्य शाणक्षौमाविकानि च ॥

कुतपं योगपट्टं वा द्विवासा येन जायते ।

धौतं कार्पासं शणसूत्रभवं शाणं, अतसीभवं क्षौमम् । गौतमः

वासांसि शाणक्षौमचीरकुतपाः सर्व्वेषां कार्पासं वाविकृतं काषाय

मप्येके धार्य्यं ब्राह्मणस्य । चीरं कुशादिनिर्मितं कुतपं पार्व्वतीय

छागरोमनिर्म्मितं काषायस्य निषेधो वक्ष्यते । आपस्तम्ब

आविकं सार्व्ववर्णिकम् ।

मनुः —

न जीर्णमलवद्वासा भवेच्च विभवे सति ।

जावालिः —

नाद्रमेकञ्च वसनं परिदध्यात् कथञ्चन ।

तथा परधृतं वर्ज्जयेत् तदप्यसम्भवे धौतं सदा धार्य्यमिति

वक्ष्यते ।

तथाच शुक्लं स्वयं क्षालितं शुभ्रं अजीर्णं परिदध्यात् वस्त्रं

अधोनाभ्यां उपरि जान्वाच्छादयीत इति वचनाज्जातोन्यूनमिति

किञ्चिदाधिक्ये न दोषः ।

वामे पृष्ठे तथा नाभौ कक्षत्रयमुदाहृतम् ।

त्रिभिः कक्षैः परीधत्ते यो विप्रः स शुचिः स्मृतः ॥

तेन वेष्टितवस्त्रस्य प्रत्यक्प्रान्तं पृष्ठ मध्य वामकक्ष्यां प्राक्प्रान्तं नाभौ वस्त्र देशान्तराले प्रवेशयेत् एतदेवोक्तम् ।

परिदध्याद्बहि कच्छानिवद्धा ह्यासुरी भवेत् एकदेशवहिर्भावेऽपि दोष पूर्व्वसदृशं वस्त्रं उत्तरीयञ्च कुर्य्यात् । उत्तरीयवस्त्रस्य समाख्यया उत्तराङ्गाच्छादक तदेकदेशाच्छादनेऽप्यविरुद्धमेव । आपस्तम्ब नाधोवस्त्रैकदेशेनोत्तराङ्ग च्छादयेत् प्रतिनिधित्वेन प्राप्तस्यापि निषेध ।

यत्तु गर्ग्ग एकश्चेत् पूर्व्वस्यैवोत्तरवस्त्रं च्छादयीतेति तत्समावृत्त नाङ्गमेव तेन वस्त्रासम्भवे प्रतिनिधिरूपेण क्षौमाजिनवल्कलादि ग्रहणम् ।

अत्र च आपस्तम्ब —

देवागारे तथाश्राद्ध गवाङ्गोष्ठ तथाऽध्वरे ।
सन्ध्ययोरुभयो साधुसङ्गमे गुरुसन्निधौ ॥
अग्न्यगारे विवाहे च स्वाध्याये भोजने तथा ।
उद्धरेद् दक्षिण पाणिं ब्राह्मणानाञ्च सन्निधौ ॥

इति उत्तरीयवस्त्रस्यापि यज्ञोपवीतवद्धारणम् । तथा च सव्येऽंश उत्तरीय निधाय दक्षिण बाहु उत्तरीयाद्बहि कुर्य्यादित्यर्थ । श्राद्धेऽपसव्य वासो यज्ञोपवीतं कृत्वेति पित्र्य नियम दैवेऽर्थ्यादेव सव्य धारण अन्यकर्म्मस्वनियम ।

शातातप —

सव्यादंशात्परिभ्रष्ट कटिदेशे धृताम्बरम् ।
एकवस्त्रं विजानीयाद्दैवे पित्र्ये च कर्म्मणीति ॥

तत्र परिधानमन्त्रो यथा —

परिधास्यै यशोधास्यै दीर्घायुत्वाय जरदष्टिरस्मि।

शतञ्च जीवामि शरदः सुवर्चा रायस्पोषमभिसंव्ययिष्ये ॥

पूर्व्वोक्त मन्त्राभावे नवस्य उत्तरीयमन्त्रो यथा —

यशसा मा द्यावापृथिवी यशसेन्द्राबृहस्पती ।

यशो भगश्च मा विदद्यशो मा प्रतिपद्यताम् ॥

नवोष्णीषमन्त्रो यथा —

युवा सुवासाः परिवीत आगात् स उ श्रेयान् भवति जायमानः ।

तं धीरासः कवय उन्नयन्ति स्वाध्यायो मनसा देवयन्तः ॥

इति वस्त्रधारणम् ।

वस्त्रपरिधानानन्तरं योगि याज्ञवल्क्यः —

प्रक्षाल्योरू मृदाद्भिश्च हस्तौ प्रक्षाल्य वै तथा ।

स्नात्वा संवेष्ट्य वासोऽन्यं अथ संशोधयेन्मृदा ।

उरू जङ्घाक्षालनं वाहनस्नाने गुदजलसंसर्गशोधनार्थम् ॥

तथा च पराशरः —

अपवित्रीकृतं ते तु कौपीनच्युतवारिणा ।

कौपीनतोऽपगतच्युतेन वारिणेति लक्ष्मीधरव्याख्या । तत्र वस्त्रा

दीनां याज्ञवल्क्याद्युक्त तच्छुद्धिश्च विचार्य्यते ।

नरसिंहपुराणे —न रक्तमुल्बणं वासो न नीलञ्च प्रशस्यते ।

उल्बणं प्रधानाभ्यां उपरि आत्मान्छादयीतेति यत्प्रमाणादधिकं

तथा नोत्तरीयाऽधोवाससो विपर्य्यासं कुर्य्यात् न रात्रिवासो

दिवा परिदध्यात् रात्रिवास पदेन शयनकालीनवस्त्रम् ।

महाभारते —

अन्यदेव भवेद्वस्त्रं शयनीये सदैव होति ।

तथा सर्व्वरागाणां वाससि परिवर्जयेत् कृष्णञ्च स्वाभाविकम् ।

तथा,—

नीलीरक्तं यदा वस्त्रं ब्राह्मणोऽङ्गेषु धारयेत् ।

अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥

यम ,—

नीलीरक्तं परीधाय भुक्त्वा स्नानादिकस्तथा ।

त्रिरात्रं तु व्रतं कुर्य्याच्छित्त्वा गुल्मलतास्तथा ॥

स्नानादिकञ्च पञ्चालादिसृष्ट' नीलवासोधारणेऽधिकदोष इत्यर्थ ।

स्मृत्यन्तरे —

नग्नः काषायवासाः स्यात् नग्नः कौपीनवानपि ।

नग्नो द्विगुणवासाः स्यान्नग्नश्चार्द्रपटस्तथा ॥

यद्धोऽनुत्तरीयश्च नग्नो वर्ज्यो विवस्त्रवत् ॥

ब्रह्माण्डे —

पितृदेवार्च्चने होमे कुर्य्यात्कार्पासमंशुकम् ॥

क्षौमं वा वल्कलं वापि न कौशेयं कदाचन ॥

नोत्तरीयमधः कुर्य्यान्नाभिवासो द्विजे तथा ।

न रात्रिवाससा स्नायाच्च नोमार्जयेत्तथा ॥

बौधायन, —

काषायवासाः कुरुते जपहोमप्रतिग्रहान् ।

न तद्देवगमं भवति, हव्य कव्ये तथा हवि' ॥

अत्रि,—

प्रत्यह चालयेद्वासो देवे पित्र्येऽपि कर्मणि।

इति पूर्व्वधृते केवलाम्बुचालनेन शुद्धि। प्रत्यहमिति पूर्व्वधृत विषयमेवेति बोध्यम्। अन्यथा एकस्य वस्त्रस्य बहुवारं परिधाने चालनं विनापि शुद्धि स्यात्। नचेष्टापत्ति नाप्रक्षालितमिति शास्त्रेण तन्निषेधात्। तद्वचन च नाप्रक्षालित पूर्व्वधृतं वासो विभृयात्। इति वाक्यं यत्र गृहस्थधर्म्मप्रकरणे आम्नात तत्रैव वस्त्रद्वयपरिधानं विहित तस्मात् चालनं काम्यमेव। अन्यथा फलकल्पनगौरवापत्ति। तेन शीतवारणाद्यर्थे वस्त्रान्तरे नाय नियम इति प्राचीना। वस्तुतस्तु पूर्व्वपरिहित वास प्रक्षाल्यैव विभृयादिति वचनान्तरे परिहितपदादधोवस्त्रपरमेव चालनम्। एतत्समानार्थत्वात् पूर्व्वधृतमित्यपि अधोवस्त्रपरम्। तनोत्तरीयस्य न प्रत्यहं चालनम्। एवमुत्तरीयस्य सीवनेऽप्यदोष नग्न स्यूत पटस्त्वयेति नग्नपदोपादानादधोवस्त्रस्यैव सीवने दोष। अतो नवोत्तरीयस्य सीवनमाचारो न विरुद्ध। किन्तु जीर्णवस्त्रस्य अधोवस्त्रोत्तरीयसाधारण्येन निषेधात् जीर्णोत्तरीयस्य सीवनमनु चितम्।

महाभारते —

स्वयं धौतेन कर्त्तव्या क्रिया सर्व्वा विपश्चिता।

न निर्णेजकधौतेन नाहतेन कदाचन॥

इति स्वधौतस्य कर्म्माङ्गत्वेन विधौ निर्णेजकधौतस्य प्रसक्त्यभावात् तन्निषेधोनित्यानुवादस्तुत्यर्थ। न च प्रतिनिधित्वेन प्राप्तस्य

अत्रि,—

प्रत्यहं क्षालयेद्वासो दैवे पित्रेऽपि कर्म्मणि।

इति पूर्व्वधृते केवलाम्बुक्षालनेन शुद्धिः। प्रत्यहमिति पूर्व्वधृत विषयमेवेति बोध्यम्। अन्यथा एकस्य वस्त्रस्य बहुवारं परिधाने क्षालनं विनापि शुद्धिः स्यात्। नचेष्टापत्तिः नाप्रक्षालितमिति शास्त्रेण तन्निषेधात्। तद्वचनञ्च नाप्रक्षालितं पूर्व्वधृतं वासो विभृयात्। इति वाक्यं यत्र गृहस्थधर्म्मप्रकरणे आम्नातं तत्रैव वस्त्रद्वयपरिधानं विहितं तस्मात् क्षालनं तत्परमेव। अन्यथा फलकल्पनगौरवापत्तिः। तेन शौतवारणार्थं वस्त्रान्तरे नाय नियम इति प्राचीनाः। वस्तुतस्तु पूर्व्वपरिहितं वासः प्रक्षाल्यैव विभृयादिति वचनान्तरे परिहितपदादधोवस्त्रपरमेव क्षालनम्। एतत्समानार्थत्वात् पूर्व्वधृतमित्यपि अधोवस्त्रपरम्। तेनोत्तरीयस्य न प्रत्यहं क्षालनम्। एवमुत्तरीयस्य सीवनेऽप्यदोषः नग्नः स्यूतपटस्त्वेति नग्नपदोपादानादधोवस्त्रस्यैव सीवने दोषः। अतो नवोत्तरीयस्य सीवनमाचारो न विरुद्धः। किन्तु जीर्णवस्त्रस्य अधोवस्त्रोत्तरीयसाधारण्येन निषेधात् जीर्णोत्तरीयस्य सीवनमनुचितम्।

महाभारते —

स्वयं धौतेन कर्त्तव्या क्रिया सर्व्वा विपश्चिता।

न निर्णेजकधौतेन नाहतेन कदाचन॥

इति स्वधौतस्य कर्म्माङ्गत्वे विधौ निर्णेजकधौतस्य प्रसक्त्यभावात् तन्निषेधोनित्यानुवादस्तुत्यर्थः। न च प्रतिनिधित्वेन प्राप्तस्य

वृहस्पति --

वस्त्रवैदलचर्म्मादे शुचि प्रक्षालन स्मृतम् ।
अतिदुष्टस्य तन्मात्र त्यजेच्छित्त्वा तु शुद्धये ॥

देवल — तान्येवामेध्यलिप्तानि क्षालयेत् साधकै स्वकै ।
धान्यकल्कैस्तु फलजै रसै क्षारानुगैरपि ॥

तानि क्षौमादिकानि ।

विष्णु — अत्यन्तोपहत यच्च क्षालनेन यन्न विरज्यते तच्छिन्द्यात् ।

शिष्टा — तद्विमिश्रोत्थसंसृष्टवस्त्राणा क्षारवारिणा ।

देवल --

तूलिकामुपधानञ्च रक्तपुष्पाम्बर तथा ।
शोषयित्वातपे किञ्चित् करै रुमार्जयेन्मुहु ॥
पश्चाच्च वारिणा प्रोक्ष्य नियुञ्जीत स्वकर्म्मणि ।
तान्यप्यतिमलिष्ठानि यथावत्परिशोधयेत् ॥

पुष्परक्तमिति हरिद्रारक्तस्य उपलक्षणम । रागद्रव्याणि प्राक्षितानि शुचीनीति शङ्खवचनात् । एतच्च रागलोपभयात् अतएव माञ्जिष्ठ रागादौ क्षालनमेवेति विश्वामित्रादय । कार्पासतन्तुकृत वस्त्र दुकूलादिशब्दवाच्यम् । कौशेय कृमिकोशोत्थ तसरिपट्टादि । क्षौम अविलोमकृत कम्बलादि । अंशुपट्ट वल्कलतन्तुकृतम । अतसी तन्तुकृत क्षौम तद्भ्रमान्तरीयमिति विज्ञा ।

याज्ञवल्क्य --

सोषरोदकगोमूत्रै शुध्यत्याविककौशिकम ।
सश्रीफलैरंशुपट्ट सारिष्टै कुतपस्तथा ॥

शाश्च सश्च विण्मूत्रशुक्रैश्च दूषितश्च तदम्बुभिरिति वचनात् कल्कादावसम्भवे अश्वशाल्मलिपट्टादीनां शुद्धि ।
नीलीरक्तवस्त्रनिषेधेऽपवादमाह स्मृत्यन्तरे ।

कम्बले पट्टवस्त्रे च नीलीरागो न दुष्यति ।
स्त्रीणां क्रीडार्थसम्भोगे शयनीये तथैव च ॥
वोढ़ता शयने निली ब्राह्मणस्य न दुष्यति ।
नृपस्य हर्षे वैश्यस्य पर्व्ववर्ज न दुष्यति ॥
प्रसङ्गाच्चर्म्मवालयोरपि शुद्धिर्लिख्यते ।

चेलवच्चर्म्मणां शुद्धि

कृष्णाजिनानां चार्म्मणां वालानां शुद्धिरम्भसा । काश्यप इत्यादीनां रञ्जनात् शुद्धि । इति पर्य्यवसित रञ्जनं काषायद्रव्येण शोधनम् । गृह्यपरिशिष्ट —

दर्भा कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नय ।
अयातयामान्येतानि नियोज्यानि पुन पुन ।

पर्य्यवसित तद्विकाराणां वरत्रादीनामुपलक्षणमिति विज्ञानेश्वरा । एव सर्व्वत्रापि विकृतिषु प्रकृतिशुद्धिरेवेति उपरिष्टादधोऽप्यव गन्तव्यम् । इति वस्त्रादिशुद्धि ॥

यज्ञोपवीतव्यावश्यकत्वं तत्प्रकारश्च लिख्यते कात्यायन —

सदोपवीतिना भाव्यं सदा बद्धशिखेन तु ।
विशिखो व्युपवीतश्च यत् करोति न तत् कृतम् ॥

श्रुति,—

यज्ञोपवीत्येवाधीयीताध्यापयेद् याजयेद् यजेत ।

मनु — कार्पासमुपवीतं स्याद्विप्रस्योर्ध्ववृतं त्रिवृत् ।

त्रिवृता ग्रन्थिनैकेन तस्यैको ग्रन्थिरिष्यते ॥

कात्यायन —

ऊर्ध्वं तु त्रिवृतं कार्यं तन्तुत्रयमधोवृतम् ।

त्रिवृतं चोपवीतं स्यात्त्रिवृता ग्रन्थिना युतम् ॥

पृष्ठवंशे च नाभ्यां च धृतं यद्विन्दते कटिम् ।

यज्ञोपवीतं तद्धार्यं नातिह्रस्वं नचोच्छ्रितम् ।

वामावृत्तं त्रिगुणं कृत्वा दक्षिणावृत्तं नवगुणं कुर्यात् तदेव च त्रिरावृत्तं[1] चोपवीतं वामस्कन्धे धृतं नाभिपृष्ठवंशयोर्वृतं यथा कटिपर्यन्तं प्राप्नोति तावत्परिमाणं कार्यमित्यर्थः ।

आपस्तम्ब — उपासने गुरूणां वृद्धानामतिथीनां होमे जप्ये कर्मणि भोजने आचमने[2] च यज्ञोपवीती स्यात् ।

निगमपरिशिष्टे — वामस्कन्धे यज्ञोपवीतं दधे प्राचीनावीतीति इतरथा विस्रस्य नाभ्यादिकण्ठावसक्तमभिचारे निवीतं चाण्ठ ईशावलम्बं ग्राम्यधर्मेषु । कण्ठपदं लक्षणया स्कन्धपरं द्विस्कन्धावसक्तं इत्यर्थः । ग्राम्यधर्मो मैथुनम् ।

गोभिल — दक्षिणबाहुमुद्धृत्य सव्येंऽसे प्रतिष्ठापयति दक्षिणं कक्षमवलम्बं भवति एवं यज्ञोपवीती भवति सव्यं बाहुमुद्धृत्य शिरोऽवधाय दक्षिणेंऽसे प्रतिष्ठापयति सव्यं कक्षमवलम्बं भवति एवं प्राचीनावीती भवति ।

---

(1) त्रिवरम । ( ) स्वाध्याये ।

## अथ तिलकधारणम् ।

स्नातस्तिलकं कृत्वा नित्यं कुर्य्याद्विद्यापते ।
प्रियङ्गुचन्दनाभ्यां वा बिल्वेन तगरेण वा ॥

तथा — अशुचिर्वाप्यनाचारः पापं वा यदि चिन्तयेत् ।
शुचिरेव भवेन्नित्यमूर्द्ध्वपुण्ड्राङ्कितो नरः ॥

तथा च शौचसम्पादकत्वेन सर्व्वकर्म्माङ्गफलवत्त्वात्पुरुषार्थम् ।

यच्छरीरं मनुष्याणामूर्द्ध्वपुण्ड्रविवर्जितम् ।
द्रष्टव्यं नैव यत्किञ्चित् श्मशानसदृशं हि तत् ॥
ऊर्द्ध्वपुण्ड्राङ्कितो नित्यं ब्रह्मलोके महीयते ।

सामान्यतस्तु उत्तमोमध्यमोहीनश्चतुस्त्रिद्व्यङ्गुलैः क्रमात् ।
वर्त्तिदीपाकृति कार्य्या वेणुपत्राकृतिस्तथा ।
पद्मस्य मुकुलाकारं कुमुदस्योत्पलस्य च ॥

अथवा

ललाटे दण्डवत् कुर्य्यात् हृदये कमलाकृतिम् ।
वेणुपत्राकृतिं बाह्वोः कुर्य्यादन्यत्र दीपवत् ॥

इत्याकाराणि ।

तथा — गङ्गामृत्तिकया चैव स्नात्वा कुर्य्याल्ललामकम् ।
चन्दनेन सदा वापि कुर्य्यात्तत्र ललामकम् ॥
ललाटकण्ठहृद्बाहौ सर्व्वकल्मषनाशनम् ।
ललाटे वासुदेवाख्यं कण्ठे विष्णुमथाव्ययम् ॥
प्रद्युम्नं चानिरुद्धं च बाह्वोर्हृदि तथाच्युतम् ॥

तुलसीप्रक्रमे,—

तन्मृदा चरितं पुण्ड्रं ललाटे सर्व्वसिद्धिदम् ॥

तुलस्याश्च सदा कुर्य्यात्प्रदेशिन्या यथाक्रमम् ।

मध्याङ्गे चानामिकया सदानामिकया बुधः ॥

इति वाक्यदर्शनात्प्रदेशिन्या अनामिकया वा धारणम् । यदि धात्री मृत्तिकानां सौकर्य्यार्थं एकीकरणेन तिलकधारणं तदा न कश्चिद्विरोधः ।

पादाकृति हरेः पुण्ड्रं धारयेच्छिद्रसंयुतम् ।

स याति वैष्णवं स्थानं ब्रह्मेरपि सुदुर्लभम् ॥

नासिकामूलमारभ्य केशान्तं धारयेद्बुधः ।

मध्ये छिद्रं तत्र कृत्वा वैष्णवो विष्णुलोकभाक् ॥

इदं तु वैष्णवेन कार्य्यं गोदोहनवत् फलायम् । दीपशिखाद्याकारस्तु चमसवदिति । तत्र ललाटे सच्छिद्रपादाकारोऽन्यत्र दीपशिखाद्याकार एवमेव समाचारः । सामर्थ्ये तु

ललाटे केशवं विद्यान्नारायणमथोदरे ।

माधवं हृदये चैव गोविन्दं कण्ठकूपके ॥

उदरे दक्षिणे पार्श्वे विष्णवे नम उच्चरेत् ।

तत्पार्श्वे बाहुमूले तु स्मरेत मधुसूदनम् ॥

त्रिविक्रमं वामपार्श्वे वामे कुक्षौ तु वामनम् ।

श्रीधरं बाहुके वामे हृषीकेशं तु कण्ठके ॥

पृष्ठे पद्मनाभं तु दामोदरं ककुद्यपि ।

सर्व्वान् मध्य मूर्ध्नि देवी वासुदेवं च मूर्द्धनि ॥

नामानि द्वादशैतानि नमस्कारयुतानि च ।

प्रयुञ्जीत हरिं ध्यात्वा वासुदेवेति मूर्द्धनि ॥

इत्येवं विहितत्वाच्च । वराहपुराणे —

ललाटे वासुदेवाख्यं कण्ठे श्रीपुरुषोत्तमम् ।

नाभौ नारायणं धृत्वा सर्वपापैः प्रमुच्यते ॥

तत्र — नारायणायुधैर्युक्तं ललाटाग्रं कलौ युगे ।

कुरुते पुण्यकर्माणि निवृत्तान्यानि तानि तु ॥

चक्राङ्कितततनुर्भूत्वा यः श्राद्धं कुरुते नरः ।

तच्छ्राद्धं प्रतिगृह्णाति ममायं च गदाधरः ॥

इति सत्सकर्मानुष्ठाने फलातिशयाय शङ्खचक्रादिधारणं चक्रभूत

वचनान्तरात् पुरुषार्थं च । तथाच स्मृतिः —

नारायणायुधैर्नित्यं भूषितो यस्य विग्रहः ।

पापकोटिप्रयुक्तस्य तस्य किं कुरुते यमः ॥

यत्तु निषेधवचनं पठति —

एकजातेरयं धर्मो न द्विजाते कथञ्चन ।

इति तत्र एकजाती शूद्रस्तस्यायं धर्मश्चक्रादिधारणमित्यर्थः ।

द्विजातिपदञ्च वक्षवैश्यपरं, तथा च न क्षत्रवैश्ययोश्चक्रादि

चिह्नधारणं ब्राह्मणानां तु तद्धारणस्य विहितत्वात् ।

तथाच

उपवीतादिवद्धार्य्याः शङ्खचक्रादयः सदा ।

ब्राह्मणस्य विशेषेण वैष्णवस्य च तद्भवेत् ॥

चक्राङ्कितततनुर्विप्रो भुङ्क्ते यस्य च वेश्मनि । इति ।

तल्लेखनं च—

विलिखेद्देवचिह्नानि तुलसीगोपिकामृदा ।

इति वचनात् तुलसीमृत्तिकया गोपीचन्दनेन वा ।

कृत्वा काष्ठमयाम् बिम्बाम् कृष्णचिह्नैश्च चिह्नितम् ।

यश्चाङ्कयति चात्मानं तत्समो नास्ति वैष्णव ॥

यच —

शङ्खं चक्रञ्च य कुर्य्यान्मृदा कार्ष्णायसेन च ।

स शूद्रवद्बहि कार्य्य' सर्व्वस्मात् द्विजकर्म्मणि ॥

अत्र कार्ष्णायससाहचर्य्यान्मृत्पदं बिम्बपरं तेन कृत्वा काष्ठमय बिम्बमिति विहितकाष्ठमयबिम्बाभावे प्रतिनिधित्वेन प्राप्तयो मृन्मयलौहबिम्बयोर्निषेध । तेन ताम्रादीनां प्रतिनिधित्वेन करणे न दोष ।

दक्षिणे तु करे विप्रो बिभृयाद्वै सुदर्शनम् ।

सव्ये शंखन्तु बिभृयादेव ब्रह्मविदो विदु' ॥

शङ्खोपरि कृते पद्मे प्रत्यहं दक्षिणे करे ॥

वामे गदाधरञ्चक्रे वासुदेव स्वयम्भवेत् ॥

इति वचनादुभयत्र उभय धार्य्यं न च विकल्प एकार्थज्ञानात् ।

सर्व्वाङ्गं चिह्नितं यस्य नारायणकरायुधै ।

वैष्णवत्व कृतं तस्य पापं न प्रविशेत्क्वचित् ॥

इति सर्व्वाङ्गेऽपि धारणम् । तत्र मन्त्र

पाञ्चजन्य निजध्वानध्वस्तपातकसञ्चय ।

त्राहि मां पापिन घोरे संसारार्णवपातनम् ॥

## अथ मालाधारणम् ।

रुद्राक्षं धारयेन्नित्यं सन्ध्यादिषु च कर्मसु ।
अरुद्राक्षधरो भूत्वा यद्यत्कर्म च वैदिकम् ॥
करोति जपहोमादि तत्सर्वं निष्फलं भवेत् ।

इति । सर्वकर्मसु एतद्धारणं नित्यम् ।

शिष्टा —

पुण्यानां परमं पुण्यं पवित्रं पापनाशनम् ।
रुद्राक्षधारणं श्रेष्ठमिहलोके परत्र च ॥
मूर्खो वाऽप्यथवाऽज्ञातो वा युक्तो वा सर्वपातकैः ।
रुद्राक्षं धारयेद्यस्तु स रुद्रो नात्र संशयः ॥

इति फलश्रुतेः संयोगपृथक्त्वन्यायेन काम्यं च ।

### धारणस्थानम् ।

हस्ते बाहौ तथा कर्णे रुद्राक्षं मूर्ध्नि धारयेत् ।
अवध्यः सर्वभूतानां रुद्रवद्विचरेद् भुवि ॥
सर्वपापविनिर्मुक्त[1] स गच्छति परां गतिम् ।
यज्ञोपवीतस्थाने च विप्राणां धारणं हितम् ॥
दशकोटिगुणं पुण्यं धारणाल्लभते जपे ।

अत्र विप्राणां यज्ञोपवीतस्थाने धारणं जपाङ्गं च दशकोटि गुणफलरूपकाम्यफलार्थम् । तेन पुरुषार्थधारणे[1] अपि जपेऽमुककामनां विना धारणं न यज्ञोपवीतस्थाननियम ।

---

(१) सर्वोपराङ्गधारणे ।

पञ्चामृतं पञ्चगव्यमघोरेण तथा मनुः

एवं प्रतिष्ठा रुद्राक्षे धारयेत्तु जपेच्च ताम् ॥

अघोरमन्त्रेण पञ्चामृतपञ्चगव्याभ्यां स्नापयित्वा धारयेत् जपेऽक्षमालां वा कुर्य्यादित्यर्थः । समन्त्रकधारणपक्षे हूं ह्रीं मित्यादि मन्त्रोऽन्यत्र द्रष्टव्यः । तथा —

रुद्राक्षान् कण्ठदेशे दशनपरिमितान् मस्तके विंशती द्वे

षट् षट् कर्णप्रदेशे करयुगलगतान् द्वादश द्वादशैव

बाह्वोरिन्दोः कलाभिः पृथगभिगदितमेकमेकं शिखायां

वक्षस्यष्टाधिकं यः कलयति शतकं स स्वयं नीलकण्ठः

---

## अथ तुलसीमालाधारणम् ।

अत्र स्मृतिः

तुलसीकाष्ठमालाया भूषित पुण्यमाचरेत्

पितॄणां देवतानाञ्च कृतं कोटिगुणं भवेत्

इति वचनात् यत्र क्वापि धारणं कर्णयोः शिरसि बाह्वौ च

धारणं फलाढ्यम्

तुलसीकाष्ठसम्भूत शीर्षे बाह्वौ च भूषणम्

वहते यस्तु वै मर्त्यो देहे तस्य सदा हरि

इतिवचनात् तत्र विप्र समग्र धार्यम्

निवेद्य केशवं माल तुलसीकाष्ठसम्भवाम्

वहते यो नरा नित्यं तस्य नास्ति पातकम्

तथा —

तुलसीकाष्ठमालां तु कण्ठस्थां वहेत्स

अप्यशुचिर्व्याप्यनाचारो मामेवति सय

स्कान्दे च —

तुलसीकाष्ठसम्भूता माला धार्या मया सदेति

भक्तश्रेष्ठा प्रतिज्ञानात् भक्तजनावश्यं धार्या ।

अधारणे च दोष —

धारयन्ति न ये मालां तुलसीकाष्ठसम्भवाम् ।

नरकान्न निवर्तन्ते दग्धा कोपाग्निना हरे ॥

---

## अथ विष्णुनिर्म्माल्यधारणम् ।

तदपि धर्म्माचरणे प्रशस्तम्

कृत्वा तुलसीपत्रं शिरसा विष्णुतत्परः
करोति धर्म्मकार्य्याणि फलमाप्नोति चाक्षयम् ॥

इति वचनात् पुरुषार्थं च फलश्रवणात्

विष्णुमूर्द्ध्नि स्थितं पुष्पं शिरसा यो वहेन्नरः
अपर्य्युषितपापः स्याद् यावद्युगचतुष्टयम्
विष्णोरङ्गात्परिभ्रष्टं मालतीकुसुमं स्रग
यो धारयति शिरसा सर्व्वधर्म्मफलं लभेत्
यस्य नाभिस्थितं पुष्पं मुखं शिरसि कर्णयोः
तुलसीसम्भवं नित्यं तीर्थैस्तस्य मखैश्च किम्
तुलसीदलमाला तु कण्ठोत्तीर्णा वक्षसु च ।
पदे पदेऽश्वमेधानां दशानां लभते फलम्
अहोरात्रं स्थितं यस्य तुलसीदलसम्भवम्
क्षिप्यते पापं पद्मपत्रमिवाम्भसा ॥

इति वचनात् अहोरात्रधारणे मूत्रपुरीषकालेऽपि धार्य्यम् ।

श्रीपादपद्म नैवेद्यपत्रं मूर्द्धि धारयेत् ।
न च जिघ्रेत् पात्रान्निवेदितं च भक्षयेत् ।

स्कान्दे च निर्म्माल्यं शिरसा धार्य्यं त्वदीयं सादरं मया इति
क्षणवप्रतिज्ञासिद्धनरत्वाच्च धार्य्यम्

---

## अथ शिखाबन्धनम् ।

कात्यायनः —

सदोपवीतिना भाव्यं सदा बद्धशिखेन तु

विशिखो व्युपवीतश्च यत्करोति तत्कृतम् ॥

इति शिखाबन्धनं कर्माङ्गम् अतएव कात्यायनः —

स्नाने बद्धशिखोऽत्यनुवाद एवञ्च स्मृतिः —

गङ्गायां भास्करे क्षेत्रे मातापित्रोर्मृतेऽहनि ।

मुण्डनं चोपवासश्च सर्वतीर्थेष्वयं विधिः

वर्जयित्वा गयाक्षेत्रे विशालां विरजां तथा ।

इत्यत्रापि शिखावर्जनमेव मुण्डनम्

अतएव कात्यायनः —

केशश्मश्रु वपते ऽशिखमिति सर्वत्रैवमेव समाचारः

अशिखं शिखां वर्जयित्वा अतएव नाचकेशमश्मश्रु । केश

केशनखश्मश्रुरिति मनुयाज्ञवल्क्यौ । स्नातकधर्मत्वेन केशनौच

वाधं च कर्तव्यं शिखावर्जमित्यव कार्यम् । इत्यस्य कारण

छेदनमिति मेधातिथिः ।

वस दामधर्मो

केशश्मश्रू धारयतामग्रया भवति सन्ततिरित्यत्र वपनं काम्य

मङ्गलार्थादिवपनं तथोक्तं

तिथिविशेषादौ चौरनिषेधः ।

शिष्टाः,— अनन्तशयनादूर्द्धं न पठेत्सप्तमं क्रतुम् ।
छेदनं बर्हिरिध्मानां नारोहेच्चर्मपादुके ॥

नकारः, काकाक्षिगोलकन्यायेन उभयत्रापि अन्वेति ।

तत्रापवादमाह, मरीचिः,—

मासे नभस्यमावास्या तस्यां दर्भोच्चयो मतः ।
अयातयामास्ते दर्भा विनियोज्याः पुनःपुनः ॥

नभस्यामावास्या कृष्णपक्षादिमासाभिप्रायेण, अत्र छेदिता अयातयमा इत्युक्तः हरिस्वापमध्येऽन्यतिथौ छेदिता यातयामा इत्युक्तं भवति ।

अत्र केचित्, हरिशयनमध्ये छेदननिषेधस्यातिक्रमे किमनिष्टफलमित्याकांक्षायां तत्र छेदितानां यातयामत्वं दोषः कल्प्यते, भाद्रामावास्याछिन्नानामयातयामत्वविधानसामर्थ्यात् ।

अतएवास्मद्देशे चातुर्मास्यछिन्नकुशैः सद्य एव कर्म्म कुर्व्वन्ति न दिनान्तरे ।

शिष्टाः,—

संग्रहाद्वत्सरं यावत्शुद्धिः स्यादिध्मबर्हिषाम् ।
अतःपरं न गृह्णीयादयज्ञादौ जपकर्म्मणि ॥

गृह्यपरिशिष्टं,—

दर्भाः कृष्णाजिनं मन्त्रा ब्राह्मणा हविरग्नयः ।
अयातयामान्येतानि नियोज्यानि पुनः पुनः ॥
ये तु पिण्डास्तृता दर्भा यैः कृतं पितृतर्पणम् ।
अमेध्याशुचिलिप्ता ये तेषां त्यागो विधीयते ॥

लघुहारीतः,—

चितौ दर्भाः पथि दर्भा ये दर्भा यज्ञभूमिषु।

स्तरणासनपिण्डेषु षट्कुशान् परिवर्ज्जयेत्॥

मूत्रोच्छिष्टे स्मृता ये च तेषां त्यागोविधीयते।

शिष्टाः,–वल्मीकोदकच्छायासु भूमिदग्धाश्चये कुशाः।

शूद्रोत्पाटितगोक्षुण्णा आप्लुताच्छेदिता नखैः॥

ब्रह्मयज्ञे च ये दर्भा ये दर्भाः पितृकर्म्मणि।

ते त्याज्या इत्यर्थः।

दर्भमात्रस्यायातयामत्वोक्तौ तत्रायमपवादः।

लघुहारीतः,—

नीविमध्ये च ये दर्भा ब्रह्मसूत्रे च ये स्थिताः।

पवित्रांस्तान्विजानीयाद्यथा कायस्तथा कुशाः॥

तेन सन्ध्यादिधृतस्य पवित्रोपग्रहादेर्होमादौ विनियोगे अन्यत्र उपयुक्तरूपनिरिष्टिकविनियोगो नैवेति सिद्धम्।

कात्यायनः,—

अनन्तगर्भिणं साग्रं कौशं द्विदलमेव च।

प्रादेशमात्रं विज्ञेयं पवित्रं यत्र कुत्रचित्।

चतुर्दर्भपिञ्जलीरूपं पवित्रं, पत्रत्रयेण पवित्रमित्यादि सर्व्वं सन्दिग्धप्रमाणकमनादृतञ्च।

यत्तु पराशरः,—

स्नाने दाने जपे होमे दैवे पित्र्ये च कर्म्मणि।

सव्यापसव्यौ कर्त्तव्यौ सपवित्रकरौ द्विजैः॥

तत् यत्र कर्म्मणि कुशमुष्टिधारणेऽनिर्व्वाहस्तत्रकुशवटोः कर्त्तव्यतायां सर्व्वेऽपि पवित्रलक्षणलक्षितकुशद्वयेन वटुकरणपरं बोध्यम् ।

तथा च, भोजने वर्त्तुलं प्रोक्तमिवमाचमने स्मृतम् । इति वटुपरं, तेन ग्रन्थियुक्तस्य पवित्रस्य न तेनाचमनश्चरेदिति निषेधो ब्रह्मग्रन्थिविषयः ।

न भुञ्जीयान्नचाचामेद्ब्रह्मग्रन्थौ करे स्थिते । इति निषेधात् ।

शिष्टाः,—

संत्यज्य वैष्टरं मार्गं ब्रह्ममार्गविनिर्गतम् ।

सकृत्प्रदक्षिणीकृत्य [1]पवित्रमभिधीयते ॥

दक्षावर्त्तो भवेद्ब्रह्मा वामावर्त्तस्तु विष्टरः ।

इति ग्रन्थिमार्गद्वयम् । अत्र सकृदिति वचनाद्ब्रह्मग्रन्थिरूपता नास्ति । द्विवेष्टने हि ब्रह्मग्रन्थिप्रसिद्धिः, तेन ब्रह्मग्रन्थिव्यतिरिक्तग्रन्थियुक्तपवित्रद्वयं सन्ध्यादिव्यतिरिक्तकर्माङ्गं वटुरूपमविरुद्धम् ।

यत्तु, उभाभ्यामपि पाणिभ्यां विप्रैर्दर्भपवित्रकौ ।

धारणीयौ प्रयत्नेन ब्रह्मग्रन्थिसमन्वितौ ॥ इति ।

तत्, ब्रह्मयज्ञे जपे होमे ब्रह्मग्रन्थिः विधीयते ।

इति विधौ कुत्र ब्रह्मग्रन्थिरित्यपेक्षायां हस्तद्वयपवित्रयोः ब्रह्मग्रन्थि[2]परमिति न कुशवटुरूपेषु सर्व्वाङ्गपवित्रे ब्रह्मग्रन्थिप्रसङ्गः । इति ।

शिष्टाः,— अनामिकायाः प्रथमं पर्व्व स्वर्णेन पूरयेत् ।

द्वितीयं दर्भसंयुक्तं कार्य्यं विप्रेण नित्यशः ॥

(१) पावित्रम् ।

(२) ब्रह्मग्रन्थिविधिपरमिति ।

अग्रपर्व्वस्थिते दर्भे तपःसिद्धिः सदैव हि ।
मध्ये चैव प्रजाकामो मूले सर्व्वार्थसाधकम् ॥

इति मूले धारणपक्षः सर्व्वादृतः ।

कात्यायनः,—सव्ये पाणौ कुशान् कृत्वा कुर्य्यादाचमनक्रियाम् ।
सव्यैः सोपग्रहः कार्य्यो दक्षिणः सपवित्रकः ॥

इति सन्ध्योपक्रमाभिहितत्वात् सन्ध्याङ्गमेव । तत्रायमर्थः ।

अन्यत्र सव्यपाणावपि पवित्रं सन्ध्यायां तु सव्ये पाणौ बहवः कुशाएव । अतएव तस्य विवरणं सव्यः सोपग्रह इति ।

उप समीपे गृह्यन्ते मार्ज्जनाद्यर्थमिति उपग्रहाः, तेन बहुकुशधारणं दृष्टार्थञ्च । दक्षिणः सपवित्रक इति दक्षिणे बहुकुशनिवृत्त्यर्थं पुनर्व्वचनं, अत्र यद्यपि ब्रह्मयज्ञजपहोमेषु ब्रह्मग्रन्थियुक्तपवित्रस्य विशेषविधिः ।

तथापि, दर्भाः पवित्रमित्युक्तमतः सन्ध्यादिकर्म्मसु । इत्यत्र सामान्यतः आदिशब्दोपादानाद्ब्रह्मयज्ञादिष्वपि ब्रह्मग्रन्थियुक्तं पवित्रद्वयं पवित्रोपग्रहरूपञ्च तुल्यबलत्वाद्वैकल्पिकमेव । तेन ग्रन्थिं विनापि पवित्रोपग्रहाभ्यां ब्रह्मयज्ञाद्यवैगुण्ये, केवलं ब्रह्मयज्ञजपहोमव्यतिरिक्तेन ग्रन्थिप्रसङ्गः ।

अशून्यं तु करं कुर्य्यात् सुवर्णरजतैः कुशैः । इति वचनात् करद्वयकुशधारणस्य कर्म्माङ्गत्वम् ।

आचमनेऽपि व्यासः,—

वामहस्तस्थिते दर्भे दक्षिणे नोदकं पिबेत् ।
रक्तपानसमं ज्ञेयं प्रायश्चित्तीयते द्विज ॥ इति वचनात् ।

केवलं वामहस्तगते कुशे न जलपानं कार्य्यम् ।

उभयत्र स्थिते दर्भे समाचामति यो द्विजः ।

सोमपानसमं श्रेयं भुंक्ते यज्ञफलं तथा ॥

इति तस्यैव वचनात्, समाचाराच्च ग्रन्थिरहितकुशधारणं मध्यमानामिकयोः ।

यत्तु कात्यायनसूत्रम्, साध्ये हस्तैकसाध्ये कर्म्मणि वेदोपग्रहः, अन्यत्र सोपग्रहः, कुशैरसत्सु । इति, असत्सु वेदस्तेषु कुशोपग्रहविधिः । इदं पुरुषार्थमपि कुशधारणम् ।

कुशहस्तः सदातिष्ठेद् ब्राह्मणो दम्भवर्ज्जितः । इति वचनात् । धारयेदित्यनुवृत्तौ मनुः,—

यज्ञोपवीतं वेदञ्च शुभे रौक्मे च कुण्डले । अत्र वेदः कुशमुष्टिः, तच्च ब्रह्मयज्ञादाविन्द्रियोपस्पर्शनं दर्भैरित्याद्युपयोगार्थं, तेन वामहस्ते कुशमुष्टिः पुरुषार्थधारणे ।

इति कुशविचारः ।

## अथ सन्ध्या।

योगी याज्ञवल्क्यः,—

अतःपरं प्रवक्ष्यामि सन्ध्योपासननिर्णयम्।
अहोरात्रकृतात्पापाद्‌यामुपास्य प्रमुच्यते॥

दक्षः,—सन्ध्याहीनोऽशुचिर्नित्यमनर्हः सर्वकर्म्मसु।
यदन्यत् कुरुते कर्म्म न तस्य फलमश्नुते॥

हारीतः,—

पूर्व्वां सन्ध्यां सनक्षत्रामुपक्रम्य यथाविधि।
गायत्रीमभ्यसेद्विद्वान् यावदादित्यदर्शनम्॥

याज्ञवल्क्यः—

यावन्तोऽस्यां विकर्म्मस्थाः पृथिव्यां वालिशा द्विजाः।
तेषां हि पावनार्थाय सन्ध्या सृष्टा स्वयम्भुवा॥
सन्ध्या येन न विज्ञाता सन्ध्या नैवाभ्युपासिता।
जीवन्नेव स शूद्रत्वं मृतः श्वा चाभिजायते॥
न तिष्ठति तु यः पूर्व्वामुपास्ते न च पश्चिमाम्।
स शूद्रवद्वहिष्कार्य्यः सर्व्वस्माद्‌द्विजकर्म्मणः॥
सन्ध्यां नोपासते विप्राः कथन्ते ब्राह्मणाः स्मृताः।
कामं तान् धार्म्मिको राजा शूद्रकर्म्मसु योजयेत्॥

याज्ञवल्क्यशातातपौ,—

गृहेषु प्राकृती सन्ध्या गोष्ठे शतगुणा स्मृता।
नदीषु शतसाहस्रा अनन्ता शिवसन्निधौ।

अनृतं मद्यगन्धञ्च दिवा मैथुनमेव च ॥
पुनाति वृषलस्यान्नं बहिः सन्ध्याभ्युपासिता ।

प्राकृती एकगुणफला ।

योगी याज्ञवल्क्यः,—

हृद्धिह्रासौ तु सततं दिवसानां यथाक्रमम् ।
सन्ध्यामुहूर्त्तमात्रं हि ह्रासवृद्धौ तु सा स्मृता ॥

तथा,—सन्धौ सन्ध्यामुपासीत नास्तगे नोदिते रवौ ।

बौधायनः,—

अनागतां तु यः पूर्व्वां नातिक्रान्तां तु पश्चिमाम् ।
सन्ध्यां नोपासते विप्राः कथन्ते ब्राह्मणाः स्मृताः ॥
सन्ध्यात्रयं तु कर्त्तव्यं द्विजेनात्मविदा सदा ।

ब्रह्माण्डे,—

एतत् सन्ध्यात्रयं प्रोक्तं ब्राह्मणे चाप्यधिष्ठितम् ।
नास्ति यस्यादरस्तत्र न स ब्राह्मण उच्यते ॥

योगी याज्ञवल्क्यः,—

या सन्ध्या या तु गायत्री द्विधा भूत्वा प्रतिष्ठिता ।
सन्ध्या उपासिता येन विष्णुस्तेन उपासितः ॥

तथा स एव,—

त्रिंशत्कोट्यस्तु विख्याताः सन्देहा नाम राक्षसाः ।
प्रार्थयन्ति सहस्रांशुमुदयन्तं दिने दिने ॥
अहन्यहनि ते नित्यं सूर्य्यमिच्छन्ति खादितुम् ।
अथ सूर्य्यस्य तेषां च युद्धमासीत्सुदारुणम् ॥

ततो देवगणाः सर्व्वे ऋषयश्च तपोधनाः।
सन्ध्येति तमुपासीनाः प्रक्षिपन्ति महज्जलम्॥
ओँकारब्रह्मसंयुक्तं गायत्र्या चाभिमन्त्रितम्।
तेन दह्यन्ति ते दैत्या वज्रभूतेन वारिणा॥
कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्रितम्।
आदित्याभिमुखस्तिष्ठन् त्रिः क्षिपेत्सन्ध्ययोर्द्वयोः॥
मध्याह्ने तु सकृत्तोयं क्षेपणीयं द्विजातिभिः।
तं सूर्य्यं सन्ध्येति उपासीना जलं प्रक्षिपन्ति॥
त्रयाणाञ्चैव देवानां ब्रह्मादीनाञ्च संगमः।
सन्धिः सर्व्वसुराणां च सन्ध्या तेन उदाहृता॥
गरीयसी तु भूतानां तस्मात् पैत्री तनुर्हि सा।

पैत्री पितृजननार्थं ब्रह्मणस्तनुः सन्ध्या।

सन्धिते तु परे सूक्ष्मे निर्गुणे गुणबोधिनि।
प्रधानपुरुषातीते सन्धिते सन्धिरुच्यते॥

सन्ध्येति तमुपासीना इति यदुक्तं तस्यायं शेषः। परे सूक्ष्मे अविद्याजीवभिन्ने निर्गुणे प्रपञ्चहीने गुणबोधिनि जनवर्गस्य साक्षिणि परमात्मनि ब्रह्मबुद्ध्या सन्धिते, पुनश्च प्रस्तुतत्वादादित्य-मण्डले एवंविधपरमात्मबुद्ध्या सन्धिते, सन्धिः सन्धिशब्दार्थः। स्वात्मानं सर्व्वसाक्षिणं निष्प्रपञ्चं ब्रह्माहमिति ज्ञात्वा तदेव सूर्य्य-मण्डलात्मकमिति बुद्धिः कार्य्या, एवं सन्ध्याशब्दार्थः।

अतएवोक्तम्।

सन्ध्याचय्यं तु कर्त्तव्यं द्विजेनात्मविदा सदा।

आत्मविदा ब्रह्मात्मैक्यज्ञानवतेति ।
एवञ्चाञ्जलिप्रक्षेपकाले तथा ध्यानं कार्य्यम् ॥

एवं सन्ध्याशब्दार्थः, तादृशध्यानसहितोऽञ्जलिप्रक्षेपः, गायत्री-जपश्चेति द्वयं प्रधानम्। पूर्व्वां सन्ध्यां जपंस्तिष्ठेदित्यादिना जपेऽपि सन्ध्याशब्दप्रयोगात् ।

तथा, तत्र प्रथमम्—

अघमर्षणस्य ऋषिश्छन्दोऽनुष्टुप्तथैव च ।
देवताभाववृत्तं तु ह्यश्वमेधनियोजनम् ॥
यथाऽश्वमेधः क्रतुराट् सर्व्वपापापनोदकः ।
तथाऽघमर्षणं सूक्तं सर्व्वपापापनोदकम् ॥
सिन्धुदीपं भवेदार्षं गायत्रीं छन्द एव च ।
आपस्तु दैवतं प्रोक्तं विनियोगास्तु मार्ज्जने ॥
सर्व्वत्र पावनं कर्म्म चाविज्ञानामुदाहृतम् ।
कोकिलो राजपुत्रस्तु द्रुपदायार्षमुच्यते ॥
अनुष्टुभं भवेच्छन्द आपश्चैव तु दैवतम् ।
सौत्रामण्यामवभृथस्नाने च विनियुज्य च ॥
द्रुपदा नाम सा देवी यजुर्वेदे प्रतिष्ठिता ।
अन्तर्ज्जले त्रिरावृत्त्य मुच्यते ब्रह्महत्यया ॥
सन्ध्यामुपासते यद्वद्यथावत्तां निबोधत ।
ईशानाभिमुखो भूत्वा शुचिः प्रयतमानसः ॥
आचान्तः पुनराचामेदृतमित्यभिमन्त्र्य च ।

कात्यायनः,—

कर्म्मान्ते वारिणात्मानं परिक्षिप्य समन्ततः।
शिरसो मार्ज्जनं कुर्य्यात् कुशैः सोदकविन्दुभिः॥

पुनर्योगी याज्ञवल्क्यः,—

त्रिरावृत्त्या तु सावित्रीं प्रणवं व्याहृतिस्तथा।
मार्ज्जनञ्च तथा कृत्वा आपोहिष्ठेति मार्ज्जयेत्॥
सार्द्धामृचं तु प्रक्षिप्य ऊर्द्ध्वं सार्द्धं तु विक्षिपेत्।
अधोभागविसृष्टाभिरसुरा यान्ति संक्षयम्॥
सर्व्वतीर्थाभिषिक्तश्च ऊर्द्ध्वं संमार्ज्जनाद्भवेत्।
अघमर्षणसूक्तेन मार्ज्जनं कारयेत्ततः॥
शन्न आपस्तु द्रुपदा कामतः संप्रयोजयेत्।

शन्न इति मार्ज्जनं काम्यमपिकार्य्यम्।

नरसिंहपुराणे,—

दर्भेषु दर्भपाणिः सन् प्राङ्मुखः सुसमाहितः।
प्राणायामांस्तु कुर्वीत यथाविधि समाहितः॥
तत्राचासनमन्त्रस्य मेरुपृष्ठ ऋषिर्म्मतः।
सुतलं[1] छन्द इत्युक्तं श्रीकूर्म्मो देवतासने॥

विनियोग इत्यर्थः, पृथ्वि त्वयेत्यासनानन्तरं प्रार्थनं सावित्रिकत्वादत्रापि कार्य्यम्।

(१) सुतलो।

संवर्त्तः,— ओँकारस्य ऋषिर्ब्रह्मा देवोऽग्निस्तस्य कथ्यते
गायत्री च भवेच्छन्दो नियोगः सर्व्वकर्म्मसु ॥
एवं [1]ब्रह्मेत्यादिब्राह्मणम् ।
व्याहृतीनाञ्च सप्तनामृषिश्चैव प्रजापतिः ।
गायत्र्युष्णिगनुष्टुप् च बृहती पङ्क्तिरेव च ।
त्रिष्टुप् च जगती चैव छन्दांस्येतानि सप्त वै ॥
अग्निर्वायुस्तथा सूर्य्यो बृहस्पतिरपाम्पतिः ।
इन्द्रश्च विश्वेदेवाश्च देवताः समुदाहृताः ।
प्राणस्यायमने चैव विनियोग उदाहृतः ॥
भूरिति ऋग्वेदादित्यादिब्राह्मणं, स्मृतान्यत्र—
विश्वामित्र ऋषिः सूर्य्यो देवताऽग्निमुखं तथा[2] ।
छन्दस्तथा च गायत्री प्राणायामे नियोजनम् ॥
भूमिरन्तरीक्षं द्यौरित्यादि ब्राह्मणम् ।
अस्य प्रजापतिरृषिः शिरसो यजुरप्यथ ।
ब्रह्माग्निवायुसूर्य्याश्च देवताः समुदाहृताः ।
प्राणस्यायमने चैव विनियोग उदाहृतः ॥
सशिरस्कान् त्रिः पठेदित्यादि ब्राह्मणं,
वशिष्ठाङ्गिर[3]सोवाचस्पतिर्बौधायनास्तथा ।
सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह ।

---

(१) ब्राह्मेत्यादि ।
(२) सच्छन्दसा विना ।
(३) वशिष्ठाङ्गिरसौ वाचस्पति ।

त्रिःपठेदायतप्राणः प्राणायामः स उच्यते ॥

कात्यायनः,—

भूराद्यास्तिस्र एवैता महाव्याहृतयोऽव्ययाः।
महर्जनस्तपः सत्यं गायत्री च शिरस्तथा।
आपोज्योतिरसोऽमृतं ब्रह्मभूर्भुवःस्वरिति शिरः ॥

प्रतिप्रतीकं प्रणवमुच्चारयेदन्ते च शिरसः, प्रतिप्रतीकं प्रतिमहाव्याहृतीत्यर्थः।

सप्तव्याहृतिभिः सार्द्धं दशोँकारसमायुतम्।
शिरसा सहितां देवीं प्राणायामे नियोजयेत् ॥
पूरकः कुम्भको रेचः प्राणायामस्त्रिलक्षणम्।
रेचको दक्षिणेनोक्तः पूरकं वामतश्चरेत् ॥
नासयाकृष्य यद्वायो रोधः पूरक उच्यते।
कुम्भो निश्चलनिश्वासो मुच्यमानस्तु रेचकः ॥
नाभौ विष्णुं चतुर्वाहुं श्यामं हृदि चतुर्मुखम्।
अजस्थं रक्तगौराङ्गं ललाटे शुभ्रमीश्वरम् ॥
पूरकादिषु संचिन्त्य तेषु सायुज्यमाव्रजेत्।
वायुपूरणादिसौकर्य्यार्थं नासिकाधारणं, यथा,
अङ्गुष्ठानामिकाभ्याञ्च कनिष्ठाङ्गुलिनापि च।
प्राणायामजपं कुर्य्यान्मध्यमां तर्ज्जनीं विना ॥

इति दक्षिणनासापीड़नमङ्गुष्ठेन पूरके, अङ्गुष्ठेन दक्षिणनासापीड़नपूर्व्वकं अनामिकाकनिष्ठाभ्यां वामनासापीड़नञ्च कुम्भके, वामनासापीड़नमनामिकाकनिष्ठाभ्यां रेचके।

व्यासः,—

आदानं रोधमुत्सर्गं वायोस्त्रिस्त्रिः समभ्यसेत् ।

इति पूरकादित्रयं त्रिवारमभ्यसेदित्यर्थः ।

योगी याज्ञवल्क्यः,—

त्रिविधं केचिदिच्छन्ति तथैव नवधा परे ।

नवधा पूरकादित्रिरभ्यासेन, समाचारस्तु न नवधापक्षस्य किन्तु त्रिविधपक्षस्यैव ।

विष्णुपुराणे,—

प्राणाख्यमनिलं वश्यमभ्यासात् कुरुते च यत् ।

प्राणायामः स विज्ञेयः सवीजोऽवीज एवच ॥

जपध्यानोपेतः सवीजः, तद्रहितोऽवीजः, सन्ध्यायां सवीज एव, मन्त्रजपः प्राणरोधभङ्गप्रसङ्गान्मानसः, "शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जप इत्युक्तेः" अर्थचिन्तनं प्रणवव्याहृतिगायत्रीशिरसां ब्रह्मात्मानुसन्धानमेव ।

योगी याज्ञवल्क्यः,—

सावित्र्याश्चैव मन्त्रार्थं ज्ञात्वा चैव यथार्थतः ।

तस्यां यदुक्तं चोपास्य ब्रह्मभूयाय कल्पते ॥

तच्छब्देन तु यच्छब्दो बोद्धव्यः सततं बुधैः ।

उदाहृते तु यच्छब्दे तच्छब्दः स्यादुदाहृतः ॥

देवस्य सवितुर्यश्च भर्गमन्तर्गतं विभुः ।

ब्रह्मवादिन एवाहुर्वरेण्यं सोऽस्य धीमहि ।

चिन्तयामो वयं भर्गं धियो यो नः प्रचोदयात् ॥

धर्म्मार्थकाममोक्षेषु बुद्धिवृत्तिः पुनः पुनः ।
बुद्धेर्बोधयिता यश्च नित्यात्मा पुरुषो विराट् ॥
सवितुस्तं वरेण्यं तु सत्यधर्म्माणमीश्वरं ।
हिरण्यवर्णं पुरुषं ध्यायेतं विष्णुसञ्ज्ञितम् ॥
भ्राजते दीप्यते यस्माद्‌जगदन्ते दहत्यपि ।
भ्राजते स्वेन रूपेण तस्माद्‌भर्ग इति स्मृतः ॥
दीप्यते द्योतते यस्मात् क्रीड़ते द्योतते दिवि ।
तस्माद्देव इति प्रोक्तः स्तूयते सर्व्वदैवतैः ॥
स वेत्ता सर्व्वभावानां सर्व्वभावांश्च सूयते ।
प्रयनात्पालनाच्चैव सविता तेन चोच्यते ॥
वरेण्यं वरणीयं तु[1] जन्मसंसारभीरुभिः ।
आदित्यान्तर्गतं भर्गः स्तूयते वै मुमुक्षुभिः ॥
जन्ममृत्युविनाशाय दुःखस्य विविधस्य च ।
ध्यानेन पुरुषो यश्च द्रष्टव्यः सूर्य्यमण्डले ॥
प्राणस्यायमनं कृत्वा आचमेत्प्रणतोऽपि सन् ।

—

उपस्पृशेत्ततः पश्चान्मन्त्रेणानेन धर्म्मवित् ।
अन्तश्चरति[2] भूतेषु गुहायां विश्वतोमुखः ॥
त्वं यज्ञस्त्वं वषट्कार आपोज्योती रसोऽमृतम् ।
वाजसनेयिनामयमेव मन्त्रः,

(१) वरेण्यं वरणीयं तज्जन्म ।
(२) चरसि ।

याज्ञवल्क्यः,—प्राणानायम्य संप्रोक्ष्य त्र्यचेनाब्दैवतेन तु ।
आपोहिष्ठेत्यादिनेत्यर्थः ।

योगी याज्ञवल्क्यः,—

आपः पाण्योः समादाय त्रिः पठेद्द्रुपदामृचम् ।
तज्जलं मूर्ध्नि विन्यस्य सर्व्वपापैः प्रमुच्यते ॥
एवं ज्ञात्वा तु मन्त्राणां प्रयोगं च यथाविधि ।

सन्ध्यामुपासते यद्वदिति वाक्येन सन्ध्याङ्गत्वावगमात्फलश्रुतेरर्थवादत्वं, "समुद्धृत्योदकं पाण्योर्जप्त्वा त्रिर्द्रुपदां क्षिपेदिति"
व्यासोक्तेश्च ।

कात्यायनः,—करेणोद्धृत्य सलिलं घ्राणमासज्य तत्र च ।
जपेदनायतासुर्वा त्रिः सकृद्वाघमर्षणम् ॥
उत्थायार्कं प्रतिप्रोहेत्त्रिकेणाञ्जलिमम्भसः ।
त्रिकेण प्रणवव्याहृतिगायत्र्यात्मकेन ।

योगी याज्ञवल्क्यः,—

कराभ्यां तोयमादाय गायत्र्या चाभिमन्त्र्य च ।
आदित्याभिमुखस्तिष्ठन् त्रिःक्षिपेत्सन्ध्ययोर्द्वयोः ॥

अत्र सायं प्रातरञ्जलित्रयं तत्र प्रत्यञ्जलि मन्त्रपाठः ।

मध्याह्ने त्वेक एवाञ्जलिरिति व्यवस्था, अञ्जलिप्रक्षेपकाले सन्ध्यास्वरूपध्यानं, तत्प्रकारश्च जपकाले वक्तव्यः ।

यत्प्रदक्षिणं प्रक्राम्य(१)न्ति पाप्मानमपधुन्वन्ति, असावादित्यो ब्रह्मेति

(१) प्रक्रमन्ति ।

श्रुतेरनेन प्रदक्षिणावर्त्तनं तन्नोऽयमस्मस्त्वयान्तमिति तैत्तिरीयश्रुति-वाक्यशेषान्मध्याह्नप्रदक्षिणे असावादित्यो ब्रह्मेति पठनीयम्।

मध्याह्नं प्रकृत्य योगी याज्ञवल्क्यः,—

अथोपविष्टेदादित्यमूर्द्धं पुष्पान्वितं जलम्।
प्रक्षिप्योद्वयमुदुत्यं चित्रं तच्चक्षुरित्यपि॥
हंसः शुचिषदेतानि पावनानि शुभानि च।
एतज्जपेदूर्द्धबाहुः सूर्य्यं वीक्ष्य समाहितः॥
गायत्र्या च यथाशक्ति चोपस्थाय दिवाकरम्।
सायं प्रातरुपस्थानं कुर्य्यात्प्राञ्जलिरानतः॥

ऊर्द्धबाहुस्तु मध्याह्ने इति वाक्यदर्शनात्समाचारात्तथैव कार्य्यम्।

कात्यायनः,—

उदुत्यं चित्रं तच्चक्षुरुपस्थाय दिवाकरम्।
वाङ्मनःकर्म्मजं पापं सर्वमेव व्यपोहति॥

नारसिंहेऽपि,—

उदुत्यं च जपेन्मन्त्रं चित्रं तच्चक्षुरित्यपि।

कात्यायनः—

तच्चित्रमुद्वयेनाथ उपतिष्ठेदनन्तरम्।
मध्याह्नयेऽप्युपस्थानमेतदाहुर्म्मनीषिणः॥
मध्याह्न उदये वापि विभ्राडादीच्छया जपेत्।
तदसंसक्तपार्ष्णिर्वा एकपादार्द्धपादपि॥
कुर्य्यात्कृताञ्जलिर्वापि ऊर्द्धबाहुरथापि वा।

इति वाक्यात् भूम्यलग्नगुल्फद्वयो भुम्यलग्नैकपादो भूमिलग्न-

पादार्द्धो वा सूर्य्यमुपतिष्ठेत्, तच्चित्रमुद्वयेनाथ इत्यत्र तच्चित्रमद्वये-
नेति केश्चिद्व्याख्यातं, तत् कल्पतरुविरोधादनादेयम् ।

ततो गायत्र्या ऋष्यादिकं स्मरेत् ।

स्मृत्यन्तरे--

विश्वामित्र ऋषि श्छन्दो गायत्री सविता तथा ।
देवतोपनये जप्ये गायत्र्या योग उच्यते ॥
सोऽहमस्मीति सञ्चित्य न्यासं कुर्य्यात्कराङ्गयोः ।
न्यासेन रहितं कर्म्म सर्वं गृह्णन्ति राक्षसाः ॥
ॐकृत्य भूर्भुवः स्वश्च गायत्र्याश्च पदत्रयम् ।
अङ्गुष्ठादिक्रमेणैव कुर्य्यात्करतलद्वयम् ॥
हृन्मस्तकशिखावर्म्मनेत्रास्त्रेषु च विन्यसेत् ।

# अथ ध्यानम् ।

योगी याज्ञवल्क्यः,—

पूर्व्वा सन्ध्या तु गायत्री सावित्री मध्यमा स्मृता ।
या भवेत्पश्चिमा सन्ध्या सा विज्ञेया सरस्वती ॥
रक्ता भवति गायत्री सावित्री श्वेतवर्णिका ।
कृष्णा सरस्वती ज्ञेया सन्ध्यात्रयमुदाहृतम् ॥

तस्याः संप्रदायसिद्धं स्वरूपम् ।

बालां विद्यात्तु गायत्रीं लोहितां चतुराननाम् ।
रक्ताम्बरद्वयोपेतामक्षसूत्रधरां तथा ॥
कमण्डलुधरां देवीं हंसवाहनसंस्थिताम् ।
ब्रह्माणीं ब्रह्मदैवत्यां ब्रह्मलोकनिसिनीम् ॥
मन्त्रेणावाहयेत् विद्वानायान्तीं सूर्य्यमण्डलात् ।
अथ मध्याह्न[1]सन्ध्यायां सावित्रीं द्विजसत्तमः ॥
युवतीं शुक्लवर्णां च चारुरूपां चतुर्भुजाम् ।
शुक्लवासोद्वयोपेतां तार्क्षकन्धरसंस्थिताम् ॥
शङ्खचक्रगदापद्मधारिणीं विष्णुदैवताम् ।
विष्णुलोकनिवासिनी[2]मायान्तीं सूर्य्यमण्डलात् ॥
एवं पश्चिमसन्ध्यायां वृद्धावस्थां सरस्वतीम् ।
कृष्णाङ्गीं कृष्णवसनां वृषारूढां त्रिलोचनाम् ॥

---

(१) मध्यमसन्ध्यायाम ।

(२) निवासन्तीम् ।

डमरुत्रिशूलहस्तां च रुद्राणीं रुद्रदैवताम् ।
कैलासनिलयां देवीमायान्तीं सूर्य्यमण्डलात् ॥

एवं सन्ध्यात्रये क्रमेण ध्यानं कुर्य्यात्, असामर्थ्ये ध्येयः सदेति साकारध्यानम् ।

यत्तु, योगी याज्ञवल्क्यः,—

ॐकारं पूर्व्वमुच्चार्य्य भूर्भुवःस्वस्तथैव च ।
गायत्रीं प्रणवं चान्ते जपे च्चैवमुदाहृतम् ॥

इति प्रणवान्तत्वं तत्सन्ध्येतरजपविषयम् ।

सन्ध्याविषये तु पुनः स एवाह,—

ॐकारं पूर्व्वमुच्चार्य्य भूर्भुवःस्वस्तथैव च ।
गायत्रीञ्च ततः पश्चात् सन्ध्याकाले जपेत्त्रिकम् ।

तथा,— एतदक्षरमेतां च जपन्व्याहृतिपूर्व्विकाम् ।
सन्ध्ययोरुभयोर्विप्रो वेदपुण्येन युज्यते ॥

इति वचनात्सन्ध्याकाले नान्ते ॐकारः कार्य्यः ।

याज्ञवल्क्यः,—

संध्यां प्राक् प्रातरेवेह तिष्ठेदासूर्य्यदर्शनात् । जपन्नित्यनुषज्यते । तेन सूर्य्योदायावधि जपः पूर्व्वसंध्या, तेन सूर्य्योदयात् पूर्व्वं जपसमाप्तौ प्रधानैकदेशलोपात्प्रत्यवाय एव ।

तत्काले कर्म्मान्तरेऽप्यनधिकारः, सन्ध्याहीनोऽशुचिरित्युक्त-न्यायात् ।

यत्तु, ब्रह्मचारी गृहस्थश्च शतमष्टोत्तरं जपेत् ।
वानप्रस्थो यतिश्चैव सहस्रादधिकं जपेत् ॥

तदपि सूर्य्योदयावधित्वापरित्यागेनैव। यथा सूर्य्योदयपर्य्यन्ते शतसमाप्तिस्तथारब्धव्यम्। सूर्य्योदये शतमुदयोत्तरमपि समापनीयं, आश्विनेऽसमाप्ते सूर्य्योदयेऽप्याश्विनसमाप्तिवत्, दैवाच्छतसमाप्तौ सूर्य्यानुदये शतस्यावृत्तिः कार्य्या, सूर्य्योदयात्पूर्व्वम् आश्विनसमाप्तौ सूक्तावृत्तिवत्।

दर्भहीना च या सन्ध्या यच्चदानं विनोदकम्।
असंख्यातन्तु यज्जप्तं तज्जप्तं निष्फलं भवेत्॥

इति वचनात् संख्या अवश्यं कार्य्या।

साग्नेस्तु सूर्य्योदयात्पूर्व्वं होमविधानात् प्रातःस्नानसन्ध्ययोरधिकारसम्पादकत्वेन शयाने श्रीकामस्येति अरुणोदयात्पूर्व्वं सन्ध्याकरणेऽपि न दोषः। न चैव काले कृतायाः सन्ध्यायाः पुनः करणम्। न हि सोमान्ते कृता सायमाहुतिः पुनः स्वकाले क्रियते, नापि होमसमाप्त्यनन्तरं उदयपर्य्यन्तं पुनर्गायत्रीजपः कार्य्यः, साङ्गसन्ध्याकर्म्मानिष्पत्तौ होमाधिकारसम्पादकसन्ध्यापूर्व्वस्यानुत्पन्नत्वेन होमाधिकाराभावप्रसक्तेः, यद्यपि जपे शब्दार्थयोश्चिन्तनमुक्तं, तथापि जपशब्दवलाच्छब्दचिन्तनमेव प्रधानम्।

अर्थ चिन्तनं त्वङ्गमेव।

ध्यायेत्तु मनसा मन्त्रं जिह्वौष्ठौ नैव चालयेत्।
नोच्चैर्जपं द्विजः कुर्य्याद्गायत्र्यास्तु विशेषतः॥

इति गायत्रीव्यतिरिक्तवाचिको जपोऽल्पफलः, गायत्र्याः सर्व्वथा न वाचिकः।

तदेतत्सर्व्वं जपनिरूपणे वक्तव्यम्।

तत्र विशेषः—प्रातरुत्तानपाणिः स्यान्मध्याह्ने समपाणिकः।
अधोमुखकरः सायं वस्त्रावृतकरो जपेत्॥

अक्षमालाभावे अङ्गुलिभिर्जपः कार्य्यः।

स्मृत्यन्तरे,—

कर्म्मणा मनसा वाचा यद्रात्र्या कृतमेनसः।
उत्तिष्ठन् पूर्व्वसंध्यायां प्राणायामैर्व्यपोहति॥ इति।

तिष्ठतः प्राणायामत्रयम्।

एतत्सन्ध्याकर्म्मकालातिक्रमशङ्कायां जलमध्येऽपि कार्य्यम्।

जले चार्द्रवाससो नियमः। सावित्रीजपस्तु स्थले कार्य्यः।

नोदकस्थो जपेद्विद्वान् सावित्रीं वेदमातरम्। इति वचनात् स्थले चार्द्रवासो'निषेधः सामान्यशास्त्रम्।

गायत्रीजपस्य जले निषेधो विशेष इति तदेव परिहार्य्यम्।

न प्रातर्न प्रदोषो वा सन्ध्याकालो विपद्यते।
मुख्यकालोऽनुकल्पश्च सर्व्वस्मिन् कर्म्मणि स्मृतः॥

इति वृद्धमनुवचनात् त्रिमुहूर्त्तात्मकः प्रातःकालोऽनुकल्पः, सायं त्रिमुहूर्त्तं, मण्डनादिभिः सजातीयकर्म्मान्तरकालपर्य्यन्तं गौण-स्योक्तत्वान्मध्याह्नसन्ध्यापर्य्यन्तं गौणकालस्य निर्णीतत्वेऽपि सामा-न्येनाभ्यनुज्ञानाद्विशेषो हि विशिष्यत इति न्यायेन त्रिमुहूर्त्तं व्याप्य निर्दोषत्व, तदूर्द्ध्वं फलाल्पत्वं, मध्याह्नसन्ध्याकालादूर्द्ध्वं लोपएव ।

अयञ्चविशेषः ।

प्राक् पर्य्युदयतः सन्ध्यामुपासीत यथाविधि ।
उदिते तु जलं पीत्वा गायत्र्या दश मन्त्रितम् ॥

इति वचनात् दशवारजपजलपानरूपमुदयनैमित्तिकं सन्ध्याया-अधिकमङ्गम् । एतदपि अर्द्धप्रहरपर्य्यन्तं, अर्द्धप्रहरानन्तरन्तु स्नात्वा एतत्प्रायश्चित्तं कार्य्यम् ।

तथाच,—

यामार्द्धमागते सूर्य्ये तथाचास्तमुपागते ।
विप्रः पतितसन्ध्यः स्यात् स्नात्वा सन्ध्यां समाचरेत् ॥

यामार्द्धमागते दिवा अस्तमनादूर्द्ध्वञ्च यामार्द्धमागते रात्राविति सम्बन्धः, सायंसन्ध्यायाः प्रातःसन्ध्यापर्य्यन्तं गौणकालत्वेऽपि त्रिमुहूर्त्तादूर्द्ध्वं वैगुण्याधिक्यात् फलाल्पत्वम् ।

मध्याह्नसन्ध्यायास्तु,—

अर्ध्यर्द्धयामादासायं सन्ध्या माध्याह्निकी स्मृता । इति ।

दक्षवचनाद्विशेषाभ्यनुज्ञानाद्दोषाभावः ।

दशकृत्वः पिबेदापो गायत्र्या श्राद्धभुग्द्विजः ।
ततः सन्ध्यामुपासीत शुध्यते तदनन्तरम् ॥

इति श्राद्धभोजनप्रायश्चित्तं न तु सन्ध्याङ्गं, तदभावे सन्ध्यावैगुण्यम्।

सन्ध्योपासनहानौ च नित्यश्राद्धं विलुप्य च।
होमञ्च नैत्यकं शुद्धेर्गायत्र्यास्तु सहस्रकृत्॥

एतद्गौणकालेऽप्यकरणे प्रायश्चित्तम्।

सायमतिक्रमे रात्र्युपवासः, प्रातरतिक्रमे दिवोपवास इति प्रायश्चित्तम्।

मनुः,—ऋषयो दीर्घसन्ध्यत्वाद्दीर्घमायुरवाप्नुयुः।
दीर्घसन्ध्यत्वमुदयानन्तरं जपस्य दीर्घकालव्याप्त्या।

स्मृत्यन्तरे,—
आयाहि वरदे देवि त्र्यक्षरे ब्रह्मवादिनि।
गायत्रि छन्दसां मातः स्वयं ब्रह्माप्यवाप्यतु॥
इत्याह्वानं विसर्गोऽपि नमस्त्विति च तच्छृणु।
उत्तरे शिखरे जाते भूम्यां पर्व्वतवासिनि॥
ब्रह्मणा समनुज्ञाते गच्छ देवि यथासुखम्।

इत्यावाहनविसर्गमन्त्रावुक्तौ।

व्यासः,—
ॐसूर्य्याय इति प्रातः सायं चैवाग्नये नमः।
अनग्निमान् ब्रह्मचारी प्रदद्यादुदकाञ्जलिम्॥

इति जलाञ्जलिदानम्।

समाचारात् प्रजापतये द्वितीयाञ्जलिम्।
स्वाहाशब्दो नमःशब्दस्थाने समाचारादेव।

अनग्निमानित्यविशेषोपादानादुत्पन्नाग्नेरपि ।

एवं सूर्य्योदयानन्तरं हंसः शुचिषदिति समाचारात् सूर्य्यार्घं दद्यादिति केचित् ।

वस्तुतस्तु,—

यावन्न दीयते चार्घो भास्कराय महात्मने ।
तावन्न पूजयेद्विष्णुं शङ्करं वा सुरेश्वरम् ॥

इति ब्राह्मवचनाद्विहित एव सूर्य्यार्घ्यः ।

प्रातःकाले च मध्याह्ने नमस्कुर्य्याद्दिवाकरम् । इति वचनात्, नमः सवित्रे इति मन्त्रेण सूर्य्यं नमस्कुर्यात् ।

साग्निकस्तु गायत्रीजपानन्तरं होमं दत्त्वा पश्चात् सूर्य्यार्घ्यं दद्यात् ।

विष्णुपुराणे,—

सर्व्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः ॥

अत्र सूतकमृतकाशौचे पर्युदासः, विभ्रमातुरभयेषु यदर्थप्राप्तमकरणं तत्र दोषाभाव उच्यते, अत्र[1] विभ्रमादावपि सम्भवे कर्त्तव्यम् ।

विभ्रमो भयं विनापि आकुलता ।

तस्मादष्टाक्षरं मन्त्रं मङ्गलैर्व्रतकर्षितैः ।
सन्ध्याकाले तु जप्तव्यं शतं चात्मविशुद्धये ॥ इति ।

---

(१) तत्र ।

तथा नरसिंहोपासकस्य,—

दशमात्रं जपेन्मन्त्रं नारसिंहं च सन्ध्ययोः ।
सर्व्वरोगविनिर्मुक्तः शतं वर्षाणि जीवति ॥

एतदुदयानन्तरं अर्घदानोत्तरं कार्य्यं, काम्यं नित्यस्य बाधकमिति सूर्य्योदयात्पूर्व्वं कार्य्यमिति केचित्तन्न, सन्ध्यायां यानि कर्म्माणि स्तोत्रपाठादीन्युक्तानि तेषामप्यत्र करणप्रसङ्गात्, तस्माद्धोमं कृत्वा सूर्य्यार्घं दत्त्वा अष्टाक्षरजपः कार्य्यो न विलम्बेन ।

# अथ सन्ध्यापद्धतिः।

ईशानाभिमुखमुपविश्य दक्षिणहस्ते पवित्रं धृत्वा वामहस्ते कुशमुष्टिं धृत्वा द्विराचमेत्, इन्द्रियस्पर्शनं त्रिमात्रप्रणवोच्चारणम्।

विष्णुः—

अपवित्रः पवित्रो वा सर्व्वावस्थां गतोऽपि वा।
यः स्मरेत् पुण्डरीकाक्षं स वाह्याभ्यन्तरः शुचिः॥

इति नारायणस्मरणं कृत्वा मन्त्रस्नानं कुर्य्यात्।

यथा—शन्न आपो धन्वन्याः शम्नः सन्तु[१] नूप्याः[२]।
शन्नः समुद्रियापः[३] शमुनः सन्तु कूप्याः॥
द्रुपदादिव मुमुचानः स्विन्नः स्नातो मलादिव।
पूतं पवित्रेण वारुवमापः शुन्धन्तु मैनसः॥
आपोहिष्ठामयो भुवस्तान ऊर्जे दधातनः।
महेरणाय चक्षसे यो वः शिवतमो रसः॥
तस्य भाजयते हनः, उशतीरिव मातरः।

तस्मा अरङ्गमामवो[४] यस्य क्षयाय जिन्वथ, आपो जनयथा चनः, ऋतञ्च सत्यं चाभिद्धात्तपसोऽध्यजायत, ततो रात्र्यजायत, ततः समुद्रोऽर्णवः समुद्रादर्णवादधिसंवत्सरोऽजायत, अहोरात्राणि विदधद्विश्वस्य मिषतो वशी सूर्य्याचन्द्रमसौ धाता यथा पूर्व्वम-

(१) श—।
(२) सन्त्वनूप्याः।
(३) समुद्रयापः।
(४) वो—।

कल्पयद्दिवञ्च पृथ्वीं[१] चान्तरीक्षमथो स्वः, इति चतुष्टयेन मार्ज्जनरूपं मन्त्रस्नानं, एतस्य मार्ज्जनस्य स्नानानुकल्पत्वेन यथाकथञ्चिन्निर्वाहादृष्यादिकं न कुर्व्वन्ति तदभावे फलाल्पत्वं, नतु फलवादः, एतद्वक्ष्यते ।

अथ सन्ध्याङ्गभूतजलचलुकपानं यथा,

अघमर्षणसूक्तस्य, अघमर्षण ऋषिः, अनुष्टुप्छन्दः, भाववृत्तं दैवतं, अश्वमेधावभृथे विनियोगः, ऋतं च सत्यं चाभिद्धात्तपसो इत्यादिना दक्षिणहस्तधृतं जलचलुकमभिमन्त्र्य पिवेत्, द्विराचमनं[२], इन्द्रियस्पर्शनान्तं वारिणा देहवेष्टनं, ब्रह्मणे नम इति समाचारादत्र वदन्ति, ॐ भूर्भुवः, स्वः, तत्सवितुर्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्, इति त्रिवारमुच्चार्य्य सजलविन्दुभिः कुशाग्रैः एकवारमार्ज्जनम् ।

आपोहिष्ठेति मन्त्रस्य, सिन्धुद्वीप ऋषिः, गायत्री छन्दः आपो देवता, मार्ज्जने विनियोगः, ता उपसृजतीत्यादि ब्राह्मणं, आपोहिष्ठेत्यादि भाजयते हन इत्यन्तेन सार्द्धर्च्चेन कुशाग्रैर्भूमौ जलविन्दुसेकः, उशतिरित्यादि चन इत्यन्तेन सार्द्धर्च्चेन शिरसि मार्ज्जनम् । पूर्व्ववत् अघमर्षणसूक्तस्य ऋष्यादिकं कृत्वा ऋतञ्च सत्यमिति सूक्तेन मार्ज्जनं, शन्न इति मन्त्रस्य, प्रजापतिः ऋषिः, अनुष्टुप् छन्दः, आपो देवता, मार्ज्जने विनियोगः ।

ॐ शन्न आप इत्यादि सन्तु कूप्या इत्यन्तेन मार्ज्जनं, द्रुपदादि-

(१) पृथिवीम् ।

(२) द्विराचामेत् ।

[1]वेति मन्त्रस्य, कोकिलोराजपुत्र ऋषिः अनुष्टुप् छन्दः आपो देवता सौत्रामण्यवभृथे विनियोगः, अवभृथमिष्ट्वा यजन्तीत्यादि ब्राह्मणं, द्रुपदादित्यादिना मार्ज्जनम्, आसनं स्थिरीकृत्य कुशत्रयेण आस्तीर्य्य स्वस्तिकपद्माद्यन्यतमेन आसनेनोपवेशनम् ।

आसनमन्त्रस्य, मेरुपृष्ठ ऋषिः, सुतलो[2] छन्दः, श्रीकूर्म्मो-देवता, आसने विनियोगः, पृथ्वि त्वया धृता लोका देवि त्वं विष्णुना धृता, त्वं च धारय मां देवि पवित्रमासनं कुरु, इति प्रार्थनं, ॐकारस्य ब्रह्मा ऋषिः, गायत्री छन्दः, अग्निर्देवता, सर्व्वकर्म्मारम्भे विनियोगः ।

खं ब्रह्मेत्यादि ब्राह्मणं, सप्तव्याहृतीनां प्रजापतिः ऋषिः, गायत्र्युष्णिगनुष्टुब्बृहतीपंक्ती[3]त्रिष्टुप्जगत्यच्छन्दांसि अग्निवायुसूर्य्य-बृहस्पतिवरुणेन्द्रविश्वेदेवा देवताः प्राणायामे विनियोगः, ॐ भूरिति ऋक्वेदादित्यादि ब्राह्मणं गायत्र्याः विश्वामित्र ऋषिः, गायत्री छन्दः, सविता देवता अग्निर्मुखमुपनयने विनियोगः ।

भूमिरन्तरीक्षं द्यौरित्यादिब्राह्मणं, शिरसः प्रजापतिः ऋषिः यजुः, ब्रह्माग्निवायुसूर्य्या देवताः, प्राणायामे विनियोगः, सशिर स्कांस्त्रिः पठेदित्यादि ब्राह्मणं, चक्षुषी निमील्य वाग्यमनं कृत्वा दक्षिणनासापुटं दक्षिणाङ्गुष्ठेन नीरन्ध्रं कृत्वा वामनासापुटे वाह्य-वायुपूरणकाले ।

(१) द्रुपदादिति ।

(२) सुतलि ।    (३) पङ्क्ति ।

ॐभूः, ॐभुवः, ॐस्वः, ॐमहः, ॐजनः, ॐतपः, ॐसत्यं, ॐतत्सवितुर्व्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्, ॐआपोज्योति[1]रसोऽमृतं ब्रह्म भूर्भुवः स्वरोम् इति मन्त्रं मनसा जप्त्वा आकुञ्चनेन अपानमूर्द्धमाकृष्य मन्त्रार्थचिन्तनं, तटस्थस्वरूपलक्षणाभ्यां ब्रह्म लक्षयित्वा स्वात्मनस्तेनाभेदो वाक्यार्थः, सवितुर्जगत्कारणस्य देवस्य दीप्यात्मकस्य जड़व्यावृत्तचैतन्यात्मकस्य स्वरूपं यद्भर्गः, भ्राजत इति स्वप्रकाशमित्यर्थः, राहोः शिर इतिवदभेदे षष्ठी, तस्माद्देवभर्गयोरैक्यमित्यर्थः, पुनः कीर्त्तनात्, वरेण्यं प्रार्थनीयमानन्दरूपमित्यर्थः ।

यः सविता नोऽस्माकं धियः बुद्धिवृत्तीः प्रचोदयात् प्रेरयेत् । धर्म्मार्थकाममोक्षेषु तं धीमहि, स्वाभेदेन चिन्तयामः कीदृशं तद्भर्गः, ॐकारवाच्यपरिपूर्णचित्स्वरूपं भूरादिसप्तलोकात्मकं, ॐमित्यादीनां विशेषणत्वेन सम्बन्धः, भूरादीनां तत्राध्यस्तत्वेन तद्रूपं, आपो जलं ज्योतिरग्न्यादि तेजः रसः पृथ्वी अमृतं वाय्वाकाशरूपं, अमृतभूतद्वयञ्च ब्रह्मैव, तथा ब्रह्म बृहत्, यदतिरिक्तं किमपि नास्तीत्यर्थः, पुनः कीदृशं भूर्भुवः स्वः ।

सत्वरजस्तमोमयब्रह्मविष्णुशिवात्मकम् ।

ॐमित्यखण्डरूपपरामर्षाय, तथाचात्र भर्गदेववरेण्यपदभूरादिपदैः स्वप्रकाशचिदानन्दस्वरूपलक्षणमुक्तं, सवितुः पदशिरोमन्त्रैस्तटस्थलक्षणं, जगत्कारणत्वं प्रपञ्चाधिष्ठानत्वं चोक्तं, धीमहीतिपदेन

---

(१) ज्योती

ब्रह्मजीवयोरैक्यमुक्तम्, अस्मिमोङ्कारेण अखण्डरूपवाक्यार्थः उक्तः। ततो नाभिमध्यस्थनीलोत्पल[1]श्यामचतुर्भुजविष्णुध्यानं, एवमेकवारं पूरकं कृत्वा कनिष्ठानामिकाभ्यां वामनासापुटं नीरन्ध्रं कृत्वा अङ्गुष्ठेन दक्षनासापुटं नीरन्ध्रं कृत्वा गुदमूलाकुञ्चनापानवायु-मुत्तोल्य पूर्व्ववद्दशप्रणवसप्तव्याहृतिगायत्रीशिरसां एकवारजपेन सम्पूर्णकुम्भवदवस्थानं, मन्त्रार्थब्रह्मजीवैक्यचिन्तनं पूर्व्ववत्, हृदये रक्तगौराङ्गचतुर्मुखध्यानञ्च, कुम्भकं स्थिरीकृत्य दक्षिणाङ्गुष्ठत्यागेन दक्षनासापुटेन वायुविरेचनं शनैः शनैः पूर्व्ववद्दशप्रणवसप्त-व्याहृतिगायत्रीशिरसां एकवारजपो मन्त्रार्थजीवब्रह्मैक्यानु-सन्धानम्।

ललाटे शुद्धस्फटिकसङ्काशवृषारूढमहेश्वरध्यानञ्च एष रेचकः, एवं प्राणायामत्रयं कृत्वा—

अन्तःश्चरसि भूतेषु गुहायां विश्वतो मुखः।
त्वं यज्ञस्त्वं वषट्कार आपोज्योती रसोऽमृतम्॥

इति सकृदाचमनं, आपोहिष्ठेति ऋक्त्रयेण सशिरस्कदेहप्रोक्षणं समाचारादविरोधाच्च कुर्य्यादेव, पाण्योर्ज्जलमादाय द्रुपदां त्रिरा-वृत्य तज्जलस्य शिरसि क्षेपः दक्षिणहस्ते जलचलुकं गृहीत्वा नासायां संयोज्य अघमर्षणसूक्तस्य सकृज्जपः, गायत्री बाला त्रिनेत्रा चतुर्व्वक्त्रा रक्तवर्णा रक्तवस्त्रद्वयोपेता ब्रह्माणी हंसवाहना अक्षसूत्रकमण्डलुहस्ता ब्रह्मलोकादागत्य सूर्य्यमण्डले प्रविष्टा,

---

(१) इव।

एषैव पूर्व्वसन्ध्येति ध्यानं, उत्थाय सूर्य्याभिमुखं प्रणवव्याहृति-गायत्रीभिर्जलाञ्जलित्रयप्रक्षेपः।

प्रत्यञ्जलि मन्त्रपाठः, असावादित्यो ब्रह्मेति प्रदक्षिणावर्त्तनम्, अथोपस्थानं प्राञ्जलिरानतः कुर्य्यात्।

उदित्यमिति मन्त्रस्य, प्रस्कण्व[1] ऋषिः, गायत्री छन्दः, सूर्य्यो देवता अग्निष्टोमे सूर्य्योपस्थाने विनियोगः।

सौरिभ्यामृग्भ्यामित्यादि ब्राह्मणं, उदुत्यं जातवेदसं देवं वहन्ति केतवः, दृशे विश्वाय सूर्य्यं, चित्रमितिमन्त्रस्य, कौत्स-ऋषिः, त्रिष्टुप्छन्दः, सूर्य्योदेवता, सूर्य्योपस्थाने विनियोगः।

अथापरं चतुर्गृहीतमाज्यं गृहीत्वा जुहोतीत्यादि—ब्राह्मणं, चित्रं देवानामुदगादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः आप्राद्या वा पृथिवी अन्तरीक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च, उद्वय-मिति मन्त्रस्य, प्रस्कण्व ऋषिः, अनुष्टुप्छन्दः, सूर्य्यो देवता, सौत्रामण्यवभृथे विनियोगः।

तमसा वै तम इत्यादि ब्राह्मणं, उद्वयं तम सस्परिस्वः पश्यन्ति उत्तरं, देवं देवता[2] सूर्य्यमगन्मज्योतिरुत्तमम्।

तच्चक्षुरिति मन्त्रस्य, दध्याङ्गाथर्व्वण ऋषिः, उष्णिक्छन्दः, सूर्य्यो देवता, सूर्य्योपस्थाने विनियोगः; तच्चक्षुर्देवहितं पुरस्ताच्छुक्र-मुच्चरत्, पश्येम शरदः शतं, जीवेम शरदः शतं शृणुयाम शरदः शतं, इत्युपस्थानम्।

(१) प्रस्कण्व। (२) देवत्रा सूर्य्यमगन्म।

# अथ जपः ।

गायत्र्याः विश्वामित्र ऋषिः, गायत्री छन्दः, सविता देवता, गायत्र्या जपकर्मारम्भे विनियोगः । सोऽहमस्मीति आदित्य-मण्डलात्मकब्रह्माभिन्नत्वेन जीवब्रह्मणोरैक्यचिन्तनम् । ॐभूः अङ्गु-ष्ठाभ्यां नमः, ॐभुवः तर्ज्जनीभ्यां स्वाहा, ॐस्वः मध्यमाभ्यां वषट्, ॐतत्सवितुर्व्वरेण्यं अनामिकाभ्यां हुं, ॐभर्गो देवस्य धीमहि कनिष्ठाभ्यां वौषट्, ॐधियो यो नः प्रचोदयात् करतलकरपृष्ठा-भ्यामस्त्राय फट्, ॐभूः हृदयाय नमः, ॐभुवः शिरसे स्वाहा, ॐस्वः शिखायै वषट्, ॐतत्सवितुर्व्वरेण्यं कवचाय हुं, ॐभर्गो देवस्य धीमहि नेत्राभ्यां वौषट्, ॐधियो यो नः प्रचोदयात् करतलकरपृष्ठाभ्यां अस्त्राय फट्, एतौ कराङ्गन्यासौ, पूर्व्ववद्-गायत्रीं ध्यायेत् ।

गायत्र्यर्थध्यानासामर्थ्यादेव साकारध्यानमाचरन्ति । यथा, ध्येयः सदा सवितुर्म्मण्डलमध्यवर्त्ती नारायणः सरसिजासनसन्नि-विष्टः, केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मयवपुर्धृत-शङ्खचक्रः ।

अत्र गदापद्मयोरुपलक्षणं तेन शङ्खचक्रगदापद्मयुक्तभुजचतुष्टय-इत्याहुः ।

आयाहि वरदे देवि त्र्यक्षरे ब्रह्मवादिनि ।

गायत्रि छन्दसां मातः स्वयं ब्रह्माप्यवाप्यतु ।

इति गायत्रीमावाह्य जपः । उत्तानपाणिरक्षमालया अङ्गुलिभिर्व्वा

गणनया, ॐ भूर्भुवः स्वस्तत्सवितुर्व्वरेण्यं भर्गो देवस्य धीमहि धियो यो नः प्रचोदयात्, इति सूर्य्योदयपर्य्यन्तं शतमष्टोत्तरं जपेत्, सान्निकस्तु होमकालानुरोधेन अष्टोत्तरशतमष्टाविंशति-मष्टादश वा जपेत् ।

जपधर्म्मान् वक्ष्यमाणरीत्या कुर्य्यात्, जपसमाप्तौ जलचलुकं गृहीत्वा प्रणवव्याहृतिगायत्रीरुच्चार्य्य,

उत्तरे शिखरे जाते भूम्यां पर्व्वतवासिनि ।

ब्रह्मणा समनुज्ञाते गच्छ देवि यथा सुखम् ।

इति पठित्वा,

ॐ नमो ब्रह्मण्यदेवाय गोब्राह्मणहिताय च ।

जगद्धिताय कृष्णाय गोविन्दाय नमोनमः ॥

आकाशात्पतितं तोयं यथा गच्छति सागरम् ।

सर्व्वदेवनमस्कारः केशवं प्रति गच्छति ॥

केशवं प्रतिगच्छ, केशवं प्रतिगच्छ ।

ॐ नमो नम इत्युक्त्वा गायत्रैर नमोऽस्तु गायत्रि स्वस्थानं गच्छेति विसर्ज्जनं[1], तत्रैव तिष्ठन् प्राणायामत्रयं कुर्य्यात्, ॐ सूर्य्याय स्वाहा, ॐ प्रजापतये स्वाहा इति निरग्नेर्ज्जलाञ्जलिद्वयदानम् ।

साग्नेस्तु अत्रैव वक्ष्यमाणरीत्या होमः, सूर्य्योदयानन्तरं हंसः-शुचिषदित्यस्य मन्त्रस्य, गोतमपुत्रो वामदेव ऋषिः, जगती-छन्दः, सूर्य्यो देवता, सूर्य्यार्घदाने विनियोगः, ॐ हंसः शुचिषद्वसु-

(१) गायत्रि स्वस्थानं गच्छेतिविसर्ज्जनम्. गायत्रि स्वस्थानं गच्छेति विसर्ज्जनम् ।

रन्तरीक्षसद्धोता वेदिषदतिथिर्दुरोणसन्नृषद्वरसदृतसद्व्योमसदब्जा-
गोजा ऋतजा अद्रिजा ऋतं बृहत्, इति सूर्य्यार्घदानं, गङ्ग स्वस्थानं
गच्छेति तीर्थविसर्ज्जनमिति[1] केचित्कुर्व्वन्ति। नमः सवित्रे जगदेक-
चक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे त्रयीमयाय त्रिगुणात्मधारिणे
विरञ्चिनारायणशङ्करात्मने नम इति सूर्य्यं नमस्कुर्य्यात्, विष्णुः।

इति सन्ध्याप्रकरणम्।

दानधर्म्मे,—वरुणं वायुमादित्यं पर्ज्जन्यं जातवेदसम्।
स्थाणुं स्कन्धं[2] तथा लक्ष्मीं विष्णुं ब्रह्माणमेव च॥
वाचस्पतिं चन्द्रमसमापः पृथ्वीं सरस्वतीम्।
सततं ये नमस्यन्ति तान्नमस्याम्यहं प्रभो॥

इति नारदोक्तैरेतान्नमस्कुर्य्यात्, विष्णुः, कृतसन्ध्योपासनश्च पूर्व्वं
गुर्व्वभिवादनं कुर्य्यात्।

ब्रह्माण्डे,—अभिवादनशीलस्य नित्यं वृद्धोपसेवितम्।
चत्वार्य्यस्यैव वर्द्धन्ते आयुः प्रज्ञा यशो धनम्॥
अतिति[3]र्भगवान् विष्णुर्व्वादया[4]प्नोति शङ्करः।
उभौ तौ पूजितौ तेन यः करोत्यभिवादनम्॥

तथा,— यो भावयति यः सूते येन विद्योपदिश्यते।
ज्येष्ठभ्राता च भर्त्ता च पञ्चैते गुरवः स्मृताः॥

(१) तीर्थविसर्ज्जनमपि।
(२) स्कन्दम्।
(३) अतिथि—
(४) पादरायाप्नोति शङ्करः।

तेषामाद्याः स्त्रियः पूज्यास्तेषां माता च पूजिता ।

तथा,—

उपाध्यायः पिता ज्येष्ठो भ्राता चैव महीपतिः ।

अन्ये च, ज्येष्ठश्यालपुराणादि(१)वाचकज्ञानतपोवृद्धबन्धुज्येष्ठप्रव्रजितदीक्षिताः, दीक्षितश्च सोमक्रयोत्तरकालम् ।

मनुः,—

भ्रातुर्भार्य्योपसंग्राह्या सवर्णाऽहन्यहन्यपि ।
विप्रोष्य तूपसंग्राह्या ज्ञातिसम्बन्धयोषितः ॥
मातुर्भगिन्यां मातुश्च ज्यायस्यांश्च स्वसर्य्यपि ।
मातृवद्वृत्तिमातिष्ठेन्माता ताभ्यो गरीयसी ॥
नाभिवाद्याः स्त्रियः सर्व्वा मुक्त्वा मातरमेव च ।
गुरुपत्नी च युवतिर्नाभिवाद्येह पादयोः ॥
मातुलांश्च पितृव्यांश्च श्वशुरानृत्विजो गुरून् ।
असावहमिति ब्रूयात्प्रत्युत्थाय यवीयसः ॥

तेन ज्येष्ठेभ्योऽभिवादनम्,

कनिष्ठेभ्यो मान्येभ्यः प्रत्युत्थानम् ।
मान्याश्चैवैकहस्तेन कनिष्ठं नाभि केवलम् ॥

(२)याज्ञवल्क्यः,—

विद्याकर्म्मवयोबन्धुवित्तैर्मान्या यथाक्रमम् ।
एतैः प्रभूतैः शूद्रोऽपि वार्द्धके मानमर्हति ॥

(१) नथा ।

(२) अन्याश्च याज्ञवल्क्यः ।

वार्द्धकमित्यत्र नवत्यधिकवयः ।

तत्राभिवादनक्रमः, मनुः,—

भोशब्दं कीर्त्तयेदन्ते स्वस्य नाम्नोऽभिवादने ।
नाम्नां स्वरूपभावो हि भोभाव ऋषिभिः स्मृतः ।

भोभावो भोशब्दः, अमुकशर्म्माहं भो अभिवादयामीति वाच्यम् ।

तथा,—

मातुलः श्वशुरस्त्राता मातामहपितामहौ ।
वर्णज्येष्ठः पितृव्यश्च पुंस्येते गुरवः स्मृताः ॥
माता म.तामही गुर्व्वी पितृमाता सहोदरी ।
श्वश्रूः पित.मही ज्येष्ठी धात्री च गुरवःस्त्रियः ॥
व्यत्यस्तपाणिना कार्य्यमुपसंग्रहणं गुरोः ।
सव्येन सव्यः स्प्रष्टव्यो दक्षिणेन तु दक्षिणः ॥

तथा,—

पुरस्तिष्ठन् दक्षिणं बाहुं श्रोत्रसमं प्रसार्य्याञ्जलिं बद्धा प्लुताक्षरं स्वनामोच्चार्य्याहं भो अभिवादयामीति वदन् ब्राह्मणोऽभिवादयेत् ।

अञ्जलौ विशेषः, आपस्तम्बः, दक्षिणं बाहुं श्रोत्रसमं प्रसार्य्य ब्राह्मणोऽभिवादयेत् ।

उरःसमं राजन्यो मध्यसमं वैश्यो नीचैः शूद्रो प्राञ्जलिरिति ।

तथा—

अभिवादयेत् सर्व्वनाम्ना स्त्रियो राजन्यवैश्यौ च न नाम्ना मातरमाचार्य्यांश्च एके ।

बौधायनः—असावहं भो इति श्रोत्रे संस्पृश्य मनःसमाधानार्थ-मधस्ताज्जान्वोः पद्भ्याम्।

गौतमः,—

पादोपसंग्रहणम्, समवायोऽन्वहम्।
अभिगम्य तु विप्रोष्य।

विष्णुः,— जन्मप्रभृति यत्किञ्चित् चेतसा पुण्यमर्ज्जितम्।
तत्सर्व्वं निष्फलं याति एकहस्ताभिवादनात्॥
अजाकर्णेन विद्वांसं यतिं संपुटपाणिना।
मूर्खं चैवैकहस्तेन कनिष्ठं नाभिवादयेत्॥

केवलम्,—

ज्यायानपि कनीयांसं सन्ध्याकालेऽभिवादयेत्।
विना शिष्यं च पुत्रञ्च दौहित्रं दुहितुः पतिम्॥

तस्मात्,—

ज्येष्ठो यदि नमस्कुर्यात्कनिष्ठाय तयोः पुनः।
जन्मप्रभृति यत्पुण्यमायुश्चैव प्रणश्यति॥

इति संध्याकालेतरविषयम्।

प्रत्यभिवादने मनुः,—

आयुष्मान् भव सौम्येति वाच्यो विप्रोऽभिवादने।
अकारश्चास्य नाम्नोऽन्ते वाच्यः पूर्व्वाक्षरः प्लुतः।

शर्म्मान्तस्य नामत्वात् [1]शर्म्मपदमाकारान्तस्य प्लुतत्वम्।

---

(१) शर्म्मपदमकारस्य।

स हि नकारान्तशर्म्मपदस्य नकारात् पूर्व्वः।

पाणिनिः,—वाक्यस्य टेः प्लुत उदात्त इत्युपक्रम्य प्रत्यभिवादेऽशूद्र- इति प्रत्यभिवादने शूद्रविषयेऽन्त्यस्वरस्य प्लुतत्वमुदात्तत्वं चोक्तत्वात्।

वशिष्ठः—

सन्ध्यक्षरमप्रगृह्यमायवभावं च प्रतिपद्यत इति शेषः।

चकारात् प्लुतः प्लुतः प्रगृह्या अचीति प्रगृह्यसंज्ञा 'प्लुतानामच्येव परे नान्यत्र, तेनाप्रगृह्यसन्ध्यक्षरस्य नामान्ते आय् आव् इति स्यात्, एकारैकारयोराय् इति ओकारौकारयोराव् इति आयुष्मान् भव सौम्य राउ[2], आयुष्मान् भव सौम्य विष्णा उ[3] प्लुतत्वं उदात्तत्वञ्च, अस्य मते शर्म्मपदं विहायं नामान्त्यस्वरप्लुतत्वम्।

पुनर्व्वशिष्ठः,—

स्वस्तीति ब्राह्मणे ब्रूयादायुष्मानिति राजनि।
वर्द्धतामिति वैश्ये तु शूद्रे त्वारोग्यमेवच॥

यमः,—यत्सुखं त्रिषु लोकेषु व्याधिव्यसनवर्ज्जितम्।
यस्मिन् सर्व्वे स्थिताः कामाः सा स्वस्तीत्यभिशब्दिता।

स्वस्तीति प्रत्यभिवादनं ब्राह्मणे वैकल्पिकम्।

ब्रह्माण्डपुराणे—

अभिवादे कृते यस्तु न करोत्यभिवादनम्।
आशिषं कुरुते यस्तु स याति नरकं ध्रुवम्।
तस्मात् पूर्व्वाभिवादी स्याच्चण्डालस्यापि धर्म्मवित्॥

---

(१) प्लुतोनाम्नोऽन्ते परे नान्यत्र।

(२) हराऽय्। (३) विष्णाऽव्।

गुरोस्तु विशेषः, आपस्तम्बः—, अत्रास्य पाणी संगृह्य आशिष आशास्ते, पाणिग्रहणपूर्व्वकं प्रत्यभिवादनं, अन्येषां नामोच्चारणमात्रम्।

प्रत्यभिवादनानन्तरं मनुयमौ,—

ब्राह्मणं कुशलं पृच्छेत् क्षत्रबन्धुमनामयम्।
वैश्यं क्षेमं समागम्य शूद्रमारोग्यमेव च॥

शूद्रं प्रति आरोग्यवचनस्य विहितत्वान्न प्रागाहाराद्वृषलमभिभाषेतेति हारीतनिषेधस्याप्रवृत्तिः।

आपस्तम्बः,—नासम्भाष्य श्रोत्रियं पथि व्रजेदरण्ये च स्त्रियम्।
क्षत्रियस्त्रियुगं हन्ति वैश्यो हन्ति चतुर्युगम्॥
हन्त्येकविंशतियुगं शूद्रो ब्राह्मणमब्रुवन्।
त्रियुगं त्रिपुरुषं हन्ति नरके पातयति।

अब्रुवन् सम्भाषणमकुर्व्वन्[1]।

यत्तु अङ्गिराः,–प्रणाममगते शूद्रे स्वस्ति कुर्व्वन्ति ये द्विजाः।
शूद्रोऽपि नरकं याति ब्राह्मणास्तदनन्तरम्॥

तदाशीर्व्वादमात्रोपलक्षणम्।

यमः—अभिवादे तु यः पूर्व्वमाशिषं न प्रयच्छति।
यद्दुष्कृतं भवेत्तस्य तस्माद्भागं प्रपद्यते॥
तस्मात् पूर्व्वाभिभाषी स्याच्चण्डालस्यापि धर्म्मवित्।
सुरां पिवेति वक्तव्यमेवं धर्म्मो न लुप्यते॥

---

(१) अब्रुवन्।

अत्र पूर्व्वाभिभाषी तु कार्य्यान्तरात् पूर्व्वम् अवश्यं कर्त्तव्यमित्यर्थः, न तु अभिवादनात् पूर्व्वं[1] भ्रमः कार्य्यः।

बृहस्पतिः,—

जपयज्ञजलस्थं च समित्पुष्पकुशानलान्।
उदपात्रार्घ्यभैक्षान्नं वहन्तं नाभिवादयेत्॥

ब्रह्माण्डे,—समित्पुष्पकुशाद्यम्बुतिलाक्षतमृत्पाणिकम्।
जपं होमं च कुर्वाणं कदाचिन्नाभिवादयेत्॥

शातातपः,—

पाषण्डं पतितं व्रात्यं महापातकिनं शठम्।
सोपानत्कं कृतघ्नं च नाभिवादेत्कथंचन॥
धावन्तं च प्रमत्तं च मूत्रोच्चारकृतं तथा।
भुञ्जानमाचमार्हञ्च नास्तिकं नाभिवादयेत्॥
वमन्तं जृम्भमाणं च कुर्व्वन्तं दन्तधावनम्।
अभ्यक्तशिरसं चैव स्नातं नैवाभिवादयेत्॥

बृहस्पतिः,—

उदक्यां सूतिकां नारीं भर्त्तृघ्नीं ब्रह्मघातिनीम्।
अभिवाद्य द्विजो मोहादहोरात्रेण शुद्ध्यति॥

मनुः,—

यो न वेत्त्यभिवादस्य विप्रः प्रत्यभिवादनम्।
नाभिवाद्यः स विदुषा यथा शूद्रस्तथैव सः॥

(१) पूर्व्वमिति भ्रम कार्य्यः।

आपस्तम्बः,—

विषमगतायां गुरवे नाभिवाद्यम् ।

अन्वारुह्य नाभिवादयेत्, तथा,—

प्रयतायाप्रयतो न प्रत्यभिवादयेत् ।

न च वेष्टितशिरा अवहितपाणिर्वा अभिवादयेत् ॥

अवहितपाणिर्वस्त्वन्तरासक्तपाणिः ।

शङ्खलिखितौ, नोदकुम्भोऽभिवादयेत्, उदकुम्भयुक्त इत्यर्थः । तथाच, न भैक्ष्यञ्चरन् पुष्पाज्यपाणिर्वाऽशुचिर्न जपन् न देवपितृकार्य्यं कुर्व्वन् । जपकाले गुर्व्वादिनमस्कारस्य विहितत्वान्निषेधस्तदन्यविषयः ।

ब्रह्माण्डे,—

देवालये सभामध्ये यज्ञे राजगृहेषु च ।

नमस्कारं प्रकुर्व्वीत प्रत्येकं नाभिवादयेत् ।

परिषन्मध्ये प्रत्येकं नमस्कारो निषिद्धः, समुदाये न स्यादेव ।

हारीतः,—

नान्येन कृतप्रणामोऽन्यमभिवादयेत् ।

[1]अतएव गुर्व्वादिभ्यो पदोपसंग्रहरूपमभिवादनम् ॥

अन्येभ्यो मान्येभ्यो नमस्कारमात्रं, नमस्कारस्य बद्धाञ्जलेः प्रह्वीभावो नमःशब्दोच्चारणं च ।

णमप्रह्वत्वे शब्दे इति [2]स्मरणात्,

(१) अत च ।  (२) इति नमस्करणात् ।

अभिवाद्यो नमस्कार्य्यः पादयोर्वन्द्य एव चेति, शातातपेन पृथग्व्यपदेशात्पादयोर्वन्दनं दण्डवत्प्रणामः।

नमस्कारेऽपि सोपानत्कादिपर्य्युदासोऽभिवाद्यविशेषपर्य्युदासश्च।

अयञ्च विशेषः,—

उत्तमवर्णेन नाधमवर्णस्य नमस्कर्त्तव्यम्।

भविष्ये,—

ब्राह्मणं दशवर्षञ्च शतवर्षञ्च भूमिपम्।
पितापुत्रौ विजानीयाद्ब्राह्मणस्तु तयोः पिता॥
ब्राह्मणः सर्व्ववर्णानां स्वस्ति कुर्य्यादिति श्रुतिः।
यदि विप्रः प्रमादेन शूद्रमप्यभिवादयेत्॥
अभिवाद्य दश विप्रांस्ततः पापात्प्रमुच्यते।
ज्येष्ठं कनिष्ठो यो मोहात् स्वस्तिवाचं करोति वै॥
ज्येष्ठस्य हरते सर्व्वं दुष्कृतं शतधा कृतम्।

आपस्तम्बः,—

त्रिवर्षपूर्व्वः श्रोत्रियोऽभिवादनमर्हति॥

त्रिवर्षज्येष्ठ इत्यर्थः, अतोऽल्पकाले ज्येष्ठत्वेन नमस्कारे न दोषो न फलम्।

कनिष्ठाभिवादने दोषः,

गुर्व्वादीनां ज्ञातिसम्बन्धिबान्धवानां मुहूर्त्तेनापि ज्येष्ठत्वेऽभिवाद्यत्वं नमस्कार्य्यत्वञ्च

इति नमस्कारादिविधिः।

तत्र,—

इमं मइति द्वाभ्यामुदकपात्रं प्रपूर्य्य च ।
सोपानत्को गृहं गच्छेदस्पृशन् न वदन् क्वचित् ॥
ततश्च पादौ प्रक्षाल्य द्विराचम्य गृहं गतः ।
त्रिसन्ध्यं वाग्यतो वारि शस्त्रमाहृत्य[1] शोधयेत् ॥
भाण्डोपचारिभूगेहद्रव्यान् सपरितारकान्[2] ।
वज्रपवातसम्भूतो दोष उत्पद्यते गृहे ॥
शुद्ध्यते च [3]वह्निस्तोयैः शान्त्यर्थञ्च तदिष्यते ।

इति वचनात् ।

तेनोदकेन सर्व्वद्रव्यप्रोक्षणम् ।

पादप्रक्षालनाभावे वस्त्रपरिधाने च गृहप्रवेशे दोषो ब्रह्मवैवर्त्ते,—

विना पादौ च प्रक्षाल्य स्नात्वा विशति मन्दिरम् ।
तस्य स्नानादिकं नष्टं जपहोमादिकञ्च यत् ॥
परिधाय स्निग्धवस्त्रं गृहञ्चेत्प्रविशेद्गृही ।
रुष्टा लक्ष्मीर्गृहाद्याति शापं दत्त्वा सुदारुणम् ॥

(१) शुभ्रमाहृत्य ।
(२) सपरिचारकान् ।
(३) तद्वह्निस्तोयैः ।

# अथ अग्निहोत्रविधिः ।

होमं वैतानिकं कृत्वा स्मार्त्तं कुर्य्याद्विचक्षणः ।
स्मृतीनां श्रुतिमूलत्वात् स्मार्त्तं केचित् पुरा विदुः ॥

यत्तु,—

आवसथ्यमनादृत्य त्रेतायां यः प्रवर्त्तते ।
अनाहिताग्निर्भवति परिवित्तिश्च जायते ।

इति तदाधानपरमेव,—

सूर्य्येऽस्तशैलमप्राप्ते षट्त्रिंशद्भिरङ्गुलैः ।
प्रादुष्करणमग्नीनां प्रातर्भासाञ्च दर्शने ॥

इति प्रकाशमात्र एवाग्निहोत्रारम्भः ।

तथा च तत्काले उद्धरणं कार्य्यं, वाजसनेयिनां होमस्य अनुदिते विधानात्कांशभोजिन्यायेन श्रौतस्यानुदितहोम एव नियतः । उदिते जुहोतीति स्मृत्यन्तरे ।

प्रथमास्तमये पर्य्युदयञ्च स्वर्गकाम्यशयाने श्रीकामस्य ।

मनुः,—

उदितेऽनुदिते चैव समयाध्युषिते तथा ।
सर्व्वथा वर्त्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥

छन्दोगपरिशिष्टे,—

रात्रेः षोड़शके भागे ग्रहनक्षत्रभूषिते ।
कालं त्वनुदितं ज्ञात्वा होमं कुर्य्याद्विचक्षणः ॥

तथा प्रभातसमये नष्टे नक्षत्रमण्डले ।
रविर्य्यावन्न दृश्येत समयाध्युषितश्च तत् ॥
रेखामात्रश्च दृश्येत रश्मिभिश्च समन्वितम् ।
उदितन्तं विजानीयात्तत्र होमं प्रकल्पयेत् ॥
हस्तादूर्द्ध्वं रविर्य्यावद्भूमिं भित्त्वा न गच्छति ।
तावद्धोमविधिः पुण्यो नान्यो ह्युदितहोमिनाम् ॥
यावत् सम्यग्विभाव्यन्ते नभस्यृक्षाणि सर्व्वतः ।
न च लौहित्यमभ्येति तावत्सायञ्च हूयते ॥

अत्र स्मृतिः,—

नाग्निहोत्रात्परो धर्म्मो नाग्निहोत्रात्परन्तपः ।
नाग्निहोत्रात्परं श्रेयो नाग्निहोत्रात्परा गतिः ॥

इत्याद्यग्निहोत्रं फलम् ।

तत्र स्वयं वा जुहुयादध्वर्य्युर्व्वेति विकल्पः, तत्र अध्वर्य्युकर्त्तृकत्वं, तदभावे स्वयं होमः, उपवसथे नियमः दर्शपौर्णमासदिने[1] स्वयमेव जुहुयादित्यर्थः ।

स्वयं होमे फलं यत्तदन्यहोमे न विद्यते ।

इति स्मार्त्तविषयः,

सायं प्रातरग्निहोत्रे गार्हपत्याहवनीयस्योद्धरणमात्र[2]मुदित-मनस्तमितानुदितयोः ।

(१) दर्शपूर्णमासपूर्व्वदिने ।

(२) गार्हपत्याहवनीयस्योद्धरणमनस्तमितानुदितयोः ।

विहितकालात्प्राक् भ्रान्त्या प्रातर्होमानुष्ठाने न पुनः क्रिया। सायं होमे तु भ्रान्त्या प्राक्कालात् कृते काले पुनः क्रिया। अन्यत्र,—रजोनीहारधूमाभ्रशाखाद्यन्तरिते रवौ।

सन्ध्यामुद्दिश्य जुहुयाद्धुतमस्य न लुप्यते॥

होमीयद्रव्याणि यथा, पयसा पशुकामः स्वर्गकामो वा, यवाग्वा-ग्रामकामः, तण्डुलैर्बलकामः, दध्नेन्द्रियकामः, घृतेन तेजस्कामः,

एतानि संयोगपृथक्त्वेन नित्यानि च।

पयोदधियवागूश्च सर्पिरोदनतण्डुलाः।

सोमो मांसं तथा तैलमापश्चैव दशैव ह॥

तत्र पयोहोमप्राशस्त्यं श्रुतेरेव गम्यते।

पयसीदꣳ सर्व्वं प्रतिष्ठितं सर्व्वꣳ देवेभ्योऽन्नं प्रयच्छति।

स्मृतिश्च,—

पयस्यन्तर्हितं विश्वं पश्यन्नेवं पयो नरः।

[1]एकमेव तदाहृत्य जगदात्मानमश्नुते।

यदहरेव जुहोति तदहः पुनर्मृत्युमपजयतीति श्रुतेरेकाहेनापि सायं प्रातः प्रयोगेण फलसिद्धिः।

"स वै सायं प्रातश्च जुहोतो"ति श्रुतेः,

"सायमादि प्रातरन्तमेकं कर्म्म प्रचक्षते।"

इति स्मृतेश्च सायं प्रातरभ्यस्तमेवम्[2]।

(१) एकयैव तदाहृत्य।

(२) सायं प्रातरभ्यस्तमेकं कर्म्म।

द्रव्यं देशश्च मन्त्राश्च कर्त्ता कालस्तु शासनम् ।
सायं यत्स्वीकृतं सर्व्वं प्रातस्तदनुवर्त्तते ॥
नैव कन्या न युवती नाल्पविद्यो न बालिशः ।
होता स्यादग्निहोत्रस्य नार्त्तो नासंस्कृतस्तथा ॥

# अथ स्मार्त्तहोमः ।

तत्र दक्षः,—

सन्ध्याकर्म्मावसाने तु स्वयं होमो विधीयते ।
स्वयं होमे फलं यत्तदन्यहोमे न विद्यते ॥
ऋत्विक् पुत्रो गुरुर्भ्राता भागिनेयोऽथ विट्पतिः ।
एतैरेव हुतं यत्तु तद्धुतं स्वयमेव तु ॥

विट्पतिर्जामाता, एवं च स्मार्त्तहोमे स्वयंकरणं मुख्यं, तदसम्भवेऽन्येन करणं, कामं गृह्येऽग्नौ पत्नी जुहुयात्सायम्प्रातर्होमयोरिति गोभिलवचनाद्यजमानाभावे पत्न्या अपि अधिकारः ।

शौनकः,—

पाणिग्रहणादिगृह्यं परिचरेत् पत्न्यपि कुमार्य्यन्तेवासी वेति, कन्यन्तराभावे कुमार्या अप्यधिकारः ।

अनुपनीतस्य आर्त्विज्यानधिकारेऽपि वैदिकमन्त्रपदशून्यत्वात्तदधिकारः ।

असमक्षन्तु दम्पत्योर्होतव्यं नर्त्विगादिना ।

यजमानप्रवासे पत्न्यां रजस्वलायां अगत्या अन्यस्य होमकरणम् ।

पुरास्तमयात्प्रादुष्कृत्य अस्तमिते जुहुयात् ।

पुरोदयात्प्रादुष्कृत्य उदितेऽनुदिते वा प्रातराहुतिः ।

प्रादुष्करणवेलाया अनुगुप्ता अप आहरेत् ।

मणिकाद्वा ।

हविषाग्नौ जुहुयात्कृतस्याकृतस्य वा ।
अकृतं चेत्प्रक्षाल्य प्रोदकं कृत्वा जुहुयात् ।
पयो दधि यवागूं वा पारस्करः,

दध्ना तण्डुलैर्वेति,

सप्तपत्राः शुभा दर्भा ब्रह्मग्रन्थिसमन्विताः ।
उपयमनकुशाः प्रोक्ता अग्निकार्य्यादिकर्म्मसु ॥

पाण्याहुतिर्द्वादशपर्व्वपूरिका,
द्रव्यादिना चेत् स्रुवमात्रपूरिका ।
दैवेन तीर्थेन च हूयते हविः,
स्वङ्गारिणि स्वर्चिषि पावके च ॥

योऽनर्चिषि जुहोत्यग्नौ व्यङ्गारिणि च मानवः ।
मन्दाग्निरामयावी च दरिद्रः सोऽभिजायते ॥
करीषाग्नौ स जुहुयाद्विष(१)स्तन्यं करोति यः ।

इत्युक्तत्वात्काष्ठाधानं कर्त्तव्यम् ।

होमं करोति यो विप्रस्तुलसीकाष्ठवह्निषु ।
शतक्रतुसमं पुण्यं होता तत्फलमाप्नुयात् ॥
मुखेनैव धमेदग्निं मुखादेषोऽध्यजायत ।
नाग्निं मुखेनेति तु यल्लौकिके योजयन्ति तत् ॥
समिधश्च पलाशाश्वाश्वत्थन्यग्रोधप्लक्षवैकङ्कतोद्भवाः ।
काश्मर्य्योदुम्बरौ वैल्वश्चन्दनः सरलस्तथा ॥
शालश्च देवदारुश्च खदिरश्चेति याज्ञिकाः ।
समित्पुष्पकुशादीनि ब्राह्मणः स्वयमाहरेत् ॥

---

(१) विश ।

नाङ्गुष्ठादधिका कार्य्या समित्स्थूलतया क्वचित्।
प्रादेशान्नाधिका नोना न तथा स्याद्विशाखिका॥
न वियुक्ता त्वचा चैव न सकीटा न पाटिताः।
प्रागग्राः समिधो देया एतत्श्रौतकर्म्मस्वपि॥

सर्व्वत्र होमेषु देवतामुद्दिश्य द्रव्यत्यागो मानससंकल्पो यजमानेनैव कार्य्यः।

तथाच द्रव्यं,—इदमिति निर्द्दिश्य चतुर्थ्यन्तदेवतापदमुच्चार्य्य। स्वत्वनिवृत्तिसंकल्पः कार्य्यः, ऋत्विक्कर्त्तृत्वपक्षेऽपि प्रक्षेपसमकालं यजमानेनैव कार्य्यः।

त्यागस्य स्वत्वनिवृत्तिरूपस्य परेण कर्त्तुमशक्यत्वात्।
न ममेति शब्दोच्चारणमापस्तम्बानां ज्ञानविशेषोत्पादनाय।
तदुच्चारणं विनापि ज्ञानविशेषोपपत्तौ न तत्रादरः।

अयं त्यागः पत्न्या अपि कार्य्यः, साधारणस्य द्रव्यस्य एकेन त्यक्तुमशक्यत्वात्, धर्म्मे चार्थे च कामे च नातिचरितव्य इति विवाहकाल एव द्रव्यसाधारणं प्रतिपाद्यते।

तथा च पत्न्या अनुमतिमात्रेण तत्कर्त्तृकत्वसम्भवात् त्यागोपपत्तिः, तथा च पत्नी च ददातीति दीयमानमनुजानातीति व्याख्यातं, तथा च प्रोषिते यजमाने प्रायश्चित्ताहुतीनां मन्त्रान्ते प्रक्षेपसमकालं तेन कर्त्तुमशक्यत्वात् पत्न्यैव त्यागः कार्य्यः।

यजमानस्य अनुज्ञादानेन तत्त्यागे कर्म्मसाद्गुण्यम्।

अतएवोक्तं,—निक्षिप्याग्निं स्वदारेषु परिकल्प्यर्त्विजन्तथा।
प्रवसेत् कार्य्यवान् विप्रो वृथैव न चिरं क्वचित्॥

तथा मनसा '[1]नैमित्तिकं कर्म्म प्रवसन्नाप्यतन्द्रितः।
उपविश्य शुचिः पूर्व्वं यथाकालमुपाचरेत्।

इति प्रवासे कर्म्मानुसन्धानं यजमानस्य फलाय भवति।

अन्यथा यजमानः प्रोषितः पत्न्युदक्या चेदग्निहोत्रादि अकृतमेव स्यात्।

न च, द्वयोरप्यसमक्षं तु हुतमप्यहुतं भवेदिति वचनान्न कर्म्मसिद्धिः। परिकल्प्यर्त्त्विजं तथेत्यनेन असमक्षहोमस्याप्यनुज्ञानात्।

तामवरुध्य यजेतेति रजस्वलां विहाय कर्म्माचरणात् पत्न्याऽन्ववेक्षणाभावेऽपि कर्म्मसादृगुण्यम्। तत्र स्त्री चाविशेषादिति सूत्रितत्वात् पत्न्या अपि कर्त्तृत्वेन फलभागित्वं, न च व्यासज्यवृत्तिकर्त्तृत्वं द्वयोरपि फलभागित्वात्।

पत्नी आज्यमवेक्षते यजमानो विष्णुक्रमणात् क्रम इति दम्पत्योः सहाधिकारः।

तथाच क्षौमे वसानावाधीयातामिति लिङ्गमुपपद्यते स्वर्गकामो यजेतेत्यादौ स्वर्गकाममुद्दिश्य यागविधानादुद्देश्यविशेषणस्य ग्रहैकत्ववदविवक्षितत्वात् पुंस्त्वैकत्वे न विवक्षिते पशुना यजेतेत्यादौ पशोरेव यागकरणत्वेन विधानादुपादेयविशेषणत्वेन पुंस्त्वैकत्वे विवक्षिते इति वैषम्यम्, अन्ये तु एकत्वं पुंस्त्वावरुद्धम्, पुंसः सद्वितीयत्वं वारयति न तु स्त्रियाः।

---

(१) नैत्यकम्।

अतएव स्त्रियामेकत्वान्वयाभावेन अनेकस्त्रीकर्त्तृकत्वमप्येकस्मिन् प्रयोगे, एवञ्च यदा यजमानः प्रोषितोऽशौचं शृणोति तदा पत्नी गृहे—

आश्चादिकं करोति, तथा श्राद्धं सगुणमेव, पत्न्या गृहेऽशौच-श्रवणे तत्सम्बन्धेन पाकस्य दुष्टत्वान्न श्राद्धकरणम्।

यजमानस्तु पश्चान्नायन्नीजपरूपं वैश्वदेवलोपप्रायश्चित्तं कुर्य्यात्।

आश्वस्याशौचान्ते, एवञ्च बहुपत्नीकस्य, "ज्येष्ठा चेदग्निसंयुक्ता-गच्छत्यन्या यथारुचि" इत्युक्तत्वात् अन्यासां पितृगृहगमनमनुज्ञातं, पत्न्याः प्रवासे पुनराधानकर्म्मविधानमेकपत्नीकपरम्। स्त्रीणां सौभाग्यतो ज्यैष्ठ्यं विद्ययैव द्विजन्मनामित्युक्तत्वात्" ज्येष्ठत्वमपि न ज्येष्ठभार्य्यापरम्।

तथा,—

तत्र शक्ततरा पश्चादासामन्यतमा तु या,
उपेतानामन्यतमा गच्छेदग्निं न कामतः॥

इति वचनादाधानकालस्थितानामेव या शक्ता सैवाग्नीन् परि-चरेत्, एवञ्च बहुपत्नीकस्य एकस्याग्निहोत्रसन्निधाने अन्यस्याः प्रवासे न दोषाय।

केवलं प्रवसेत्कार्य्यवान् विप्र इति स्त्रीणां साक्षात् प्रवासानुक्तेः प्रवसन् प्रवत्स्यन् वा वैश्वानर्य्या यजेतेति प्राक्प्रवासादागत्य वैश्वा-नरी कार्य्या, पर्व्वातिक्रमे कृच्छ्रार्द्धं, एवञ्च यजमानस्य 'तृष्यैव

(१) तत्रैव।

न चिरमितिवचनाद्दूरथाचिरप्रवासयोरिष्टिः । पर्व्वातिक्रमे

आहिताग्नेर्यजमानस्य भार्य्यान्तरपरिग्रहे पुनरन्वारम्भणीयानुष्ठानम् ।

कृतान्वारम्भणो वापि कृतसोमोऽथवा द्विजः ।
अकृताधानसोमेज्यां पत्नीमेवानुवर्त्तयेत् ॥

न च "धर्म्मप्रजासंपन्ने दारे नान्यां कुर्व्वीत, अन्यतराभावे कुर्व्वीत, प्रागग्न्याधेया"दिति वचनादग्न्याधेयादूर्द्ध्वं विवाहनिषेधः, परिसंख्यापत्तेः ।

किन्तु विवाहोत्तरमग्न्याधेयं कुर्य्यादित्यर्थः,

तथोक्तं,--सदारोऽपि पुनर्दारान् कथंचित्कारणान्तरात् ।
य इच्छेदाग्निमान् कर्त्तुं क्व होमोऽस्य विधीयते ॥
इत्याशङ्क्य स्वेऽग्नावेव भवेद्धोमो लौकिके न कथञ्चन ॥

इति ।

दाहयित्वाग्निहोत्रेण स्त्रियं वृत्तिमतीं पतिः ।
आहरेद्विधिवद्दारानग्निंश्चैवाविलम्बयन् ॥

अतो यजमाननाशेन पत्न्या आधानप्रसक्तिः ।

[1]अग्निहोत्रातिपत्तावाहुतिं जुहुयात् मनोज्योतिरिति ।
प्राणायामशतमेकरात्रात्, आषष्टिरात्रात्तिस्रोरात्रीरुपवसेत् ।
अत ऊर्द्ध्वं मासं वत्सरं प्राजापत्यम् ।

(१) अग्निहोत्रातिपाते आहुतिम्

संवत्सरोत्सन्ने चाग्निहोत्रे चान्द्रायणं कृत्वा पुनराधानम् अवाप्याहुतिपूर्व्वकं कार्य्यम्। अत्र संवत्सरोत्सन्ने पुनराधान-विधिनात् क्रियमाणाग्नावग्निहोत्रलोप एव तत्।

अरणिसत्त्व इति केचित्, अरण्यग्न्युत्सर्गे।

अग्निहोत्रपविध्याग्निं ब्राह्मणः काममोहितः।

चान्द्रायणं चरेन्मासं वीरहत्यासमो हि सः॥

स्मार्त्ताग्न्युत्सर्गे तु,—

योऽग्निं त्यजति नास्तिक्यात् प्राजापत्यञ्चरेत्तु सः।

होमद्वयात्यये दर्शपौर्णमासात्ययेऽपि च।

पुनरेवाग्निमादध्यादिति भार्गवशासनम्॥

संवत्सरं होमद्वयात्यय इति केचित्, अग्निहोमातिपत्तौ प्रायश्चित्तसद्भावात्। इदञ्च मध्ये भोजने सति यदा तु होमकाले होमाग्नौ न भुङ्क्ते। तदा यावद्दिनं होमपातः।

तावद्दिनमभुञ्जानः स्थित्वा तन्त्रेण सर्व्वहोमान् पञ्चहोम-वत्कुर्य्यात्। दर्शपौर्णमासात्यये च प्रज्ञातेष्ट्यातिपत्तौ पथिकृद्विधा-नात् तदसम्भव एवेदं पुनराधानम्।

दर्शं वा पौर्णमासं वा विलुप्योभयमेव वा।

एकस्मिन् कृच्छ्रपादेन द्वयोरर्द्धेन शुद्ध्यति।

एतत् श्रौतपरमेव, होमलोपे च, पश्चादिकर्म्मलोपे चैतदेव।

अहूयमानेऽनग्नेश्च[1] नयेत्कालं समाहितः।

---

(१) अहूयमानेऽनग्नौश्च।

संपन्ने च यथा तत्र हूयेत तदिहोच्यते ॥
आहुतीः[1] परिसंख्याय पात्रे कृत्वाहुतीः सकृत्[2] ।
तन्त्रेण विधिवद्धुत्वा एतदेवापरा हुतिः[3] ॥

अयं अतिक्रान्तहोमप्रकारोऽविशेषात् श्रौतस्मार्त्तोभयपरः, आसायमाहुतेः प्रातराहुतिर्नात्येति, आप्रातराहुतेः सायमाहुतिरिति[4], आपौर्णमासाद्दर्शो नात्येति आदर्शात्पौर्णमास इति। मुख्यकालासम्भवे गौणकाले कर्त्तव्यः।

एवमागामियागीयपूर्व्वकालादधस्तनः ।
स्वकालादुत्तरो गौणः कालः सर्व्वस्य कर्म्मणः ॥

इत्युक्तत्वात्, प्रातर्होमदर्शेष्ट्योस्तत्कालातिक्रमे प्रारब्धस्य समापनीयत्वात् अनादेशप्रायश्चित्तपूर्व्वं क्रियैव। तत्र दर्शेष्टेः कालान्तरे करणेऽपि कात्यायनमते पितृयज्ञस्य[5] इष्ट्यङ्गत्वात्कालान्तरेऽपि तत्पूर्व्वं क्रिया, जैमिनिमते तु दर्श एव तत्क्रिया। तत्र त्वकरणेऽक्रियैव* ।

---

(१) आहुता ।
(२) पृथक् ।
(३) अपि ।
(४) सायमाहुतिर्नात्येति ।
(५) पिण्डपितृयज्ञस्य ।

# अथ पथहोमविधिः ।

ऋषिभिर्बहुधा दृष्टमापत्कालेषु सर्व्वतः ।
विधानं पथहोमस्य ब्रूहि सम्यक् सुयाज्ञिक ॥
चतुर्द्दश चतुर्ग्राह्यः सकृदुन्नयनं ततः ।
एका समित्सकृद्धोमः सकृदेव निमार्ज्जनम् ।
अपराग्नेर्यथा दृष्टश्चतुर्द्दशगुणो भवेत्॥ इति ।
पथहोमे कृते पश्चान्निर्वाणं तु यदा भवेत् ।
अत ऊर्द्ध्वं तु कर्त्तव्यं शेषाहे तु यथाविधि ॥
आहिताग्नेः प्रवासविधिः । स्वयमुद्धरणम् ।

"नर्य्य प्रजां मे पाही"ति गार्हपत्योपस्थापनं, "शंस्य पशून्मे पाही"ति आहवनीयस्य । "अथर्व्य पितुं मे पाही"ति दक्षिणाग्नेः, उपस्थाय गमनं, वाग्विसर्ज्जनं, प्रवासे यथाकालं याजमानं, अग्निहोत्रेऽभ्युक्षणं, देवतोद्देशेन द्रव्यत्यागः ।

मन्त्रेणाग्न्युपस्थापनं, प्रवसनकाले विहाराभिमुखोऽग्न्युपस्थानमन्त्रानुच्चरेदित्यापस्तम्बवचनात्, पुनरभ्युक्षणं, दर्शपौर्णमासयोरुद्धरणादिसर्व्वपदार्थानुसन्धानं, व्रतग्रहणं प्राङ्मुखस्य, प्रयाजानुमन्त्रणं, देवता उद्दिश्य द्रव्यत्यागः, "समिदसी"ति जपः, पूर्णपात्रग्रहणं, दक्षिणावर्त्तनम्, प्राग्गमनं, व्रतविसर्गः, एवं चातुर्मास्येष्टिदेवादसन्निधाने वोढव्यं, न काम्येषु, दैवात्प्रवासोपस्थानमकृत्वा गमने, "इहैव सन् तत्र सन्तं त्वाग्ने हृदा वाचा मनसा वा बिभर्म्मि ।

तिरो मा साम्तं मा प्रगासीज्ज्योतिषा वैश्वानरेणोपतिष्ठते ।”
इत्याश्वलायनोक्तमुपस्थानं कृत्वा याजमानं यथोक्तम् ।

प्रवेशविधिः,—मत्या वाग्यमनं, समित्पाणिर्गुरुदेवतादिसन्निधिमप्यगत्वाऽग्न्यागारे प्रविश्य उद्धृत्य आहवनीयोपस्थानम् ।

“आगन्म विश्ववेदसमस्मभ्यं वसुवित्तमम्, अग्ने सम्राडभिद्युम्नमभिसह आयच्छस्व,” गार्हपत्योपस्थानं, “अयमग्निर्गृहपतिर्गार्हपत्यः प्रजाया वसुवित्तमः, अग्ने गृहपतेऽभिद्युम्नमभिसह आयच्छस्व, दक्षिणाग्न्युपस्थानं, शाखान्तरीयमन्त्रेण,—

“अयमग्निः पुरिष्यो रयिमान् पुष्टिवर्द्धनः, अग्ने पुरीष्याभिद्युम्नमभिसह आयच्छस्व” तत्र उपविश्य आहवनीये समिधमाधाय हव्यं प्रज्वाल्य तत्रैव प्रक्षेपः, एवं गार्हपत्ये दक्षिणाग्नौ च ।

तूष्णीं गार्हपत्यमुपस्थाय शंस्योपस्थानं ततो दक्षिणाग्न्युपस्थानम् । अग्न्यागारान्निष्क्रम्य स्वगृहोपस्थानं, “गृहा मा विभीत मा वेपध्वमूर्जं बिभ्रत एमसि ।

ऊर्जं बिभ्रद्वः सुमनाः सुमेधा गृहानैमि मनसा मोदमानः ।
येषामध्येति प्रवसन् एषु सौमनसो बहुः ।

गृहानुपह्वयामहे ते नो जानन्तु जानतः ।

उपहूता इह गावः उपहूता अजावयः ।

अथोऽन्नस्य कीलाल उपहूतो गृहेषु नः” ॥

ततो गृहप्रवेशः, तत्रमन्त्रः,—

“क्षेमाय वः शान्त्यै प्रपद्ये शिवं शग्मं शंयोः शंयोः ।”

ततश्च स्वात्तपुत्रदर्शनजपादि ।

"अङ्गादङ्गात् सम्भवसि हृदयादधिजायसे ।
आत्मा वै पुत्रनामासि स जीव शरदः शतम् ॥"

अथास्य मूर्द्धानमवजिघ्रति,

प्रजापतेष्ट्वा हिङ्कारेणावजिघ्रामि सहस्रायुषाऽमुकदेवशर्म्मन् स जीव शरदः शतम् ।

गवां त्वा हिंकारेणावजिघ्रामि सहस्रायुषा अमुकदेवशर्म्मन् स जीव शरदः शतम् ।

त्रिः दक्षिणेऽस्य कर्णे जपति ।

"अस्मे प्रयंधि मघवन्नृजीषिन्निन्द्ररायो विश्ववारस्य भूरेः, अस्मे शतं शरदो जीवसे धा ।

अस्मे वीरान् शश्वत इन्द्र शिप्रिन् ।"

"इन्द्र श्रेष्ठानि द्रविणानि धेहि चित्तं दक्षस्य सुभगत्वमस्मे, पोषं रयीणामरिष्टिं तनूनां स्वाद्मानं वाचः सुदिनत्वमह्नाम् ।"

एवं प्रतिपुत्रं दर्शनादिजपान्तम् ।

दुहितॄणां तूष्णीं मूर्द्धावघ्राणम् । तद्दिने गव्याणामहिंसनं कामं श्वः ।

अत्र शिष्टाः,—

प्रवत्स्यामीत्युपस्थाय वह्निं न प्रवसेद्यदि ।
आगत्योपस्थितिं तत्र प्राह कौषातकी श्रुतिः ॥

अथाग्निहोत्रप्रातःप्रयोगः, तत्र अध्वर्य्युकर्त्तृकपक्षे, उदयात् प्राक् त्रिमात्रप्रणवमुच्चार्य्य यजमान उद्धरेति ब्रूयात् ।

ततोऽध्वर्य्युर्दक्षिणया द्वाराग्न्यागारं प्रविश्य,

गार्हपत्यादाहवनीयं दक्षिणाग्निं चोद्धरेत् ।

स्वयं करणपक्षे नोद्धरणं प्रैषः, यजमानस्यैव प्रवेशोद्धरणे, तत्र आहवनीयखरे, कुशाः, गोमयं, वज्रं उदकं, इत्येतेषामुपकल्पनं, खरमध्ये त्रिभिः कुशैः प्रदक्षिणं परिसमूहनं, उत्तरदेशे कुशप्रक्षेपः, ततो गोमयेन त्रिःप्रदक्षिणमुपलेपनं वज्रेण उदक्संस्थं त्रिरुल्लेखनं यथोल्लिखितं उद्धृत्योत्तरदेशे पांशुप्रक्षेपः ।

त्रिरभ्युक्षणं, एवं दक्षिणाग्निखरेऽपि पञ्चभूसंस्कारः ।

ततो गार्हपत्यस्य पश्चादुपविश्य तस्मादेकदेशमुद्धृत्य ॥

आहवनीयखरं प्रति नयनं, ततः प्राङ्मुख उपविश्य पश्चात्तत्रो-हस्ताभ्यामभिमुखमग्निस्थापनं, प्रत्यागत्य पुनर्गार्हपत्यादग्न्यु-द्धरणं, दक्षिणाग्निखरं प्रति नीत्वा तत्पश्चात् प्राङ्मुख उपविश्य दक्षिणाग्निखरे पूर्ववदग्निस्थापनं, यजमानस्य गार्हपत्यदक्षि-णाग्न्योरन्तरां गत्वा गार्हपत्यं प्रदक्षिणीकृत्याथाहवनीयं दक्षिणतः पीठे उपवेशनं, गार्हपत्यनैर्ऋते पत्न्या उपवेशनं, "वृष्टिरसि वृश्च मे पाप्मानमृतात्सत्येन मयि व्रतमिति" यजमानस्य जलपानं, वाग्यमनं द्विराचमनम् ।

---

## अथाध्वर्य्युकर्म्म ।

गार्हपत्यमुत्तरेण उदक्संस्थं पात्रासादनम् ।

स्वयं पक्षे तु यजमानस्याप्यत्रावस्थानं, कूर्च्चं, कुशाः आपः स्थाली, आवज्योतनतृणद्वयं, स्रुवः, स्रुक्, एका समित्, भक्षण-पात्री, तिस्रः समिधः, अपरेणाहवनीयं कूर्च्चनिधानम् ।

तदुपरि कुशानामाहवनीयस्य त्रिभिस्त्रिभिः कुशैः प्रागुदगग्रैः परिस्तरणं, ततो गार्हपत्यदक्षिणाग्न्योः क्रमेण परिस्तरणम् ।

गार्हपत्यं परिसमुह्य गार्हपत्यपर्य्युक्षणं, ततो दक्षिणाग्नेः, गार्हपत्यादाहवनीयं यावदुदकधारानिनयनं, आहवनीयपर्य्युक्षणं, दोहनपात्रीमादाय गोसमीपं गत्वा शूद्रभिन्नेन दोहनं, दोहन-प्रभृति होमपर्य्यन्तं वाग्यमः, पूर्व्वेणाहवनीयमानीय दक्षिणत-उत्तरतोऽङ्गाराणि निरुह्य गार्हपत्येऽधिश्रयणम् ।

तण्डुलस्य होमीयत्वे आहवनीयदक्षिणेनानयनं, घृतादेः पूर्व्वे-णैव, तृणेन दुग्धस्यावज्योतनं, जलसेकः, पुनरवज्योतनं(१), उत्तर-तस्त्रिरुद्वासनं, तण्डुलादेरधिश्रयणाद्यभावः ।

स्रुक्स्रुवप्रतपनं, उदकस्पर्शनं, पाणिना द्वयोर्म्मार्ज्जनं, उन्नया-मीति प्रश्नः, यजमानस्तिष्ठन् ॐ उन्नयेति वदेत् ।

स्रुवेण स्रुचि वारचतुष्टयग्रहणं, स्रुग्दण्डोपरि समिधं दत्त्वा गार्हपत्यादाहवनीयं प्रतिगमनं, मुखमात्रे धृत्वा मध्ये नाभिपर्य्यन्तं नीत्वा पुनर्मुखमात्रे धृत्वोपवेशनं उद्दिश्य जान्वाच्य“सूर्य्यज्योतिषं

(१) अवद्योतनम् ।

त्वा वायुमतीं प्राणवतीं स्वर्ग्यां स्वर्गायोपदधामि भास्वतीं" इति समिदादानम्।

इध्मे प्रदीप्ते होमः, सूर्य्योज्योतिर्ज्योतिः सूर्य्यः स्वाहेति स्रुचा होमः, इदं सूर्य्याय इति त्यागः, कूर्च्चे निधाय गार्हपत्यावेक्षणं, तूष्णीं उत्तराहुतिः, पूर्व्वापेक्षया भूयसी, इदं प्रजापतये इति याजमानम्।

स्रुचि भूयिष्ठं शेषयित्वा स्रुचं द्विः प्रकम्प्य कूर्चे निधानं स्रुगग्रोपमार्ज्जनं, नमो देवेभ्य इति स्रुवाग्रे न्युब्जपाणिना निमार्ज्जनमुत्तरे स्वधा पितृभ्य इति दक्षिणतः उत्तानपाणिना निमार्जनम्। उदकोपस्पर्शनं, स्थाल्याः स्रुवेण गार्हपत्ये होमः, इह पुष्टिं पुष्टिपतिर्दधात्विह प्रजाꣳ रमयतु प्रजापतिः, अग्नये गृहपतये रयिमते पुष्टिपतये स्वाहा" इति, इदं अग्नये गृहपतये रयिमते पुष्टिपतये तूष्णीं द्वितीयं, इदं प्रजापतये याजनं, "अग्नयेऽन्नादायान्न पतये स्वाहेति।

दक्षिणाग्नौ" स्रुवेण, इदमग्नयेऽन्नादायान्नपतये,

तूष्णीं द्वितीयं, स्रुचमादायानामिकया प्राशनं द्विराचमनम्। पुनः स्रुचि गृहीत्वानामिकया प्राश्य द्विराचमनम्।

शेषं भक्षणपात्रां कृत्वा ततस्तस्य लेहनम्।

स्रुचि जलं कृत्वा "देवान् जिन्वेति" स्रुगग्रेण जलसेकः, "पितॄन् जिन्वेति" दक्षिणतः, सप्तर्षीन् जिन्वेति" ऊर्द्धमुत्क्षेपणं, चतुर्थं कूर्चस्थाने निषिञ्चति।

अग्नये पृथिवीक्षिते स्वाहा, पृथिव्यां अमृतं जुहोमि स्वाहा,

अमृते अमृतं जुहोमि स्वाहा इति। कूर्चमाहवनीयस्य पश्चात्कृत्वा, स्रुक्स्रुवयोः प्रतिकूर्चे[1] निधानम्। "समिदसि समिद्धो मेऽग्ने [2]दिदिहि, समेद्धाते अग्ने दिद्या[3]समिति गार्हपत्ये समिदाधानं, ततो दक्षिणाग्नौ, तत आहवनीये, यजमानस्य पयोहोमपक्षे वात्सप्रेणोपस्थानं यथोक्तं वैकल्पिकं, "भू र्भुवः स्वः सुप्रजाः प्रजभिः[4] भूयासं, सुवीरो वीरैः सुपोषः पोषै रिति" आहवनीयोपस्थानं, ततोऽनेन गार्हपत्योपस्थानं, तूष्णीमाहवनीयमुपस्थाय तदभिमुखं तत्समीपे उपवेशनं, गार्हपत्यसमीपे शयनमासनं वा, अध्वर्य्योर्गार्हपत्यं पर्य्युक्ष्य ततोदक्षिणाग्निं तत आहवनीयपर्य्युक्षणं, नान्योदकधारा, यजमानस्य "विद्युदसि वि मे पाप्मानं जह्यपोऽवभृथमभ्युपैमि मयि सत्यं गोषुमे व्रत" मिति जलभक्षणं, द्विराचमनम्।

वाग्विसर्गः,

गार्हपत्यं प्रदक्षिणीकृत्याग्न्योरन्तराले निष्क्रमणम्।

मुहूर्त्तं सभ्यसमीपे उपवेशनं माध्यंदिनश्रुत्या॥

इन्द्रायाहवनीयाग्नये स्वाहा[5], नलायान्वाहार्य्यपचनाग्नये नमः, यमाय गार्हपत्याग्नये नमः, अनग्नत्वांगमनाय सभ्याग्नये नमः, असत् पांसवाय नमः—

(१) प्रतप्य।

(२) दीदिहि।

(३) दी।

(४) प्रजाभिः स्याम्।

(५) नमः।

इति पञ्चमन्त्रैराहवनीयगार्हपत्यदक्षिणाग्निसभ्याग्नीनां उद्धृतभस्मनश्चोपस्थानं, भस्मसमीपे उपवेशनं, "हुत्वाग्नीन् सूर्य्यदैवत्यान् अपेक्ष्मन्त्रानि"ति वचनात् सूर्य्यमन्त्रत्रयजपो होमाङ्गं, न सायमनुपस्थायापरीत्या नमस्कृत्वोपविशेत्तथा[1] प्रातरिति हारीतवचनात् त्रयाणामग्नीनां उपस्थानं प्रदक्षिणनमस्कारैः[2]।

(१) आप्रातरिति।

(२) प्रदक्षिणनमस्कारौ च।

# अथ स्मार्त्तहोमः ।

उदयात्पूर्व्वं यजमानः स्वयमेव आवसथ्याग्निसमीपे उपविश्य, मणिकाख्येऽग्निगृहकार्य्यार्थजलपात्रे पर्य्युषितं जलं वहिष्कृत्य ।

"ॐ आपो रेवती क्षयथा हि व स्वः क्रतुञ्च भद्रं विभृथामृतञ्च, रायश्च स्थ स्वपत्यस्य पत्नीः सरस्वती तद्गृणते वयोऽधात्" इत्यल्पोदकपूरणं, आपोहिष्ठेत्यादि आपोजन यथाचन इत्यन्ताभिस्तिसृभिः ऋग्भिः शेषं पूरयेत्, एतन्मणिकाधानकर्म्म निरग्निकेनापि-कार्य्यं, जपयोग्युदकसंस्कारमात्रार्थत्वात्, अतएव गृह्ये शाला-कर्म्मानन्तरमेतदुक्तम् ।

तेन शालाकर्म्म तत्सर्व्वसाधारणमेवैतदिति,

अतः, गृहे वसन् ऋचा सृष्टे कृत्वा स्वर्णकुशोदकम्,

उद्धृत्य मणिकात्तोयं तेनाभ्युक्षणमाचरेत् ।

रक्षोघ्नांश्च जपेन्मन्त्रान् गायत्रीं वेदमातरम् ॥

अभ्युक्षयेत् स्मरन् विष्णुं पुण्डरीकाक्षमच्युतम् ।

इति शिष्टाः ।

तत आसादनं, उपयमनकुशास्तिस्रः समिधः, मणिकोदकं तण्डुलाः इत्यासाद्य उपयमनकुशानादाय समिधोऽभ्याधाय मणि-काग्निः पर्य्युक्ष्य द्वादशपर्व्वपूरं तण्डुलानादाय, सूर्य्याय स्वाहा, इदं सूर्य्याय, प्रजापतये स्वाहा इदं प्रजापतये, इति त्यागः, पत्नी पुत्रकामा[1] पूर्व्वाहुतिं जुहोति मन्त्रः ।

---

(१) पुत्रकाम्यात् ।

पुमांसौ मित्रावरुणौ पुमांसावश्विनावुभौ ।

पुमानिन्द्रश्च वायुश्च पुमान् संवर्त्ततां मयि ॥

पुनः स्वाहा द्वितीयां यजमान एव । इदं मित्रावरुणाभ्यामश्विभ्यामिन्द्राय वायवे, इदं प्रजापतये, समाचाराद्दचं वाचमित्यध्यायपाठेन शान्तिकरणम् ।

## अथ भस्मधारणञ्च होमान्ते।

कृत्वाग्निकार्य्यं यः कुर्य्याल्ललाटे तिलकं नृप।
सर्व्वपापविनिर्मुक्तः सुरलोके महीयते॥

तथा,—

सितेन भस्मना कार्य्यं ललाटे च त्रिपुण्ड्रकम्।

तथा,— दिनमेकं तु यो भस्म समन्त्रं धारयेन्नरः।
सोऽग्निष्टोमफलं देवी लभते नात्र संशयः॥
आयुष्कामो नरो राजन् भूतकामस्य वा पुनः।
नित्यं वै धारयेद्-भस्म मोक्षकामो च वा पुनः॥
त्रिकालमपि यो नित्यं यावज्जीवं तु धारयेत्।
भस्म मोक्षो भवेत्तस्य सत्यमेतन्मयोदितम्॥

तथा,—

सितेन भस्मना कुर्य्याल्ललाटे यः त्रिपुण्ड्रकम्।
तस्मै नारायणो देवः प्रदद्यात् परमं पदम्॥
त्रिपुण्ड्रं न मृदा कार्य्यं भस्मना नोर्द्ध्वपुण्ड्रकम्।
चन्दनेनोभयं कुर्य्यादेवमाह प्रजापतिः॥

ऊर्द्ध्वपुण्ड्रोपरि त्रिपुण्ड्रं कार्य्यम्,—

ऊर्द्ध्वपुण्ड्रं त्रिपुण्ड्रं वा कुर्य्यादुभयमेववा।
ऊर्द्ध्वपुण्ड्रे त्रिपुण्ड्रं स्यात्त्रिपुण्ड्रे नोर्द्ध्वपुण्ड्रकम्॥

तथा,— मध्याङ्गुलित्रयेणैव स्वदक्षिणकरस्य तु।
षडङ्गुलायतं पुण्ड्रं कुर्य्यात् सजलभस्मना॥

मध्यमानामिकाङ्गुष्ठैर्ललाटे भस्मना कृतः ।
स त्रिपुण्ड्रो भवेत् शस्तो महापातकनाशनः ॥
इति ललाटे तर्ज्जन्यङ्गुष्ठयोर्विकल्पः ।

यत्तु,—यतिः सार्व्वाङ्गिकं स्नानमापादतलमस्तकम् ।
गृहस्थः पुण्ड्राकारैः स्नानं कुर्य्यात्त्रिपुण्ड्रकैः ॥

इति, तद्भस्मस्नानविषयम् ।

तत्र,—
श्रौतं भस्म द्विजा मुख्यं स्मार्त्तं गौणं प्रकीर्त्तितम् ।
शूद्रहस्तस्थितं भस्म द्विजातिर्नैव धारयेत् ।
धारयेयुर्द्विजास्तिर्य्यक् त्रिपुण्ड्रं भस्मना सदा ॥

पारस्करः,—
भस्मना ललाटे ग्रीवायां अंसद्वये हृदि कश्यपस्य त्र्यायुषं,

इति तिलककरणम् ।

प्रतिपात्रं समाचारात्,
त्र्यायुषमिति मन्त्रेण द्विजैस्तिर्य्यक्त्रिपुण्ड्रकम् ।
धार्य्यं प्रोक्तं द्विजश्रेष्ठ धार्म्मिकैर्वेदपारगैः ॥
तेनैकत्र कृत्स्न एव मन्त्रः 'प्रयोक्तुमुचितो न खण्डशः ।

भविष्यपुराणे,—
उभे सन्ध्ये च यो विप्रो मौनमास्ते समाहितः ।
दिव्यवर्षसहस्रं तु ब्रह्मलोके महीयते ॥

---

(१) प्रयोक्तव्यः न खण्डशः ।

उदयात् प्राक्तनी सन्ध्या [1]घटिकाद्दयमुच्यते ।
सायंसन्ध्या त्रिघटिका अस्तादुपरि भास्वतः ॥

इति मौनादिविषयं, सन्ध्या मुहूर्त्तमात्रमिति प्रकरणात्
सन्ध्याकर्म्मपरम्[2] ।

(१) घटिकात्रयमुच्यते ।
(२) सन्ध्याकर्म्ममात्रपरम् ।

## अथ जपदेशाः ।

योगी याज्ञवल्क्यः,—

गृहेष्वेकगुणं जप्यं नद्यां तु त्रिगुणं स्मृतम् ।
गवां गोष्ठे दशगुणमग्न्यागारे दशाधिकम् ॥
सिद्धक्षेत्रे पुण्यतीर्थे देवतायाश्च सन्निधौ ।
सहस्रशतकोटीनामनन्तं विष्णुसन्निधौ ॥

पञ्चरात्रे,—

पुण्यक्षेत्रं नदीतीरं गुहापर्व्वतमस्तकम् ।
तीर्थप्रदेशः सिन्धोश्च संगमः पावनं वनम् ॥
उद्यानानि विविक्तानि विल्वमूलं तटं गिरेः ।
तुलसीकाननं गोष्ठं वृषशून्यः शिवालयः ॥
अश्वत्थामलकीमूलं गोशाला जलमध्यतः ।
देवतायतनं कूलं समुद्रस्य निजं गृहम् ॥
गुरूणां सन्निधानं च चित्तैकाग्र्यस्थलं तथा ।

आसनानि पञ्चरात्रे,—

सर्व्वसिद्ध्यै व्याघ्रचर्म्म मोक्षसिद्ध्यै मृगाजिनम् ।
वस्त्रासनं रोगहरं वेत्रजं श्रीविवर्द्धनम् ॥
कौशेयं पुष्टिदं प्रोक्तं काम्बलं दुःखमोचनम् ।
अभिचारे कृष्णवर्णं रक्तं वश्यादिकर्म्मणि ॥
शान्तिके धवलं प्रोक्तं चित्रकं सर्व्वकर्म्मसु ।
स्तम्भने गजचर्म्म स्यान्मारणे माहिषं तथा ॥

मेषचर्म्म तथोच्चाटे खड्गजं वश्यकर्म्मणि ।
विद्वेषे जाम्बुकं प्रोक्तं भवेद्गोचर्म्म शान्तिके ॥
वस्त्रासने च दारिद्र्यं दौर्भाग्यं दारुजासने ।
धरण्यां दुःखसम्भूतिः पाषाणे व्याधिसम्भवः ॥
तृणासने यशोहानिः पल्लवे चित्तविभ्रमः ।
इष्टकायामथाधिः स्यादेतत् साधारणे जपे ॥
कुशाजिनाम्बरैर्गाढ़ं चतुरस्रं समंततः ।
एकहस्तं द्विहस्तं वा चतुरङ्गुलमुन्नतम् ॥

तथा,

स्वस्तिकं पद्मकं वीरं सिद्धं चेति चतुष्टयम् ।
जपे प्रशस्तमित्युक्तमासनं मुनिसत्तमैः ॥
जान्वोरन्तरं सम्यक् कृत्वा पादतलेऽन्तरे ।
ऋजुकायः समासीनः स्वस्तिकं तदुदाहृतम् ॥
चरणाग्रे निधायोरुमूलयोरुपरि स्थितः ।
अम्भोजासनसंयोगो विज्ञेयः संयतेन्द्रियः ॥
एकपादमथैकस्मिन् विन्यस्योरुणि संस्थितः ।
इतरस्मिंस्तथा चोरौ वीरासनमुदाहृतम् ।
मेढ्रादुपरि निक्षिप्य सव्यं गुल्फं तथोपरि ।
गुल्फान्तरञ्च निक्षिप्य सिद्धासनमुदाहृतम् ॥

# अथ अक्षमाला।

योगी याज्ञवल्क्यः।

स्फटिकेन्द्राक्षरुद्राक्षैः पूतंजीवसमुद्भवैः।
अक्षमाला प्रकर्त्तव्या प्रशस्ताप्युत्तरोत्तरा।
कोट्यादिका भवेद्वृद्धिरक्षमाला जपादिषु॥
जपस्य क्रियमाणस्य तस्माच्छ्रेष्ठः परः परः।
स्फटिकापेक्षया इन्द्राक्षे कोटिगुणं फलम्।
रुद्राक्षे इन्द्राक्षादर्वुदगुणमित्यादिरूपेण।

तथा,—

अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिना।

शिवपुराणे,—

अङ्गुल्या जपसंख्यानमेकमेव गुणं स्मृतम्।
रेखयाष्टगुणं विद्यात्पूतंजीवैर्दशाधिकम्॥
शतं स्याच्छंखमालाभिः प्रवालैश्च सहस्रकम्।
स्फाटिकैर्दशसाहस्रं मौक्तिकैर्लक्षमुच्यते॥
पद्माक्षैर्दशलक्षन्तु सौवर्णे कोटिरुच्यते।
कुशग्रन्थ्या च रुद्राक्षैरनन्तगुणितं भवेत्।

अन्यत्र च, चतुर्वर्गाप्तये पद्माक्षमाला शत्रुनाशाय वा अणिमा-गुणप्राप्तये वा मोक्षाय च, सर्व्वकामाप्तये रुद्राक्षाणि मोक्षाय च, स्फाटिकी मौक्तिकी च माला राज्यदा सौभाग्यदा च, पूतंजीव-माला पुत्रदा च, कुशग्रन्थ्या पापक्षयो मोक्षश्च, अरिष्टरूपमाला शान्तिके।

स्वर्णरजतमाला सर्व्वकामदा, प्रवालमाला धनलाभाय। मुक्ताभिश्च श्रीः, (१)शंखैर्वा यशः, रत्नै र्विभूतिः अत्र प्रमाणवाक्यानि विस्तरभयान्न लिखितानि।

तथा,—

मेधां वीर्य्यं तथा तेजो लिप्सुभिस्ताम्रकेण तु।

अष्टाक्षरे विशेषः, कुशवर्न्धैर्विप्रः, पूतंजीवैर्व्वैश्यः, पद्माक्षैः सर्व्वे। नारसिंहे, कोटिर्भवेत्तु रुद्राक्षपद्माक्षैः।

वैष्णवे तुलसीमाला गजदन्तैर्गणेश्वरे।

रुद्राक्षैस्त्रिपुरायाः, सारस्वते पद्मगैः प्रवालैर्वा, गर्दभाश्वनराणां दन्तैराभिचारिके, नीलसारस्वते महाशंखैः, सर्व्वत्र रुद्राक्षादिभिर्मोक्षाय।

मातृकया मन्त्रसिद्धिः, अत्र च कोट्यादिका वृद्धिरिति याज्ञवल्कीयं गुणफलम्।

अविरुद्धस्वर्गपापक्षयादिफलानां वृद्धिमभिप्रेत्य, अत्र कामनाभेदेन व्यवस्थितानां न वृद्धिः, वृद्धेः सजातीयापेक्षत्वात्।

भविष्यपुराणे,—

सर्व्वासामक्षमालानां जपे यत्फलमुच्यते।

तत् फलं शतमादेयं जपेनाङ्गुलिपर्व्वभिः॥

एतत् सर्व्वं मङ्गलामन्त्रपरं तत्प्रकरणादित्याहुः, अभावे त्वक्षमालायाः कुशग्रन्थ्याथ पाणिनेत्यनुकल्पविधानात्।

---

(१) शङ्खैर्यशः।

अन्ताङ्गुलिजपादष्ठगुणोरेखाभिर्जप, इति पाणिजपो द्वेधा। रेखा पदं चात्र पर्व्वपरमेव।

अनामिकायामध्यादि मध्यादधःक्रमेण तु।

तर्ज्जन्या आदिपर्व्वान्तमक्षमाला प्रकीर्त्तितेति स्मृत्यन्तरात्।

रेखासु नैव सर्व्वासु न मध्यमाद्यपर्व्वणोरिति रेखानिषेधाच्च तेनाङ्गुलिभिरविशेषात्पञ्चभिर्गणनं पर्व्वभिर्व्वायथोक्तं, मध्यमाद्य पर्व्वद्वयं मेरुः।

तथा,—

अङ्गुलीर्न वियुञ्जीत किञ्चित्सङ्कोचयेत्तलमिति वचनादङ्गुलीनां निःसन्धितां संपाद्य पर्व्वगणना कार्य्या।

रुद्राक्षे विशेषः,

एकवक्त्रैस्त्रिवक्त्रैश्च चतुर्व्वक्त्रैश्च पञ्चभिः।

षड्वक्त्रैर्व्वाथ कर्त्तव्यं तस्मान्मिश्रैस्तु वर्ज्जयेत्॥

अनुलोमविलोमस्थैर्व्विन्दुयुक्ताष्टकाक्षरैः।

सविन्दुकैः साष्टवर्गैः कृतया वर्णमालया॥

प्रत्येकं वर्णयुक्मन्त्राः कृताः स्युः क्षिप्रसिद्धिदाः।

अक्षमालाग्रथनं, कृतनित्यक्रियः, यथोक्तान्यक्षाणि कीटादिदोष-रहितानि नातिस्थूलकृशानि रुद्राक्षाणि कपिलानि वृत्तानि दृढ़ानि कर्कटसंयुतानि, अष्टोत्तरशतान्युत्तममानार्थं शतार्द्धमितानि मध्यमे तदर्द्धमितानि कनीयसे, धर्म्मार्थं त्रिंशत्।

मोक्षार्थं पञ्चविंशतिः, अभिचारे षोड़श।

पुष्ट्यर्थे सप्तविंशति, चतुःपञ्चाशता काम्यकर्म्मणि।

अष्टोत्तरशतैः सर्व्वसिद्धिः। क्वचिच्च,

शतं वाथ तदर्द्धं वा सर्व्वसाधारणे जपे।

एतानि संपाद्य, सूत्रञ्च,

सर्व्वासामक्षमालानां सूत्रं कार्पासिकं स्मृतम्।

शुक्लं कृष्णं तथा रक्तं शान्तिवश्याभिचारके॥

पद्मसूत्रं पट्टसूत्रं चौमं कार्पासिकं तु वा।

द्विजस्त्रीनिर्म्मितं सूत्रं त्रिगुणं त्रिगुणीकृतम्॥

इति सूत्रं संपाद्य पञ्चगव्यैः सूत्रं अक्षांश्च प्रक्षाल्य नवभिः अश्वत्थ-पत्रैर्निर्म्मिते पद्माकारे पात्रे स्थापयेत् प्रणवं शक्तिबीजं मातृकां सूत्रे मणिषु च विन्यसेत्।

मूलमन्त्रेण सूत्रमणिषु निजेष्टदेवस्य पूजनम्।

तेनैव तिलसर्पिषा होमः। होमाशक्तौ द्विगुणो जपः। ततो ग्रथनम्।

मुखे मुखं तु संयोज्य पुच्छे पुच्छं तु योजयेत्।

एकैकमणिमध्ये तु ब्रह्मग्रन्थिं प्रकल्पयेत्॥

इत्येवंरूपेण,

गोपुच्छसदृशी कार्य्या यद्वा सर्पाकृतिः शुभा।

तत्सजातीयमेकं तु मेरुत्वेन प्रकल्पयेत्॥

कालोत्तरे तु,

मेरुहीनाक्षमाला वा कर्त्तव्या च प्रयत्नतः।

भवेत् शतगुणं पुण्यं न दोषो मेरुलङ्घने॥

आग्नेयेऽपि,—समेरुं मेरुहीनं वा जप्यमन्त्रं तु कारयेत्।

## अथाक्षमालाप्रतिष्ठा ।

त्रिरात्रं पञ्चरात्रं वा पञ्चगव्येऽधिवासनम् ।

शुभदिने पञ्चगव्येन प्रोक्ष्य गन्धतोयेन प्रोक्षणम् ।

शुभपात्रेऽवस्थाप्य, कवचेनाऽवगुण्ठ्य धेनुमुद्रयाऽमृतीकृत्याऽस्त्रेण रक्षणम् ।

मूलमन्त्रस्याक्षमालायां न्यासः, तेनैव तत्रेष्टदेवपूजनं तिल-सर्पिर्भ्यां होमः, होमाशक्तौ जपः,—

तत्त्वसागरसंहितायां,—

प्रतिष्ठामक्षसूत्रेषु रक्षाविद्यासु च शृणु ।

आलिख्य चतुरस्रं तु रजसा मण्डलं भुवि ।

पद्ममध्ये तु चालिख्य पूज्यास्योपरि विन्यसेत् ॥

सौवर्णं रजतं वान्यद्विपुलं पात्रमुत्तमम् ।

अन्यत्ताम्रादि,—

प्रातस्तु यत्र तत्त्वं तेन च सर्व्वा क्रिया भवेत् ।

यत्र तत्तत्त्वं या देवता तन्मन्त्रेण सर्व्ववक्ष्यमाणक्रिया ।

अस्त्रेण पूरयेत् पात्रं शालितण्डुलकैः शुभैः ।

अस्योपरि लिखेत् पद्ममष्टपत्रं सकर्णिकम् ॥

अश्वत्थस्य तु पत्राणि पद्मपत्रेषु विन्यसेत् ।

लिखितपद्माष्टपत्रेऽप्यष्टावश्वत्थपत्राणीत्यर्थः ।

तत्पुनर्गन्धपुष्पाद्यैः पूज्य तन्मध्यतो न्यसेत् ।

पञ्चरत्नानि हैमं वा अष्टपत्रं[1] ततो न्यसेत्।
अभ्युक्ष्य मूलमन्त्रेण पुनः शुद्धोदकेन च॥
संपूज्य मूलमन्त्रेण तत्त्वन्यासन्तु कारयेत्।
प्रतिग्रन्थि [1]प्रतिमणीन् त्रिःकृत्वो वैकशोऽपि वा॥
स्पृशन् मन्त्रजपं कुर्य्यात् तत्त्वन्यासोऽयमीरितः।
पुनः पञ्चोपचारेण पूज्यमुद्रां प्रदर्श्य च॥
अक्षमालां समादद्याद्धर्म्मकामार्थमोक्षदाम्।

मुद्राश्च तत्तद्देवतामुद्राः। अत्राप्यधिवासप्रवृत्तिः,

तद्विधिः, त्रिदिनं पञ्चदिनं वा पञ्चगव्ये ऽधिवास्य शुभदिने त्रिः स्वस्ति वाच्य[2] संकल्पः।

उपलिप्ते चतुरस्रमध्ये यथोक्तं पद्मं लिखित्वा पद्माय नम-इति पूजयित्वा तदुपरि सौवर्णं रजतं तदभावे ताम्रादिपात्रं शुभैः शालितण्डुलैस्तेणापूर्य्य शालितण्डुलोपरि सकर्णिकमष्टदलपद्मं लिखित्वा

तत्पद्मपत्रेष्वष्टावश्वत्थपत्राणि विन्यस्य तत्पद्मं पद्माय नम इति गन्धपुष्पाद्यैः पञ्चभिः संपूज्य पञ्चरत्नं सुवर्णं वा विन्यस्य तदुपर्य्यक्ष-सूत्रं विन्यस्य[3] शुद्धोदकेन च क्रमात्प्रोक्ष्य तत्र मूलमन्त्रेणेष्टदेवं संपूज्य प्रतिग्रन्थि प्रत्यक्षञ्च स्पृशन् सकृत्त्रिर्व्वा मूलमन्त्रं जप्त्वा तत्र पुनरिष्टदेवं पञ्चोपचारैः संपूज्य तन्मुद्राः प्रदर्शयेत्, ततोऽक्ष-

(१) प्रतिमणि।
(२) स्वस्तिवाच्यसंकल्पः।
(३) पञ्चगव्येन शुद्धोदके न च क्रमात्प्रोक्ष्य।

मालां गुरुहस्ते दत्त्वा गुरुदत्तां गृह्णीयात्, शान्तिकरणमच्छिद्रावधारणञ्च।

शैवे तु विशेषः,—

क्षालयेत् पञ्चगव्येन सद्योजातेन सज्जलैः।
चन्दनागुरुगन्धाद्यैर्वामदेवेन घर्षयेत्॥
धूपयेत्तामघोरेण लेपयेत् पुरुषेण तु।
मन्त्रयेत् पञ्चमेनैव प्रत्येकं तु शतं शतम्॥
मेरुञ्च पञ्चमेनैव मन्त्रेणैव च मन्त्रयेत्। इति।

अत्र,—जीर्णे सूत्रे पुनः सूत्रं ग्रन्थित्वा च शतं जपेत्।
नवे सूत्रे तथा जीर्णे सहस्रं जप उच्यते॥
जपान्यकाले तां मालां पूजयित्वा तु गोपयेत्।
अक्षमालाञ्च मुद्राञ्च गुरोरपि न दर्शयेत्॥
प्रमादात् पतिते हस्तात् शतमष्टोत्तरं जपेत्।
तथा करभ्रंशे गन्धवारिणा क्षालनम्।
गायत्रीं शतं जप्त्वा नमस्कृत्य स्थापनम्।
अशुचिस्पर्शे तीर्थोदकेन क्षालनं, नोच्छिष्टेन स्पर्शः।
स्त्रीणां हस्ते न कारयेत्, शूद्रस्पर्शे पुनः संस्कारः।
आकाशे स्थापनं कुर्य्याद्यदिच्छेत्परमां गतिम्।
अङ्गुष्ठेन जपेज्जाप्यमन्यैरङ्गुलिभिः सह॥
अन्याङ्गुलयः तर्ज्जनीवर्जिता इति प्रपञ्चसारात्।

अतएव,—

तर्ज्जन्यङ्गुष्ठयोगेन जपं कुर्य्यात्तु वाचिकम्।

वाचिकजपस्य द्वेषोच्चाटनादिगतस्य तर्ज्जनीयोगोऽङ्गम्। क्वचिच्च,

तर्ज्जन्यङ्गुष्ठयोगेन विद्वेषोच्चाटने जपेत्। इति स्फुटं वाक्यम्।

तथा,—

अङ्गुष्ठ्यामक्षमालां चालयेन्मध्यमाग्रतः।

तर्ज्जन्या न स्पृशेत्सोऽयं मुक्तिदो गणनाक्रमः॥

भुक्तौ मुक्तौ तथाकृष्टौ मध्यमायां जपेत् सुधीः।

अनामिकाङ्गुष्ठयोगात् स्तम्भने, कनिष्ठाङ्गुष्ठयोगान्मारणे।

तथा,—

अनामाङ्गुष्ठमाक्रम्य जप्यं कुर्य्यात्तु मानसम्।

मध्यमाङ्गुष्ठमाक्रम्य जपं कुर्य्यादुपांशुकम्॥

## अथ जपसाधारणधर्म्माः ।

नरसिंहपुराणे,—

य [1]उच्चनीचस्वरितैः स्पष्टशब्दवदक्षरैः ।
मन्त्रमुच्चारयेद्व्यक्तं जपयज्ञः स वाचिकः ॥
शनैरुच्चारयेन्मन्त्रमीषदोष्ठौ प्रचालयेत् ।
किंचिच्छब्दं स्वयं विद्यादुपांशुः स जपः स्मृतः ॥
धिया यदक्षरश्रेण्या वर्णाद्वर्णं पदात्पदम् ।
शब्दार्थचिन्तनाभ्यासः स उक्तो मानसो जपः ॥
त्रयाणां जपयज्ञानां श्रेयान्स्यादुत्तरोत्तरः ।

शब्दचिन्तनं जपः, अर्थचिन्तनं तदङ्गम् ।

मानसं द्वैधमुक्तं पुरश्चरणचन्द्रिकायाम् ।
जिह्वया चिन्तयेन्मन्त्रं मनसा केवलेन वा ।

योगी याज्ञवल्क्यः,—

उपांशुजपयुक्तस्य संख्या शतगुणं भवेत् ।
सहस्रो मानसः प्रोक्तो यस्माद् ध्यानसमो हि सः ॥

अन्यत्र,— उच्चैर्जपाद्विशिष्टः स्यादुपांशुर्दशभिर्गुणैः ।
जिह्वाजपः शतगुणः साहस्रो मानसः स्मृतः ॥

एवञ्च सति,—मानसः सिद्धिकामैस्तु पुष्टिकामैरुपांशुकः ।
वाचिको मारणे चैव प्रशस्तो जप ईरितः ॥
इति प्रशस्तपरं[2] न व्यवस्थापरम् ।

---

(१) यदुच्च । (२) प्राशस्त्यपरम ।

योगी याज्ञवल्क्यः,—

न चंक्रमन्न विहसन् न पार्श्वमवलोकयन् ।
[1]नापाश्रितो न जल्पंश्च न प्रावृतशिरास्तथा ॥
न पदा पदमाक्रम्य न चैव हि तथा करौ ।
नचासमाहितमना न च संश्रावयन् जपेत् ॥
तिष्ठंश्चेद्वीक्षमाणोऽर्कं जपं कुर्य्यात् समाहितः ।
अन्यथा प्राङ्मुखः कुर्य्याद्वक्ष्यमाणक्रमेण तु ॥
प्राक्कूलेषु कुशेष्वेवमासीनः स्वासने शुभे ॥
ध्यायेत्तु मनसा मन्त्रं जिह्वौष्ठौ न तु चालयेत् ।
न कम्पयेच्छिरोग्रीवं दन्तान्नैव प्रकाशयेत् ॥

तथा,—

स्त्रीशूद्रपतितांश्चैव रासभं च रजस्वलाम् ।
जपकाले न भाषेत व्रतहोमादिकेषु च ॥
तुष्णीमासीत च जपंश्चाण्डालपतितादिकान् ।
दृष्ट्वा तान् वार्य्युपस्पृश्याभाष्य स्नात्वा पुनर्जपेत् ॥
आचम्य प्रयतो नित्यं जपेदशुचिदर्शने ।
सौरान् मन्त्रान् यथोत्साहं पावमानीश्च शक्तितः ॥
यदि वाग्यमलोपः स्यात् व्रतादिषु कथञ्चन ।
व्याहरेद्वैष्णवं मन्त्रं स्मरेद्वा विष्णुमव्ययम् ॥

(१) न चाश्रितो ।

कौर्मे,—

गुह्यका राक्षसाः सिद्धा हरन्ति प्रसभं भयात् ।
एकान्तेषु शुभे देशे तस्माज्जप्यं समाचरेत् ॥

अङ्गिराः, असं   तु यज्जप्तं तत्सर्व्वं निष्फलं भवेत् ।

इति—जपसाधारणधर्म्माः ।

---

## ऋष्यादिस्मरणविचारः ।

छन्दोऽनुक्रमण्याम्,—छन्दो दैवतमार्षञ्च विज्ञाय यत्किञ्चिज्जप-होमादिकं करोति, तस्य फलमश्नुते, तथा कर्म्मारम्भे मन्त्राणां देवता वेदितव्या ।

योगी याज्ञवल्क्यः,—

आर्षं छन्दश्च दैवत्यं विनियोगस्तथैव च ।
वेदितव्यं प्रयत्नेन ब्राह्मणेन विशेषतः ॥
अविदित्वा तु यः कुर्य्याद्यजनाध्यापनं जपम् ।
होममन्तर्जलादीनि तस्य चाल्पफलं भवेत् ॥
आपद्यते स्थाणुगतं स्वयं चापि प्रमीयते ।
यातयामानि छन्दांसि भवन्त्यल्पफलानि च ॥

[1]तेन छन्दोदैवतार्षविनियोगमात्रज्ञाने सम्पूर्णफलं न तु फला-नुत्पत्तिः, स्थाणुगतेरापत्तिः, प्रमीतत्वञ्चार्थवादमात्रं,

ऋषिर्गुरुत्वाच्छिरसैव धार्य्यं छन्दोऽक्षरत्वाद्रसनागतं स्यात् ।

धिया वमन्तव्यतया सदैव हृदि प्रविष्टामनुदेवता[2] नु । इति प्रपञ्चसारवाक्यस्य प्रस्थानान्तरत्वेऽपि समाचाराहृष्यादिस्मरणकाले शिरसि मुखे हृदि च हस्तन्यासः ।

---

(१) तेन छन्दोदैवतार्षविनियोगमात्रज्ञाने संपूर्णफलं तदज्ञानेऽल्पफलं, न तु फलानुत्पत्तिः ।

(२) मन्त्रदेवता तु ।

यत्तु तत्रैव,—

यस्तु जानाति तत्त्वेन आर्षं छन्दश्च दैवतम्।
विनियोगं ब्राह्मणं च मन्त्रार्थज्ञानमेव च ॥

इति ब्राह्मणमन्त्रार्थज्ञानयोरपि ज्ञानमुपयोगित्वेनोक्तम्।

तत्, श्रियं च लभते सोऽत्र धर्म्ममायुश्च विन्दति।
दिव्यं वर्षसहस्रं तु स्वस्थाने ऋषिभिः सह ॥
संतिष्ठते तु तैः सार्द्धं तत्तुल्यश्चैव जायते।

इति फलविशेषार्थमेव, यद्यपि ऋष्यादिज्ञानम्
क्रियारूपफलसाधनाय नाश्रयमपेक्षते।

तदुक्तं,—

आत्मना ह्यक्रियारूपैर्गुणैराश्रियते क्रिया। इति।

तथा, एवं पञ्चविधं योगं जपकाले[1] ह्यनुस्मरेत्।
होमे चान्तर्जले योगी स्वाध्याये याजने तथा ॥ इति।

फलार्थस्यापि ऋष्यादिपञ्चयोगज्ञानस्य जप्यादिकालएव कालः,—

तद्यथा, यो वृष्टिकामो योऽन्नाद्यकामो यः स्वर्गकामः।

स सौरभेण स्तु[2]विदितेति, क्रियारूपस्यापि सौरभस्य फलसाधनायाश्रयानपेक्षणेऽपि वाक्योपात्तसोमाङ्गस्तुतिकालीनस्य फलसाधनत्वम्।

तत्र,— येन यदृषिणा दृष्टसिद्धिः प्राप्ता च येन वै।
मन्त्रेण तस्यतत्प्रोक्तमृषेर्भावस्तदार्षकम् ॥

---

(१) जप्यकाले। (२) स्तुवितेति।

छन्दो गायत्र्याद्यक्षरविन्यासः, यं मन्त्रः प्राधान्येन वदति सा देवता।

विनियोगस्तु,—

पुराकल्पे समुत्पन्ना मन्त्राः कर्म्मार्थ एव च।

अनेनेदन्तु कर्त्तव्यं विनियोगः स उच्यते॥

इति वचनात्, प्रस्तुते श्रौते स्मार्त्ते वा कर्म्मणि विनियोगः, न च पुराकल्प इति वचनात्, श्रौतविनियोगस्यैव स्मार्त्तेऽपि स्मरणं, स्मार्त्तविनियोगस्यापि पुराकल्पे समुत्पन्नत्वात्, अनादित्वाविशेषात्। यत्तु तत्रैव वचनम्,—

अश्वमेधाऽवभृथे विनियोगस्य कथ्यते, इति तदुदाहरणमात्र-प्रदर्शनपरं, नहि दृष्टे सत्यदृष्टकल्पना, इति केचित्। बह्वृचास्तु सन्ध्योपक्रमे, तैत्तिरीयश्रुतिगतगायत्र्यादिऋष्यादिकथने उपनयने विनियोग इति वचनाच्छ्रौतविनियोग एव विनियोग इत्याहुः।

निरुक्तं यत्तु मन्त्रस्य समुत्पत्तिः प्रयोजनम्।

अधिष्ठानं स्तुति श्चैव ब्राह्मणञ्च विधीयते॥

निरुक्तं निर्व्वचनं, अधिष्ठानं, आश्रयः, एतत्प्रत्येकयुक्तं वाक्यं ब्राह्मणं, एतज्ज्ञानमदृष्टार्थं मन्त्रार्थज्ञानं लिङ्गादेव कर्म्माङ्गं, योगियाज्ञवल्क्यवचनस्यान्यपरत्वेऽपि।

अविदित्वा तु मन्त्रार्थं यत्किञ्चित् कर्म्म नाचरेत्, इति स्मृत्यन्तरात्, न च श्रौतकर्म्मस्वेव मन्त्राधिकरणोक्तनीत्या मन्त्रार्थ-ज्ञानोपयोगो न स्मार्त्तकर्म्मस्वपि, यथाकथञ्चित्कर्म्मस्मारकत्वं सर्व्वत्र कल्पनीयं, शन्नोदेवीरित्यस्य शनिपूजायां विनियोगे

शनेरस्मारकत्वेऽपि पूजाया फलशान्तिप्रकाशकत्वेन कर्म्मस्मारकत्व-सम्भवात् ।

तेन मन्त्रार्थाज्ञाने वैगुण्यं स्यादेव ।

यच्च, याज्ञिकाः पठन्ति,

श्यातें[1] लूने तथा छिन्ने सानाय्ये मार्त्तिके तथा ।
पश्चान्मन्त्राः प्रयोक्तव्या मन्त्रा यज्ञार्थसाधकाः ॥ इति ।

नैतावता मन्त्राणामदृष्टार्थता किन्तु दृष्टार्थानां क्रियाणां खनना-दीनां कार्य्यस्य पूर्व्वनिर्वृत्तत्वेऽपि कियदप्यंशमसिद्धं कर्त्तुं इदानीं क्रिया तत्र मन्त्रस्य दृष्टार्थतैव ।

क्रियायाश्च सिद्धेऽपि कार्य्ये नियमाददृष्टसिद्ध्यर्थं पुनरनुष्ठानमिति ।

अथ प्रथमभागकृत्यं, तत्र सूर्य्याय दध्यक्षताञ्जलिदानादि लिखितं तत्काम्यमिति नित्यं नाचरन्ति ।

विष्णुपुराणे,—

स्वाचान्तश्च ततः कुर्य्याद्गुरुमङ्गलवीक्षणम् ।
आदर्शाञ्जनमाङ्गल्यदूर्व्वाद्यालम्भनानि च ॥
गुरवः पितृमातृविद्याप्रदज्येष्ठभ्रातरश्च ।

मङ्गलान्याह नारदः,—

लोकेऽस्मिन् मङ्गलान्यष्टौ ब्राह्मणो गौर्हुताशनः ।
हिरण्यं सर्पिरादित्य आपो राजा तथाष्टमः ॥
एतानि सततं पश्येन्नमस्येदर्च्चयेच्च यः ।
प्रदक्षिणं च कुर्वीत तथास्यायुर्न हीयते ॥

(१) स्याते ।

अञ्जनं सौवीराञ्जनादि माङ्गल्यानि दूर्व्वादीनि,

दूर्वां दधि सर्पिरथोदकुम्भं धेनुं सवत्सां वृषभं सुवर्णम्।

मृद्गोमयं स्वस्तिकमक्षतानि लाजा मधु ब्राह्मणकन्यकाश्च।

श्वेतानि पुष्पाणि तथाशनिं च हुताशनं चन्दनमर्कविम्बम्॥

अश्वत्थवृक्षं च समालभेत, आदित्यस्यालम्भनासंभवाद्यथासंभव-मिति बोध्यम्।

ब्रह्माण्डे,—

दर्पणे वाथवा पश्येल्लक्ष्मीवांस्तु भवेन्नरः।

तथा तत्र ब्राह्मे च, स्वमात्मानं घृते पश्येद्यदी(१)च्छेच्चिरजीवितम्।

एतत्सर्व्वाधिकारिकं काम्यमपि नृपैरवश्यं कार्य्यमित्यस्मत्पिता-महक्कणवृहस्पतिखण्डितमहापात्रैर्नीतिरत्नाकरे लिखितम्।

ब्रह्माण्डे,—

अग्निश्चित्कपिला साध्वी राजा भिक्षुर्महोदधिः।

दृष्टमात्राः पुनन्त्येते तस्मात्पश्येत्तु नित्यशः॥

तथा,—

निजायुर्वर्द्धनायैव तिलगोरोचना नृपः।

अखण्डाक्षतदूर्वाष्टौ गृह्णीयाच्छिरसि ध्रुवम्॥

मनुः,—

मङ्गलाचारयुक्तानां नित्यं च प्रयतात्मनाम्।

जपतां जुह्वतां चैव विनिपातो न विद्यते॥

---

(१) य इच्छेत्।

येषां स्तोत्राणां त्रिसन्ध्यं सन्ध्यात्रये वा प्रातर्वा सूर्य्योदये वा पाठः, तेषां प्रथमभाग एव पठनम्।

शारदातिलके,—

त्रिसहस्राधिका मन्त्राः स्तवरूपाः शतधा स्मृताः।
ज्ञातव्याः स्तोत्ररूपास्ते मन्त्रा एते यथा स्थिताः॥

इति त्रिसहस्राधिकाक्षराणां स्तोत्ररूपत्वमुक्तम्। इति, स्तोत्राणामपि यद्यपि मन्त्रत्वोक्तेः पुरश्चरणापेक्षास्ति तथापि "त्रिसहस्रमितो मन्त्रः सकृज्जप्तो न सिध्यती"ति सकृज्जपमात्रमेव पुरश्चरणं, "एकदन्तं महाकायमि"त्यादि गणेशनामसहस्रकाणां येषां कालो नोक्तस्तेषां त्रिसहस्राक्षरत्वाभावेन स्तोत्रपरिभाषा-भावादुक्तनियमाभावात् पूर्व्वाह्न एव पाठः।

एवं, "नमस्कृत्य महादेवं स्तोष्येऽहन्तं विनायकमि"त्यादीक्षा-कृतविनायकस्तुतिः।

"सूर्य्योदये यः सुसमाहितः पठेत् सुपुत्रलाभं धनसञ्चयानपी"-त्युक्तेः, "सूर्य्योऽर्यमा भगस्त्वष्टा" इत्यादि सूर्य्यनामाष्टशतस्य सूर्य्यो-दये पाठः।

"विकर्त्तनो विवस्वांश्चेत्या"दिशाम्बपुराणीयस्य सूर्य्यस्तवराजस्य सन्ध्यात्रयकालः स्फुट एव।

प्रथमं च महादेवमित्यादि स्कान्दपुराणीयशिवनामसहस्रकस्य कालः स्फुटः, अत्र नामविशेषणत्वेन प्रथमान्तानामेव नपुंस-कलिङ्गत्वम्।

तेन साकाङ्क्षत्वाभावेन च नमामीत्यध्याहारो न कार्य्यः,

अच्युतं[1] केशवं विष्णुमित्यादिनामाष्टके ब्रह्मपुराणीये स्फुट एव काल:, अत्रापि पूर्व्ववन्नपुंसकलिङ्गत्वम्।

हरिमिति छान्दसोऽनुस्वारः।

एवमन्यान्यपि वैष्णवशैवस्तोत्राणि पठनीयानि।

शिष्टाः,—

गीतानामसहस्रं च स्तवराजो ह्यनुस्मृतिः।
गजेन्द्रमोक्षणं चैव ज्ञाणस्यातीव दुर्लभम्॥

अन्यत्र,—

छित्वा भित्त्वा जगत्सर्व्वमुषित्वा च चराचरम्।
पापैर्नैर्लिप्यते नैव गीताध्यायी कथञ्चन॥
गीता सुगीता कर्त्तव्या किमन्यैः शास्त्रविस्तरैः।
गीताध्यायं पठेद्यस्तु श्लोकं श्लोकार्द्धमेव वा॥
भवपाशविनिर्मुक्तो याति विष्णोः परं पदम्।
आब्रह्मस्तम्भपर्य्यन्तं जगत्तृप्तिं करोति यः॥
विश्वरूपशताध्यायं विभूतिं यः पठेन्नरः।
विभूतिर्व्विश्वरूपश्च ऊर्द्धमूलं तथैव च॥
हृदये यस्य वर्त्तन्ते तस्य सन्निहितो हरिः।
स्तोत्राणां परमं स्तोत्रं विष्णोर्नामसहस्रकम्॥
सहस्रनामतुल्यं हि पावनं नैव दृश्यते।
अष्टादशपुराणानां सारमेतद्धनञ्जय॥

---

(१) अजितम्।

मयोद्धृत्य समाख्यातमेतन्नामसहस्रकम् ।
न शक्नोति यदा नित्यं पठितुं स्तवपञ्चकम् ॥
तदा नामसहस्रन्तु पठनीयं कलौ सदा ।

एवं,— भक्तिमान् यः सदोत्थायेति फलश्रुतेः

प्रातरुत्थाय नित्यं पठनीयम्,

विष्णोर्नामसहस्राख्यं पुराणेषु प्रतिष्ठितम् ।
यो नरः पठते नित्यं त्रिकालं केशवालये ॥
शिवालये पठेद्वापि तुलसीवनसन्निधौ ।
नरो मुक्तिमवाप्नोति प्रसादाच्चक्रपाणिनः ॥

श्राद्धमाङ्गल्ययात्रोत्सवादिषु ग्रहपीड़ादिषु च एतत्पाठस्यावश्यकत्वं, काम्यत्वञ्च बहुपुराणेषु एतत्फलश्रुतौ च सिद्धमिति विस्तरभया-द्वाक्यानि न लिख्यन्ते ।

यत्तु केचित्,—

नमो भगवते वासुदेवाय सर्व्वलोकगुरवे इत्यादि पठन्ति, तद्वचनानां महाभारतीयत्वाभावान्नैव पठनमिति बहवः । तथाच, हरिवंशोक्त-आर्य्यास्तवं प्रवक्ष्यामीत्यादि आर्य्यास्तवोऽपि पठनीयः स्तवराजश्च शान्तिपर्व्वराजधर्म्मे, आरिराधयिषुर्विष्णुमित्यादि भीष्मोक्तिर्न्नेयं, अव्यक्तं शाश्वतं विष्णुमित्याद्यनुस्मृतिः गजेन्द्रमोक्षणञ्च विष्णुधर्म्मे, ॐ नमो मूलप्रकृतये इत्यादिना नारदीयपञ्चरात्रोक्तं पूर्व्वस्यां दिशि चाग्नये इत्यादि नरसिंहकवचमपि पठनीयं, ये त्वामार्य्येति दुर्गेति इत्यादि विष्णुपुराणीयार्य्यास्तवस्य द्वौ कालौ स्फुटौ ।

तथाहि महाभारते भगवद्वचनम् ।

श्रद्धावाननुसूयश्च शृणुयादपि यो नरः।

सोऽपि मुक्तः शुभान् लोकान् प्राप्नुयादित्युक्तेर्मोक्षार्थिनः

शुद्धिद्वारा मुक्तिफलम्।

शुभलोकार्थिनः शुभलोकप्राप्तिः,

सोऽपीत्यपिशब्दाद्योऽधीते तस्य मोक्षादिकं सिद्धमेव, महाभारतीयमिदं स्तोत्रं विश्वं विष्णुरित्यादि सर्व्वप्रहरणायुध इत्यन्तम्।

तत्र वैशम्पायन उवाच,

श्रुत्वेत्यादि न ते यान्ति पराभवमित्यन्तमवश्यं पठनीयम्।

मार्कण्डेयपुराणे,—

ॐ सूर्य्यतनय इत्यारभ्य सावर्णिर्भविता मनुरित्यन्तस्य प्रत्यहं पाठः, मम सन्निधिकारकमिति मुक्तिफलजनकत्वात्।

अस्य स्तवस्य यत्कामनाविशेषेषु शान्त्यादिषु च पठनं, तदेतत् स्तोत्रे कल्पादिषु च सिद्धमेव, अत्रावेष्टिन्यायेन एकदेशस्यापि फलसम्बन्धः।

जन्मनां प्रादुर्भावानां कीर्त्तनं तत्प्रतिपादको ग्रन्थः।

श्रुतं पापं हरति आरोग्यञ्च प्रयच्छति।

युद्धचरितश्रवणं शत्रुभयं नाशयति, स्तुतयः श्रुताः शुभमतिं प्रयच्छति। प्रादुर्भावश्रवणं पापानि नाशयति। एतद्विषये विस्तरस्तु अस्मत्पितामहकृष्णानन्दविद्यावागीशकृते नीतिरत्नाकरे द्रष्टव्यः, यद्यप्यत्र प्रातःकालादिर्नावधार्य्यते तथापि देवकार्य्यस्य सर्व्वस्य पूर्व्वाह्णः परिकीर्त्तित इति नरसिंहपुराणात् पूर्व्वाह्णे पाठो न्याय्यः।

मतं स्तोत्रेषु पूजितमिति पञ्चरात्रवचनान्नक्तंपाठेऽपि नित्य-

सिद्धिरविरुद्धा, काम्यं तु पूर्व्वोक्त एव, अत्र केचित् येषां प्रातिस्विककालिकविशेषो नास्ति तत्परमेतद्वचनमिति तन्नसम्यक्, पूर्व्वोक्ते कदाचिदपठने सर्व्वस्तोत्रपाठसाधारण्येन नक्तकालस्य[1] प्राप्तस्योक्तेः,—

विष्णुपुराणीयनमस्ये सर्व्वभूतानां इत्यादिलक्ष्मीस्तवोऽपि पठनीयः।

पठ्यते येषु चैवैष गृहेषु श्रीस्तवो मुने।

अलक्ष्मीः कलहाधारा न तेष्वास्ते कदाचन॥ इति फलाभिधानात्,—

न विषं विषमित्याहुः ब्रह्मस्वं विषमुच्यते।

विषमेकाकिनं हन्ति ब्रह्मस्वं पुत्रपौत्रिकम्॥ इति

तथा,—व्याधितस्य कदर्य्यस्य ऋणग्रस्तस्य सर्व्वदा।

स्तोजितस्य च मूर्खस्य मरणान्तं हि सूतकम्॥ इति।

तथा,—ऋणानां चानपक्रिया इति च प्रायश्च ऋणापकरणग्रहस्य कर्म्मानधिकारस्मरणात् ऋणशोधनार्थं मङ्गलस्तोत्रादीनि पठनीयानि, एवं फलमपेक्ष्य अन्यान्यपि स्तोत्राणि पठितव्यानि, इति स्तोत्रप्रकरणम्।

अथ देवगृहसंमार्ज्जनादिदेवकार्य्याणि,

कल्यमेव समुत्थाय कुर्य्यात्त्वरीं यथोदितां इति वराहपुराणवचनात्तत्र कल्यप्रभृतिकालः, एवं कृते तु सन्ध्यादिकर्म्म[2] समाचरेत्, इति, यत् देवकवाटोद्घाटनादिदेवकार्य्यानन्तरं सन्ध्योक्ता, तद्गृहीत-

(१) नक्तकालस्याप्राप्तस्योक्तेः। (२) कर्म्मशेषम्।

भागवतदीक्षाणां, आर्त्तानां सन्ध्याया अधिकारसम्पादकत्वात् तत्सन्ध्ययोक्तत्तरमेव।

तत्र यमः,—देवमाल्यापनयनं देवागारसमूहनम्।

स्नापनं सर्व्वदेवानां [1]गोदानस्य समं स्मृतम्॥

तथाच कवाटोद्घाटनदीपज्वालनदन्तधावनमुखप्रक्षालनमाल्यदान-घृततैलाभ्यञ्जनभूमीलेपनोद्दर्त्तनस्नान-गन्धचन्दनागुरुकर्पूर-कुङ्कुम-तालवृन्तमयूरव्यजनपुष्पवस्त्रालङ्कारदानानि सर्व्वदेवानां कार्य्याणि।

विस्तरस्तु पश्चादुच्यते,—

प्रातः स्नात्वा शुचिर्भूत्वा कृतसन्ध्याजपस्ततः।
यथोक्तन्यस्तमन्त्रः सन्नष्टोत्तरसहस्रकम्॥
स प्राणायामकं कुर्य्यात्तदर्थैकाग्रमानसः।
एवमेव तथा सायं नित्यमेष विधिः स्मृतः॥

नित्यजपेन सर्व्वपापक्षयः सर्व्वकामावाप्तिश्च,—

प्राणायामश्च,

रेचनं दक्षिणेनोक्तं पूरणं वामतश्चरेत्।
जपारम्भे विधिर्ज्ञेयो विपरीतस्तु संस्तुतौ॥

एवं प्रातः प्रणवजपः कार्य्यः, तत्राच, प्रणवमन्त्रस्य, प्रजापतिः ऋषिः, गायत्री छन्दः, परमात्मा देवता, प्रणवजपे विनियोगः, भूः अङ्गुष्ठाभ्यां नमः, भुवः तर्ज्जनीभ्यां स्वाहा, स्वः मध्यमाभ्यां वषट्, महः अनामिकाभ्यां हुं, जनः कनिष्ठाभ्यां वौषट्, तपः अस्त्राय फट्, सत्यङ्गन्यासः, भूः हृदयाय नमः, भुवः शिरसे स्वाहा, स्वः शिखायै

(१) गोप्रदानसमम्।

वषट्, महः कवचाय हुं, जनः नेत्राभ्यां वौषट्, तपः अस्त्राय फट्, इति करन्यासः । प्रणवेन सर्व्वशरीरे व्यापकन्यासः, एवं करद्वये, अङ्गुष्ठादिकनिष्ठान्तेषु करद्वये युगपन्न्यासः, अकारं प्रथमे पर्व्वणि, उकारं द्वितीये, मकारं तृतीये, सर्व्वाङ्गुलिव्यापकं प्रणवं न्यसेत्, अकारं नाभौ, उकारं हृदि, मकारं मूर्द्ध्नि ।

सर्व्वाङ्गे प्रणवम्,—

शरीरं प्रणवं ध्यात्वा तन्मध्ये परमात्मानम्
विचिन्त्य ब्रह्मकवचेन स्वदेहं परिबन्धयेत् ॥

भूरग्न्यात्मने हृदयायनमः, भुवः वाय्वात्मने शिरसे स्वाहा, स्वः-सूर्य्यात्मने शिखायै वषट्, भूर्भुवः स्वर्ब्रह्मात्मने कवचाय हुं, सोमात्मने नेत्राभ्यां वौषट्, सत्यात्मने अस्त्राय फट्, व्याहृतित्रयेण दिग्-बन्धनं, एतद्ब्रह्मकवचं,

ध्यानं,

विष्णुं भास्वत्किरीटाङ्गदवलयगलाकल्पहारोदराङ्घ्रि-
श्रोणीभूषं सवक्षोमणिमकरमहाकुण्डलामण्डिताङ्गं,
हस्तोद्यच्चक्रशङ्खाम्बुजगदममलं पीतकौशेयवासो,[1]
विद्योतद्भासमुद्यद्दिनकरसदृशं पद्मसंस्थं नमामि ॥

ततः प्रणवजपः ।

इति प्रणवजपविधिः ।

---

(१) कौशेयमाशा ।

## अथ अष्टाक्षरजपः ।

प्रातः प्रातः समुत्थाय कृतसन्ध्यजपः शुचिः ।
जपेदष्टसहस्रं वै नित्य एष विधिः स्मृतः ॥
यो मासं द्वापरे भक्त्या पूजयन् लभते फलम् ।
नमो नारायणेत्युक्त्वा तत्कलौ लभते फलम् ॥
अष्टाक्षरो महामन्त्रः सर्व्वपापहरः परः ।
सर्व्वेषां विष्णुमन्त्राणां राजत्वेन प्रतिष्ठितः ॥

कल्पतरौ अष्टाक्षरविधाने,

जपेत् सहस्रं नियतं शुचिर्भूत्वा समाहितः ।

पाद्मे,—

अष्टाक्षरं हि मन्त्रेशं ये जपन्ति द्विजोत्तमाः ।
तान् दृष्ट्वा ब्रह्महा शुध्येत्ते यतो विष्णवः स्वयम् ॥

अस्य च वैदिकत्वान्न सिद्धादिचिन्ता, न वा दीक्षानियमः, न वा पुरश्चरणनियमः, तथाच नारायणोपनिषत्,— आत्मबोधोपनिषच्चप्रमाणं,

प्रपञ्चसारे,—

ऋषिरस्य मनोः साध्यनारायण इतीरितः ।
छन्दस्तु देवी गायत्री परमात्मा च देवता ॥
अथ क्रुद्धमहावीर द्विसहस्रपदोदकैः ।
उल्कोर्जातियुतैः कुर्य्यात् पञ्चाङ्गानि मनोः क्रमात् ॥
अष्टाक्षरेण व्यस्तेन कुर्य्यादाष्टाङ्गिकं सुधीः ।
सहृच्छिरःशिखावर्मनेत्रास्त्रोदरपृष्ठके ॥

तथा,—

अष्टाक्षरनारायणमन्त्रस्य, साध्यनारायण ऋषिः, देवी गायत्री-च्छन्दः, परमात्मा देवता, अष्टाक्षरनारायणमन्त्रस्य जपे विनियोगः, ॐ क्रुद्धोल्काय स्वाहा अङ्गुष्ठाभ्यां नमः, ॐ महोल्काय स्वाहा तर्ज्जनीभ्यां स्वाहा, ॐ वीरोल्काय स्वाहा मध्यमाभ्यां वषट्, ॐ द्युल्काय स्वाहा अनामिकाभ्यां हुं, ॐ सहस्रोल्काय स्वाहा करतलकरपृष्ठाभ्यां अस्त्राय फट्। इति करन्यासः।

एवमङ्गन्यासः,

हृदयाय नमः, शिरसे स्वाहा, शिखायै वषट्, कवचाय हुं, अस्त्राय फट्, इति विशेषः,

ध्यानं,—

अर्कौघाभं किरीटान्वितमकरलसत्कुण्डलं दीप्तिराज—
त्केयूरं कौस्तुभाभाशवलरुचिरहारं सपीताम्बरञ्च।
नानारत्नांशुभिन्नाभरणशतयुतं श्रीधराश्लिष्टपार्श्वम्,
वन्दे दोःशङ्खचक्राम्बु(1)रुहगदममलं विश्ववन्द्यं मुकुन्दम्॥

ॐ नमो नारायणायेति अष्टाक्षरमन्त्रः, नमो नारायणायेति-मन्त्रैकशरणा वयमितिवचनात्।

मन्त्रार्थः,—

सर्व्वज्ञः सर्व्वशक्तिश्च सर्व्वात्मा सर्व्वगो ध्रुवः।
जगज्जन्मस्थितिध्वंसहेतुरेष महेश्वरः॥

एवमेव समुद्दिश्य मन्त्रो नारायणः सदेति सुरेश्वराचार्य्यरीत्या-ज्ञातव्यम्।

(1) चक्राम्बुज।

तस्यार्थः,—

ब्रह्मलोकानुग्रहार्थं गृहीतदेहो नारायणस्तस्मै नमस्कार इति। प्रपञ्चसारे, तारः शक्त्यर्थतया निर्दिष्टः सोऽहमर्थकः, पूर्णं, नार्णः प्रतिषेधार्थो मोकारस्यायमर्थको भवति, सलिलानलपवनधराः क्रमेण नारायणाक्षराः प्रोक्ताः, चरमे च सुविभक्त्यर्थं(१) दर्शित-स्तदर्थार्थे।

अयं जलतेजोवायुपृथ्व्यात्मकः प्रपञ्चो नास्ति सोऽहं ब्रह्मै-वाहमित्यर्थः, प्रयोगस्तु कल्पाद्यनुसारेण कार्य्यः।

इत्यष्टाक्षरानुविधानम्।

## अथ द्वितीयभागकृत्यम्।

दक्षः,—

द्वितीये च तथा भागे वेदाभ्यासो विधीयते।
वेदस्वीकरणं पूर्व्वं विचारोऽभ्यसनं जपः॥
तद्दानं चैव शिष्येभ्यो वेदाभ्यासो हि पञ्चधा।
समित्पुष्पकुशादीनां स कालः समुदाहृतः॥

उपादानस्येति विशेषः, वेदस्वीकरणं वेदाध्ययनं, तद्रूपः प्रथमो-वेदाभ्यासः।

---

(१) सुविभक्तिव्यर्थम्।

याज्ञवल्क्यः,—

यज्ञानां तपसां चैव शुभानां चैव कर्म्मणाम् ।
वेद एव द्विजातीनां निःश्रेयसकरः परः ॥

वेदविचारो मीमांसाध्ययनं, तद्रूपो द्वितीयो वेदाभ्यासः ।

तदुक्तं,—

धर्म्मे प्रमीयमाणे तु वेदेन करणात्मना[1] ।
इति कर्त्तव्यताभागं मीमांसा पूरयिष्यति ॥

लघुव्यासः,—

यथा पशुर्भारवाही न भारफलमश्नुते ।
द्विजस्तथा ज्ञानहीनो न वेदफलमश्नुते ॥
श्रुतं गरीयः सर्वेभ्यो वित्तादिभ्यो न संशयः ।
श्रुताद्धि चक्रिरे धर्मं योऽनूचानो स नो महान् ॥
समुचितं श्लोकमपि श्रुताधीतं विशिष्यते ।

श्रुतमत्र मीमांसा, अनूचानः साङ्गप्रवचनाध्यायी अर्थज्ञानवानिति यावत् इति लक्ष्मीधरः, तेन शिक्षादीनां षडङ्गानामध्ययनं नित्यं, वेदमूलत्वात् स्मृतीनामपि ।

मनुः,—

अज्ञेभ्यो ग्रन्थिनः श्रेष्ठा ग्रन्थिभ्यो धारिणो वराः ।
धारिभ्यो ज्ञानिनः श्रेष्ठा ज्ञानिभ्योऽध्यवसायिनः ॥

अध्यवसायिनोऽध्येतारः,[2]

---

(१) करणात्मना ।

(२) अनुष्ठातारः ।

मनुः,—

बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ।

नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥

बुद्धिवृद्धिकराणि वैशेषिकन्यायादीनि, धन्यानि नीतिशास्त्राणि, वैदिका निगमानिर्घण्टुप्रभृतयः ।

तथा,—

आर्षं धर्मोपदेशं च वेदशास्त्राविरोधिना ।

यस्तर्केणानुसन्धत्ते स धर्मं वेद नेतरः ॥

वेदार्थज्ञानाय विचारान्तःपातिन्यायाद्यध्ययनं

शङ्खलिखितौ,—

न वेदमधीत्य नान्यां विद्यामधीयीत, अन्यत्र वेदाङ्गस्मृतिभ्य इति ।

अथाभ्यासरूपस्तृतीयो वेदाभ्यासः । अभ्यसनं अभ्यासो गुणनात्मकः, पारायणजपब्रह्मयज्ञादिसिद्धिहेतुर्वेदधारणफलार्थं क्रियमाण आनुसङ्गिकपापक्षयादिफलश्च ।

याज्ञवल्क्यः,—

वेदाभ्यासरतं शान्तं महायज्ञक्रियारतम् ।

न स्पृशन्ति[1] तु पापानि महापातकजान्यपि ॥

मनुः,—

अनभ्यासेन वेदानामाचारस्य च वर्जनात् ।

आलस्यादन्नदोषाच्च मृत्युर्विप्रान् जिघांसति ॥

ननु वक्ष्यमाणब्रह्मयज्ञकरणेनापि अभ्यासस्य चारितार्थ्यमस्तु

(१) स्पृशन्तीह ।

इति चेन्न, धारणेऽभ्यासस्य साधनत्वाद्धारणं विना ब्रह्मयज्ञाभावात्, किं च ब्रह्मयज्ञस्य प्रातर्होमानन्तरं तर्पणात्पूर्व्वं वैश्वदेवावसाने वा तैत्तिरीयश्रुत्या रात्रौ वा विधानेन कालभेदात्।

## अथ जपरूपश्चतुर्थो वेदाभ्यासः।

मनुः,—

वेदमेवजपेन्नित्यं यथाकालमतन्द्रितः।

तं ह्यस्याहुः परं धर्म्ममुपधर्मोऽन्य उच्यते॥ इत्यादि

अस्नाताशी मलं भुंक्ते अजपी पूयशोणितमिति जावाल्याद्युक्तदोषवचनेन विहितस्य जपस्य नायं कालः।

अह्नश्चतुर्थभागे तु मुख्या भवति मध्यमा।

नित्यत्वादन्यकालेऽपि सानुष्ठेया स्वशक्तितः॥

इति ब्रह्माण्डपुराणोक्तेस्तस्य माध्याह्निककर्म्मणि वस्त्रनिष्पीडनानन्तरं विहितस्य ब्रह्मयज्ञरूपस्य जपस्य नायं कालः, किं तु पापक्षयफलकस्यायमेव द्वितीयभागः कालः, तथा पशुपुत्रादिकाम्यस्याऽपि, तत्रादौ प्रणवस्यैकान्तिकसच्चिदानन्दब्रह्मपरस्य जपः सर्व्वपापक्षयद्वाराऽन्तःकरणशुद्ध्यापादनेन मोक्षफलः कार्य्यः।

तथाच यजुर्विधाने,—

ततः परमोंकारकल्पं व्याख्यास्याम इत्यादि।

ततोऽस्य सर्व्वे वेदा अधीता भवन्तीति च॥

योगी याज्ञवल्क्यः,—

प्रणवो हि परं ब्रह्म तज्जपः सर्व्वपापहा ।
ॐकारायुतमभ्यस्य तदह्नैव विशुध्यति ॥
यत्तदा दशसाहस्रं जपमन्वहमाचरेत् ।
तस्य द्वादशभिर्मासैः परं ब्रह्म प्रकाशते ॥
शुचिर्वाऽप्यशुचिर्वापि प्रणवं यो जपेत्सदा ।
लिप्यते न स पापेन पद्मपत्रमिवाम्भसा ॥

अङ्गिराः,—

प्रणवाद्यास्तथा वेदाः प्रणवे पर्य्युपस्थिताः ।
वाङ्मयं प्रणवे सर्व्वमभ्यस्येत्प्रणवं ततः ॥
प्रणवे नित्ययुक्तस्य व्याहृतिषु च सप्तसु ।
त्रिपदायां च गायत्र्यां न भयं विद्यते क्वचित् ॥

योगी याज्ञवल्क्यः,—

अदृष्टविग्रहो देवो भावग्राह्यो मनोमयः ।
तस्योङ्कारस्मृतं नाम तेनाहूतः प्रसीदति ॥

स च गायत्रीजपो द्विविधः,—

प्रणवभूर्भुवस्वरिति व्याहृतित्रययुक्ततत्सवितुरित्यादि त्रिपदा गायत्रीत्येकः प्रकारः ।

स एव सन्ध्यासु इति सप्रमाणं प्राक् लिखितम् ।
सप्तव्याहृतिदशप्रणवशिरःसाहित्येन द्वितीयः ।

अत्रः,—

इति पवित्राण्यभिहितान्येतेभ्यः सावित्री विशिष्यते ।

नाघमर्षणादित्यादि च, ओँकारस्य प्रणवाख्या।

ओँभूः, ओँभुवः, ओँस्वः, ओँमहः, ओँजनः, ओँतपः, ओँसत्यं इति महाव्याहृतयः,—

आपो ज्योतिरसोऽमृतं ब्रह्मभूर्भुवस्वरोम्।

अत्र च भवति श्लोकः,—

सव्याहृतिं सप्रणवां गायत्रीं शिरसा सह।
ये जपन्ति सदा तेषां न भयं विद्यते क्वचित्॥
शतजप्ता तु सा देवी दिनपापप्रणाशिनी।
सहस्रजप्ता सा देवी पातकेभ्यः प्रमोचिनी॥
दशसाहस्रजाप्येन सर्व्वपातकनाशिनी।
सुवर्णस्तेयकृद्विप्रो ब्रह्महा गुरुतल्पगः॥
सुरापश्च विशुध्यन्ति लक्षजापान्न संशयः।
प्राणायामत्रयं कृत्वा कल्यं कल्यं समाहितः॥
अहोरात्रकृतात्पापात्तत्क्षणादेव मुच्यते।
सव्याहृतिसप्रणवाः प्राणायामास्तु षोड़श॥
अपि भ्रूणहनं मासात्पुनन्त्यहरहः कृताः।

अत्र गायत्र्यधिकारात् सव्याहृतिशिरःसहितदशप्रणवयुक्त-गायत्र्याः प्राणायामः प्रतीयते।

तथा,—

हस्तत्राणप्रदा देवी पततां नरकार्णवे।
तस्मात्तामभ्यसेन्नित्यं ब्राह्मणो हृदये शुचिः॥

गायत्रीजप्यनिरतं हव्यकव्येषु योजयेत्।
तस्मिन्न तिष्ठति पापमब्बिन्दुरिव पुष्करे॥
सावित्रीजप्यनिरतः स्वर्गमाप्नोत्यनुत्तमम्।
सावित्रीजप्यनिरतो मोक्षोपायश्च विन्दति॥

तत्र न भयं विद्यते इत्यत्र नरकभयं संसारभयं नास्तीत्यर्थः, इत्येकः प्रकारः।

मनुयमौ,—

ॐकारपूर्व्विकास्तिस्रो महाव्याहृतयोऽव्ययाः।
त्रिपदा चैव गायत्री विज्ञेयं ब्रह्मणो मुखम्॥
योऽधीतेऽहन्यहन्येतां त्रीणि वर्षाण्यतन्द्रितः।
स ब्रह्मपरमभ्येति वायुभूतः खमूर्त्तिमान्॥

वायुभूतो लिङ्गशरीरनिष्ठः, खमूर्त्तिमानाकाशव्यापी,

पुनर्यमः,—

गायत्र्यास्तु परं नास्ति शौनात् सत्यं विशिष्यते।
सहस्रपरमां देवीं शतमध्यां दशावराम्॥
गायत्रीं तु जपेन्नित्यं सर्व्वपापप्रणाशिनीम्।
गायत्रीश्चैव वेदांश्च तुलयाऽतोलयत्प्रभुः॥
एकतश्चतुरो वेदाः साङ्गाश्च सपदक्रमाः॥
एकतश्चैव गायत्री तुल्यरूपा तु सा मता।

तत्र प्रणवव्याहृतित्रयसहितगायत्रीजपकथनात्।

प्रणवाद्यतिसंरुद्धां जपेद्व्याहृतिभिः सदा।

गायत्रीं प्रणवश्चान्त इति वैकल्पपरमेव।

अन्ते प्रणवोऽस्मिन् पक्षे वैकल्पिकः ।

मनुः,—

सहस्रकृत्वस्त्वभ्यस्य बहिरेतत्त्रिकं द्विजः ।
महतोऽप्येनसो मासात्त्वचेवाहिर्विमुच्यते ॥

अत्र यद्यपि बहिर्देशविशिष्टजपविधानात् गृहग्रामादीनां सामान्यदेशानामिह प्रसङ्गः ।

तथापि असम्भवे अप्राकृतगृहैकदेशे जपमाचरन्ति शिष्टाः ।

योगी याज्ञवल्क्यः,—

ॐकाराद्या त्रिरावृत्ता देवक्षार्थमपि सदा ।
समावृत्ता पुनर्व्वेदं दशभिः प्रापयेद्दिवम् ॥
विंशावर्त्तेन सा देवी नयते ह्रीश्वरालयम् ।
अष्टोत्तरशतं जप्ता तरते भवसागरात् ॥
सर्व्वेषामेव पापानां सङ्करे समुपस्थिते ।
दशसाहस्रिकोऽभ्यासो गायत्र्याः शोधनं परम् ॥
यत्र यत्र च संकीर्णमात्मानं मन्यते द्विजः ।
तत्र तत्र तिलैर्होमो गायत्र्या जप एव च ॥
वायुभक्षो दिवा तिष्ठेद्रात्रौ नीत्वाप्सु सूर्य्यदृक् ।
जप्त्वा सहस्रं गायत्र्याः शुद्धिर्ब्रह्मवधादृते ॥
शतेन गायत्र्या स्नायात् शतमन्तर्जले जपेत् ।
अपः शतेन पीत्वा तु सर्व्वपापैः प्रमुच्यते ॥

तथा,—

गोघ्नो पितृघ्नो मातृघ्नो ब्रह्महा गुरुतल्पगः ।
भ्रूणहा स्वर्णहारी च यश्च विप्रः सुरां पिबेत् ॥
गायत्र्याः शतसहस्रेण जप्येन तु भवेत् शुचिः ।

एवं याज्ञवल्कीयजपप्रयोगाणां व्याहृतित्रयविशिष्टगायत्रीजप-विषयत्वं, शंखोक्तानां प्रणवयुक्तगायत्रीविषयत्वं, ये प्रयोगा-स्तदन्यतरलिङ्गशून्यास्तत्र द्वयोः कल्पयोर्व्विकल्पः ।

यथा,—

सर्व्वेषामेव पापानां सङ्करे समुपस्थिते ।
दशसाहस्रिकोऽभ्यासो गायत्र्याः शोधनं महत् ॥
गायत्र्याः शतसाहस्रो जपो नक्ताशिनो द्विज ।
बहिःस्नातस्य तत्रैव सर्व्वकल्मषनाशनः ।
दशायुतानि अभ्यस्य च हविष्याशी स मुक्तिभाक् ॥
गायत्र्यास्तु जपन् कोटिं ब्रह्महत्यां व्यपोहति ।
लक्षजप्यात्तु गायत्र्यास्तु सुरापानात् प्रमुच्यते ॥
पुनाति हेमहर्त्तारं गायत्र्याः लक्षसप्ततिः ।
गायत्र्या लक्षजप्या तु मुच्यते गुरुतल्पगः ॥

यत्र च गुणविशेषात् फलविशेषः ।
पापक्षयेऽप्यनुबन्धभेदाद्विशेषः ।

तथा यजुर्व्विधाने, अथातो गायत्रीकल्पं व्याख्यास्यामः, उपोष्य पुष्येण स्थण्डिलमुपलिप्य कुशेषूपविष्टो द्यावापृथिव्योः सन्धिमीक्षमाणो जपेत् ।

ॐकारपूर्व्वां गायत्रीं जपेत्, यावत्कालं यथाविद्याकालं, अग्निमुपसमाधाय चतुर्व्विंशत्याज्याहुतिसहस्राणि जुहुयात् तत्सवितुरिति, समाप्तहोमो दशायुतानि जप्त्वा सर्व्वपापैः प्रमुच्यते, अथोङ्कारपूर्व्वगायत्रीमात्रस्य जपः।

न व्याहृतिप्रवेशेन, यावत्कालं यथाविद्याकालमिति सिध्यर्थं-जपपुरश्चरण एषः।

अहोरात्रोपोषितः साहस्रिकं होमं समाचरेत्, त्रिरात्रोपोषितो दशसाहस्रिकमित्यादि वक्ष्यमाणकालावच्छिन्नजपकल्पनम्। सर्व्वमन्त्राणां पूर्व्वसेवार्थं लक्षमयुतं सहस्रं शतमिति सिध्यपेक्षाकार्य्यमत्युपक्रमे विधानादृष्टाशम्।

तथा,—

स्त्रीशूद्रसम्भाषणवर्ज्जितरात्रमयुतं जप्त्वा विपापो भवति, द्वितीयं विद्यार्थी, तृतीयमारोग्यकामः, चतुर्थं पुत्रकामः, पञ्चमं धनकामः, षष्ठं प्राणकामः, सप्तमं सौभाग्यकामः, अष्टमं ब्राह्मणवर्ज्जं सर्वे वर्णा वशीभवन्ति, नवमेन गायत्रीं सुरूपां पश्यति, दशमेन ब्रह्मलोकमवाप्नोति। अथातः काम्यहोमः, दूर्व्वामायुस्कामः, पशूनामुपघाते कुशान् जुहुयात् ज्वरापगतये तु चाम्रसमिधो जुहुयात्, खदिरमन्नाद्यकामस्य, अपामार्गमर्थकामस्य, पद्मानि श्रीकामस्य, वासकपुष्पं कन्यार्थी, अकामित्वाज्यहोमात् परं ब्रह्माधिगच्छति।

प्राप्य देशञ्च कालञ्च द्विजः सामर्थ्यमेव च।
एकाहं ब्रह्मकूर्च्चाशी एकाहमेकभक्तकृत्॥

एकाहं ब्राह्मणाग्नाग्नौ गायत्रीजपमाचरेत्।
शतं स्नात्वा तु गायत्र्याः शतमन्तर्जले जपेत्॥
अपः शतेन पीत्वा च सर्व्वपापैः प्रमुच्यते।
गोघ्नश्चैव कृतघ्नश्च ब्रह्महा गुरुतल्पगः॥
भ्रूणहा रत्नहारी च यश्च विप्रः सुरां पिबेत्।
अयाज्यं याजयित्वा तु कृत्वान्यदपि पातकम्॥
न सीदेत् प्रतिगृह्णानः पृथिवीमपि सागरम्।
ये च केचिद्ग्रहा दुःस्थाः सौम्यास्ते स्युः न संशयः॥

द्वितीयं विद्यार्थीत्यादिषु समुच्चयोऽयुतद्वयमित्यर्थः, एवं तृतीयादिषु, शतं स्नात्वा तु गायत्र्या इत्यत्र गायत्रीकरणस्नानशतं वाक्यार्थः।

योगी याज्ञवल्क्यः,—

ऋग्विधाने, शतेन गायत्र्याः स्नायादिति शतसंख्यकगायत्रीजपकरणकमेव स्नानमिति कर्म्मभेदः।

तेन द्वयोर्यावत् श्रुतेतिकर्त्तव्यतायोगेनानुष्ठानम्।

गायत्र्या न्यासः, याज्ञवल्क्यः, प्रथमं प्रणवन्यासः, अकारं नाभौ, उकारं हृदि, मकारं मूर्द्ध्नि विन्यस्य ब्रह्मरूपतयात्मध्यानम्।

व्याहृतिन्यासः।

भूः पादयोः, भुवः जानुनि, स्वः कट्यां, नाभिदेशे महः, जनलोकं हृदये, तपः कण्ठदेशे, भ्रूललाटमध्ये सत्यं।

गायत्र्यक्षरन्यासः।

पादाङ्गुष्ठे तथा गुल्फे जानुनोर्जङ्घयोस्तथा।
ऊर्व्वोर्गुह्येऽथ वृषणे पायौ नाभौ तथैव च॥

जठरे स्तने च हृदये कण्ठे वक्त्रे च तालुके[1] ।
श्रोत्रे चक्षुषि[2] भ्रूमध्ये ललाटे पूर्व्वके मुखे ॥
याम्ये च पश्चिमे चैव उत्तरे च यथाक्रमम् ।
अन्तिमं मूर्द्ध्नि विन्यस्य परं ब्रह्म स उच्यते ॥

पूर्व्वमुखं शिरसः पूर्व्वभागः, एवमन्यत् ।

## अथ शिरोमन्त्रन्यासः ।

गुह्ये वक्षसि वक्त्रे च समीके हृदये तथा ।
पायौ नाभ्यां ललाटे च नवमं मूर्द्ध्नि विन्यसेत् ॥

समीकं कण्ठदेश इति केचित् । गले पृष्ठं समीकं वा ।

इदं न्यासचतुष्कं च सन्ध्यास्वति यो नरः[3] ।
सर्व्वपापविनिर्मुक्तो ब्रह्मसायुज्यमृच्छति ॥

अथ देवताः,—

अग्नि र्वायुस्तथा सूर्य्यो विष्णुर्यमो वरुणश्च ।
बृहस्पतिश्च पर्जन्य इन्द्रो गन्धर्व एव च ॥
पूषा मित्रावरुणौ च त्वष्टा च वसवस्तथा ।
मरुतः सोमोऽङ्गिराश्च विश्वेदेवास्तथाश्विनौ ॥

(१) तालुनि ।
(२) चक्षुर्भ्रुवोर्मध्ये ।
(३) द्विजः ।

प्रजापतिश्च देवाश्च सरुद्रब्रह्मविष्णवः ।
जपकाले तु संयोज्य[1] तेषां सायुज्यतां व्रजेत् ॥

न्यासचतुष्कमक्षरदेवताचिन्तनं च काम्यमिति वदन्ति ।

यजुर्विधाने,—

अथ रक्षार्थं विद्याङ्गान्युच्यन्ते, मन्त्राणामिषत्वेत्यादिना[2] खं ब्रह्मान्तानां, शिवसङ्कल्पो हृदयं, पुरुषसूक्तं शिरः, उत्तरनारायणं शिखा, अप्रतिरथं कवचं, शतरुद्रीयमस्त्रं, शतरुद्रीयं रुद्राध्याय एव काम्यानां, वयं सोमेत्यनुवाकश्चेतेति रुद्राङ्गेऽधिकस्य विधानात् ।

तथा प्रकारान्तरं, मनो ज्योतिः हृदयं, अबोध्यग्निः शिरः, मूर्द्धानं दिवः शिखा, मर्माणि ते कवचं, मानस्तोकेऽस्त्रं, तथा प्रणवो भूर्भुवःस्वरिति षड्हृदयादीनि[3], ॐ हृदयाय नमः, भूः शिरसे स्वाहा, भुवः शिखायै वषट्, स्वः कवचाय हुं, ॐ भूर्भुवः स्वः अस्त्राय फट् ।

एतच्च यजुर्विधानोक्तप्रयोगेषु नित्यमन्यत्र वैकल्पिकम् ।

गायत्रीमधिकृत्य तु योगी याज्ञवल्क्यः,—

प्रणवोभूर्भुवः स्वरित्यङ्गानि हृदयाय नमः ।
द्विशावर्त्त्य ततः पश्चादार्षं छन्दश्च दैवतमिति ॥

द्विधावृत्तिर्व्यस्तसमस्तरूपेण, समस्तेनास्त्रमित्यर्थः ।

(१) संचिन्त्य ।

(२) मन्त्राणामीषेत्वेत्यादिना ।

(३) षड्हृदयादीनि ।

तथा,—

मातरमिन्द्रं, त्वन्नो अग्ने, सुगन्नुपन्थां, अप्सुन्वन्तं[1] तत्त्वायामि।

आपोभिर्वृभिः, वयं सोम, तमीशानं, अग्ने रुद्रा, स्योना-पृथिवीत्येतत्संपुटं जपकाले होमकाले रक्षां प्राच्यादिषु कुर्य्यात्।

योगी याज्ञवल्क्यः,—

प्रणवाद्यन्तसंरुद्धो जपो व्याहृतिभिः सह।

प्रणवव्याहृतिभिः सार्द्धं स्वाहान्तं होमकर्म्मणि॥

प्रतिलोमं प्रयोक्तव्या फट्कारान्ताभिचारिके।

तेन सन्ध्याव्यतिरिक्तजपे प्रणवाद्यन्तत्वं अत्रावाह्न यजुषानेन तेजोऽसीति विधानत इति याज्ञवल्क्यपाठेऽपि ओजोऽसीत्यादि मन्त्र एव तैत्तिरीयसिद्धो ग्राह्यः, विसर्ज्जनमन्त्रोऽपि तत्रैवोक्तः, सन्ध्याख्याने[2] दर्शितो, नमस्कृत्य विसर्जयेदिति वचनादित्यत्र नमस्कारपूर्व्वता विहिता।

तथा,—

श्वेतवर्णा समुद्दिष्टा कौशेयवसना तथा।

श्वेतैर्विलेपनैः पुष्पैरलंकारैश्च भूषिता॥

आदित्यमण्डलान्तस्था ब्रह्मलोकस्थिताथवा।

अक्षसूत्रधरा देवी पद्मासनगता शुभेति ध्यानमावश्यकं, अथाध्यापनरूपः पञ्चमो वेदाभ्यासः, दक्षवचने तद्दानं वेददानं अध्यापनमित्यर्थः।

---

(१) अप्सुन्वन्तम्।

(२) स्वये।

यद्यपि,

अध्यापनमध्ययनं यजनं याजनं तथा।

दानं प्रतिग्रहश्चैव षट्कर्म्माण्यग्रजन्मनः॥

षण्णान्तु कर्म्मणामस्य त्रीणि कर्म्माणि जीविका।

याजनाध्यापने चैव विशुद्धाच्च प्रतिग्रहः॥ इति।

अध्यापनस्य जीविकात्वमुक्तं न धर्म्मजनकत्वम्।

तथा,—

शुश्रूषाविद्यान्तरप्राप्तिप्रत्युपकारादिकामनया क्रियमाणस्य धर्म्मजनकत्वे मानाभावः, तथापि सर्व्वथा दृष्टफलाभिसन्धानमन्तरेण परोपकारबुद्ध्या क्रियमाणस्याध्यापनस्य ब्रह्मलोकादिफलार्थत्वं बोध्यं तत्र पुत्राध्यापनं नित्यम्।

तथा,—

तस्मात्पुत्रमनुशिष्टं लोकमाहुः, तस्मादेनमनुशासतीति श्रुतेः।

याज्ञवल्क्यः,-

कृतज्ञोऽद्रोही मेधावी शुचिः कल्याणसूचकः।

अध्याप्याः साधुशक्ताप्तस्वार्थदा धर्म्मतस्त्विमे॥

कृतज्ञः परोपकारज्ञाता, अद्रोही प्रसिद्धः, शुचिः पातकादिरहितः, कल्याणसूचकः, शुभलक्षणयुक्तः।

सा धुर्धार्म्मिकः, शक्तो वेदाक्षरग्रहणधारणे।

आप्तो हितैषी, स्वः स्वकीयो ज्ञात्यादिः।

तथा वित्तदः स्वेच्छया न तु पणपूर्व्वम्,

मनुः,—आचार्य्यपुत्रः शुश्रूषुर्ज्ञानदो धार्म्मिकः शुचिः।

शक्तोऽर्थदाता स्वः साधुरध्याप्या दश धर्म्मतः॥

ज्ञानदो विद्यान्तरदाता।

तथा,—

विद्यादानेन सुमति र्ब्रह्मलोके महीयते।

विद्यादानात्परं दानं त्रैलोक्येऽपि न विद्यते॥

तथान्यत:,—

गोभूहिरण्यदानानि गावः पृथ्वी सरस्वतीत्यादिवचनात् विद्यान्तरदानमपि तत्फलार्थं काम्यमिति अध्यापनान्तर्गतमेव।

बृहस्पति:—

एवं दण्डादिकैर्युक्तं संस्कृत्य तनयं पिता।

वेदमध्यापयेद् यत्नाच्छास्त्रं मन्वादिकं तथा॥

मनु:,—

भार्य्या पुत्रश्च दासश्च शिष्यो भ्राता च सोदर:।

प्राप्तापराधास्ताड्या: स्यू रज्ज्वा वेणुदलेन वा॥

अत्र शिष्टा:,—

ब्रह्माति योऽननुज्ञात: परस्मात्पठतो द्विज:।

ब्रह्मस्तेयेन संयुक्त: स याति नरकं ध्रुवम्॥

यश्च श्रुत्वान्यत: शास्त्रं संस्कारं प्राप्य वा शुभम्।

अन्यस्य जनयेत्कीर्त्तिं गुरो: स ब्रह्महा भवेत्॥

इति द्वितीयभागकृत्यं।

---

# अथ तृतीयभागकृत्यम् ।

दक्षः,—

तृतीये चैव भागे तु पोष्यवर्गार्थसाधनम् ।
माता पिता गुरुर्भार्य्या प्रजा दीनः समाश्रितः ॥
अभ्यागतोऽतिथिश्चाग्निः पोष्यवर्ग उदाहृतः ।
ज्ञातिर्बन्धुजनः क्षीणस्तथानाथः समाश्रितः ।
अन्योऽपि धनयुक्तस्य पोष्यवर्ग उदाहृतः ॥
ज्ञानविद्भूप्रदाः पुण्याः सर्वे पुण्याः शिलोदयाः ॥

भविष्यपुराणे,—

भास्करायतनाभ्याशे यत्तोयं [1]पूर्व्वतः स्थितम् ।
सूर्य्यगङ्गेति विज्ञेयं तत्र स्नात्वा दिवं व्रजेत् ॥
शिवलिङ्गसमीपस्थं यत्तोयं पुरतः स्थितम् ।
शिवगङ्गेति तद्ज्ञेयं तत्र स्नात्वा दिवं व्रजेत् ॥

अत्र विशेषोपादानात् कृत्रिमस्यापि जलस्य सूर्य्यगङ्गात्वं शिवगङ्गात्वं च, अत्र जलसामीप्यं पुरस्थत्वं च ।

ब्रह्माण्डे,—

तत्र क्रतुशतं पुण्यं नदी यत्रोत्तरायते ।
तदा शतगुणं प्रोक्तं पश्चिमे शिवसंनिधौ ॥

(१) पुरतः स्थितम् ।

योगी याज्ञवल्क्यः,—

विरात्रफलदा नद्यो याः काश्चिदसमुद्रगाः ।
समुद्रगास्तु पक्षस्य मासस्य सरितां पतिः ॥

एवं,—

देवा¹स्त्रिंशत्सहस्रं जलधिगतनदीस्नानमन्योन्यतुल्यम् ।

शिष्टाः,—

नदीस्नानमवाप्नोति स्नातः स्वे तु जलाशये ।
वापीखाते जले स्नातो गङ्गास्नानमवाप्नुयात् ॥

अत्र नद्यादीनां संयोगपृथक्त्वन्यायेन गुणसम्बन्धः, भाष्यकारमते तस्मिंस्तु वर्त्तमाने तदाश्रितकामोऽपि प्रवर्त्तते इति नीत्या प्रातःस्नानेऽपि मध्याह्नस्नानोक्तानां नद्यादीनामिव गुणफलसम्बन्धः, स्नानं चाकृत्रिम इति नद्यानुवादो न कृत्रिमनिषेधः, अतएव स्वकारिते तु न विरोध इति लक्ष्मीधरः ।

अतएव भूमिष्ठमुद्धृतात् पुण्यमिति कृत्रिमाकृत्रिमसाधारण्येन मार्कण्डेयादिभिरुक्तम् ।

याज्ञवल्क्यः,—

प्रभूते विद्यमाने वा उदके सुमनोहरे ।
नाल्पोदके द्विजः स्नायान्नदीं चोत्सृज्य कृत्रिमे ।

तथाच नद्यादौ बहूदकसम्भवे अल्पोदके न स्नानम् ।

एवं अकृत्रिमसम्भवे कृत्रिमे न स्नानम् ।

(१) देव्या स्त्रिंशत्सहस्रम् ।

विष्णुः,—

परनिपानेषु न स्नायादाचरेद्वा पञ्चपिण्डानुद्धृत्यापि ।

आपदि जलान्तरासम्भवे—

मनुः,—

परकीयनिपानेषु न स्नायात्तु कदाचन ।
निपानकर्त्तुः स्नायात्तु दुष्कृतांशेन लिप्यते ॥

योगी याज्ञवल्क्यः,—

परकीयनिपानेषु यदि स्नायात् कदाचन ।
सप्त पिण्डान् समुद्धृत्य ततः स्नानं समाचरेत् ॥

शंखलिखितौ,—

स्नायात्तड़ागोदकनिपानकूपेषु ।
सप्त पञ्च त्रीन् पिण्डान् उद्धृत्य देवपितंस्तर्पयेत् ॥

बौधायनः,—

स्रवन्तीष्वनिरुद्धासु त्रयो वर्णा द्विजातयः ।
प्रातरुत्थाय कुर्व्वीरन् देवर्षिपितृतर्पणम् ॥
निरुद्धासु न कुर्व्वीरन्नंशभाक् तत्र सेतुकृत् ।
तस्मात् परकृतात् सेतून् कूपांश्च परिवर्ज्जयेत् ॥
उद्धृत्य वा त्रीन् पिण्डान् कुर्य्यादापत्सु नो सदा ।
निरुद्धासु तु मृत्पिण्डांस्त्रींस्त्रीनम्बुघटांस्तथा ॥

अत्रेयं व्यवस्था,—

परकृततड़ागेषु सप्तपिण्डोद्धरणं, कूपतड़ागातिरिक्तपरकृत-जलाशये पञ्चमृत्पिण्डोद्धरणम् ।

परखातकूपेषु पिण्डत्रयोद्धरणं प्रवहद्वेतुकरणाज्जलाधिक्यं यत्र तत्र षट्पिण्डत्रयोद्धरणं षण्मुवटत्रयोद्धरणञ्च।

अत्र च,—

चतुर्व्विंशाङ्गुलैर्हस्तैश्चतुर्भिर्धनुरुच्यते।
एकधन्वादिकूकीन्तं कूपमागमुदाहृतम्॥
शतधन्वन्तरा वापी पुष्करिणी चतुर्गुणा।
सहस्रेण तड़ागः स्यादयुतेन तु सागरः॥

इत्युक्तलक्षणाः कूपादयः, एवञ्च परखातेषु उत्कृष्टेष्वनुत्कृष्टेषु च निविधपिण्डोद्धरणे।

पिण्डोद्धरणं विधायत्वाह योगी याज्ञवल्क्यः,—

अनुद्धृत्य तु यः कुर्य्यात् परकीयजलाशये।
वृथा स्नानफलं तस्य कर्त्तुः पापेन लिप्यते॥

तथाच पिण्डोद्धरणाभावे स्नानवैगुण्यात् पुरुषदोषाच्च तदुभय-समाधानार्थं पिण्डोद्धरणं, केवलं जलान्तरासम्भवे परखातजले वैधस्नानकरणेन न स्नानफलं न वा पुरुषदोषपरिहारः।

किन्तु शरीरशुद्धिः, प्रत्यवायपरिहारश्च स्यादेव, स्नातस्य वह्नितसेत्यायुक्तेः, एवं संक्रान्तिग्रहणादिनैमित्तिकस्नाने बोध्यं, काम्यस्नानस्य जलान्तरासम्भवे वैगुण्यमेव। तत्र स्नानधर्म्मान-तिदेशात् परखातेऽपि स्नानस्वरूपनिर्व्वाहादवैगुण्यमेव।

पुरुषार्थनिषेधातिक्रमे दोषः स्यादेव, खननतड़ागादौ विक्रयादिना परकीये जले नदीसेतुभङ्गादिना परभूमौ गर्त्ते जाते तथा परकीयनिम्नभूमौ वर्षोदकपूर्णत्वे च जलस्य च परकीयत्वेऽपि

परकृतत्वाभावान्न पिण्डोद्धरणं, अतएव स्नातस्य वक्ष्यमाणेन तथैव परवारिणीत्यत्र परवारिपदस्य परवारिखातमिममखातमिमं च परैर्वो-पार्ज्जितमिति लक्ष्मीधरव्याख्यानान्न पिण्डोद्धरणम्।

शरीरशुद्धिः प्रत्यवायपरिहारश्च स्याताम्।

अत्र केचिन्नवीनाः,—

परकीयपदस्याजहत्स्वार्थलक्षणया निपानकर्त्तृपरसम्बन्धिपरत्वं भवेत्, अजहत्स्वार्थलक्षणया परकृतमात्रपरत्वस्य न्याय्यत्वात् यत्क्रीतं परिगृहीतं वा तत्रापि न निषेधपिण्डोद्धरणं इति।

योगी याज्ञवल्क्यः,—

न ग्राह्या स्त्वागता ह्यापो नद्याः प्रथमवेगिताः।
प्रक्षोभिताश्च केनापि याश्च तीर्थाद्बहिः स्थिताः॥

प्रथमवेगितानिषेधः शुष्कनदीविषय इति लक्ष्मीधरः, प्रक्षोभिताः हस्तिमहिषादिना, तीर्थाद्बहिः स्थितास्तीर्थाद्बहिश्छिन्नास्तीर्थगतत्वेनाप्रत्यभिज्ञायमानाः।

कात्यायनः,—

दिनत्रयं श्रावणादि सर्व्वा नद्यो रजस्वलाः।
तासु स्नानं न कुर्व्वीत वर्ज्जयित्वा समुद्रगाः॥

समुद्रगाः साक्षात्प्रत्यभिज्ञायमानसमुद्रप्रवेशाः, यस्तो मासः।

यत्तु,—भागीरथी च कालिन्दी नर्म्मदा च सरस्वती।
विशोका च वितस्ता च गौतमी कृष्णवेणिका॥
तुङ्गभद्रा भीमरथ्या तापी चैव पयोष्णिका।
द्वादशैता महानद्यः पापिनः पावयन्ति याः॥

इति वचनात् समुद्रगापदं द्वादशमहानदीपरमिति तन्न। समुद्रगापदस्य प्रसिद्धयोगत्यागेनाप्रसिद्धरूढिकल्पनायां मानाभावात्।

तथा,—

आदौ कर्कटके नद्यः सर्वा एव रजस्वलाः।
त्रिदिनं तु चतुर्थेऽह्नि शुद्धाः स्युर्जाह्नवी यथा॥

इति पठन्ति तत्र गङ्गाया दृष्टान्ततयोपादानान्यथानुपपत्त्या नित्यशुद्धत्वं सूचितम्।

गङ्गा च यमुना चैव प्लक्षजाता सरस्वती।
रजसा नाभिभूयन्ते ये चान्ये नदसंज्ञकाः॥
प्लक्षजाता सरस्वती, कुरुक्षेत्रस्थिता सरस्वती।

नदाः शोणनदादयः।

कात्यायनः,-

उपाकर्म्मणि चोत्सर्गे प्रेतस्नाने [illegible] च।
चन्द्रसूर्य्यग्रहे चैव रजोदोषो [illegible]द्यते॥

जलान्तरासंभवे न रजोदोष इति कालाद[illegible] कुरुक्षेत्रतीरवासिनामिति मदनपारिजातधृता स्मृतिरपि तत्परैव, तेन विशेषविधानादवैगुण्यम्।

व्याघ्रपादः,—

अभावे कूपवापीनामन्येनापि समुद्धृते।
रजोदुष्टेऽपि पयसि ग्राम्यभोगो न दुष्यति॥

अन्येनापि घटादिना,—

अन्त्यजैः खानिताः कूपास्तडागा वाप्य एव च।

"एषु स्नात्वा च पीत्वा च प्राजापत्यं समाचरे" दित्यापस्तम्बीय-निषेधस्य पुरुषार्थत्वेऽपि परक्रतत्वेन स्नानवैगुण्यमप्यस्ति।

जलान्तरासम्भवे न स्नानफलं प्रत्यवायपरिहार: स्यादेव, पुरुषार्थं प्रायश्चित्तं च कार्य्यं।

मनु:,—

न स्नानमाचरेद्भुक्त्वा नातुरो न महानिशि।
न वासोभि: सहाजस्रं नाविज्ञाते जलाशये॥

क्रतभोजनस्य यदृच्छास्नाननिषेध:, नित्यस्नानस्य प्राप्तत्वाभावा च्चण्डालादिस्पर्शनिमित्तकस्यावश्यकर्त्तव्यत्वादिति मेधातिथि:।

एवमातुरस्य महानिशायां अनवरतं च लौकिकमेव निषिद्धम्।

अविज्ञातत्वं गाधत्वेन निन्दितविषयत्वेन च।

जावालि:,—

त्रयोदश्यां तृतीयायां दशम्यां च विशेषत:।
शूद्रविट्‌क्षत्रिया: स्नानं नाचरेयु: कथंचन॥

शूद्रादीनां यथाक्रम[illegible]प्राप्तस्य।

शिष्टा:,—दशमी नवमी चैव तृतीया च त्रयोदशी।
प्रतिपच्च विशेषेण स्नानमन्नं विवर्जयेत्॥
द्वादश्यां क्रष्णपक्षे तु न स्नातव्यं कथं चन।
दर्शे स्नानं न कुर्वीत मातापित्रोस्तु जीवतो:॥
न वर्ज्यं तत्र वर्ज्यं तन्निमित्तान्तरसम्भवे।
न स्नायादुत्सवेऽतीते माङ्गल्याद्विनिवृत्य च॥
अनुव्रज्य सुहृद्बन्धून् पूजयित्वेष्टदेवता:।

भरणं पोष्यवर्गस्य प्रशस्तं स्वर्गसाधनम् ।
नरकं पीड़ने तस्य तस्माद्यत्नेन संभरेत् ॥
स जीवति पुमानेको बहुभिर्योऽनुजीव्यते ।
जीवन्तोऽपि मृतास्त्वन्ये पुरुषाः स्वोदरम्भराः ॥

अर्थसाधनं धनार्जनं, दीनः समाश्रितः न तु संपन्न, आश्रितोऽपि अभ्यागतः, सम्बन्धी ग्रामान्तरादागतः, ज्ञातिः पितृबन्धुः, बन्धुर्मातृबन्धुः, जनः आत्मजनः, अनाथः पित्रादिपोषकरहितः, अत्र मात्राद्यन्यन्तानां कष्टायामापदि गर्हितेनाप्युपायेन पोषणीयत्वं, ज्ञात्यादीनां सम्भवे न गर्हितेन पोषणम् ।

गुरून् भृत्यांश्चोज्जिहीर्षन्नर्चिष्यन् देवतातिथीन् ।
सर्व्वतः प्रतिगृह्णीयान्न तु तृप्येत्स्वयं ततः ॥ इति-

मनुवचनात्,—

न तु तृप्येत् प्राणयात्रामात्रं कुर्य्यादेव ।

तथा,—

श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ।
सीदता यत्कृतं पापं तेन पापेन लिप्यते ॥ इति

मार्कण्डेयपुराणाच्च, ज्ञातिसमानत्वात् मातृबन्ध्वादीनामपि सम्भवे पोष्यवर्गत्वमवगम्यते, अतएव गुर्वादीनामपि प्रकारान्तरेण वृत्तिसम्भवे न पोष्यवर्गत्वं ।

गुरुषु त्वभ्यतीतेषु विना वा तैर्गृहे वसन् ।
आत्मनो वृत्तिसिद्ध्यर्थं गृह्णीयात् साधुतः सदा ॥ इति,

तै विंना वा गृहे वसन्निति तेषां प्रकारान्तरेण वृत्तिसिद्धाविति-

भावः, वृत्तयो धनप्रतिग्रहविचारादयस्तवक्ष्यन्ते, इति तृतीयभागकृत्यम्।

## अथ चतुर्थभागकृत्यम्।

ब्रह्माण्डे,—

अह्नश्चतुर्थभागे तु मुख्यं भवति मध्यमम्।
तेन नित्यं सदा स्नानं कर्त्तव्यञ्च गृहाश्रितैः॥

दक्षः,—

नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमुच्यते।
तेषां मध्ये तु यन्नित्यं तत्पुनर्भिद्यते त्रिधा॥
मलापकर्षणं वाह्ये मन्त्रवत्तु जले स्मृतम्।
सन्ध्यास्नानमुभाभ्यां तु स्नानदेशाः प्रकीर्त्तिताः॥

शङ्खः,—

"मलापकर्षणं नाम स्नानमभ्यङ्ग पूर्व्वकं," इति नित्यस्नानमध्ये मलापकर्षणस्नानस्य गणनादस्य निरवकाशत्वेन गृहस्थकर्म्मत्वात् तद्विरुद्धस्य ब्रह्मचारिधर्म्मस्याभ्यङ्गनिषेधस्यानतिदेशः।

तथाच,—

तैलाभ्यङ्गं च ताम्बूलं मांसं कांस्ये च भोजनम्।
ब्रह्मचारी यतिश्चैव विधवा परिवर्ज्जयेत्॥ इति

वचनाद्गृहस्थस्याभ्यङ्गो न निषिद्धः तैलाभ्यङ्गस्य सर्व्वदा निषिद्धत्वे-षष्ठ्यादितिथिविशेषनिषेधस्य वैयर्थ्यप्रसङ्गः।

विष्णुपुराणे,—

चतुर्द्दश्यष्टमी चैव अमावास्या च पूर्णिमा ।
पर्वाण्येतानि राजेन्द्र रविसंक्रान्तिरेव च ॥
तैलस्त्रीमांसभोगी च पञ्चस्वेतेषु पर्व्वसु ।
विण्मूत्रभोजनं नाम प्रयाति नरकं नृप ॥
अशेषपर्व्वस्वेतेषु तस्मात् संयमितैर्नरैः ।
भाव्यं सच्छास्त्रवेदेज्यादानजप्यपरैः सदा ॥

वस्तुनो ब्रह्माण्डपुराणे,—

श्लेष्मवातहरं तैलं पित्तघ्नं घृतमुच्यते ।

अतस्तैलेन स्नातव्यं ब्राह्मणेन स शु(१)द्धापुनरिति विधिः स्पष्टः । अत्र तैलपदस्य तिलभवस्नेहे मुख्यता, सार्षपादौ च कात्यायनीयस्य तैलप्रत्ययानुशासनस्य महाभाष्यकृता गौणप्रयोगेण प्रत्याख्यानात्सार्षपैरण्डस्नेहादौ मुख्यतैलत्वाभावान्न तैलनिषेधे तन्निषेधः ।

तथाच प्रचेताः,—

तैलाभ्यङ्गनिषेधे च तिलतैलं निषिध्यते ।
तस्मात्पक्वतैलं गन्धतैलं सार्षपं पुष्पवासितम् ॥
वर्ज्याहेष्वप्यदुष्टं स्याद्द्रव्यान्तरयुतं तथा ।

इत्यादि वाक्येषु सार्षपपदोपादानं, पक्वतैलाभ्यनुज्ञायां दृष्टान्तार्थम् । एवं वामनपुराणीये चित्राहस्तश्रवणार्क्षेषु तैलमिति निषेधेऽपि वोध्यं ।

वृद्धशातातपः,—आसप्तमं कुलं हन्ति तैलग्रहणमष्टमी ॥

(१) सदा पुनरिति विधिः स्पष्टः ।

यमः,—

आसप्तमं कुलं हन्ति शिरोऽभ्यङ्गे चतुर्द्दशी ॥

तथा,—

षष्ठीषु तैलं मलमष्टमीषु।

इत्यादौ दोषातिशयात् स्नेहमात्रनिषेधः।

वामनपुराणे,—

नन्दासु नाभ्यङ्गमुपाचरेच्च, अत्रापि सर्व्वस्नेह-

निषेधः, नन्दाः, प्रतिपत्षष्ठेकादश्यः।

यत्र तैलोपभोगस्तत्र भक्षणस्यापि निषेधः।

तथापि सार्षपादितैलकृतपूपादौ न निषेधः।

पूर्व्वोक्तयुक्तेः,—

सप्तम्यां तैलसंस्पर्शादिष्टा भार्य्या विनश्यतीत्यत्र तैलस्य भक्षण-मपि निषिद्धम्।

मोहात्प्रतिपदं षष्ठीं कुहूं रिक्तां तिथिं तथा।

तैलेनाभ्यञ्जयेद्यस्तु चतुर्भिः परिहीयते ॥

चतुर्भिरायुःप्रज्ञायशोबलैः, तेन चतुर्थीनवम्योरपि निषेधः।

पितृश्राद्धे प्रगे स्नाने द्वादश्येकादशीषु च।

सुरास्नानसमं तैलं तस्मात्तैलं विवर्जयेत् ॥

प्रगे प्रातःकाले।

गारुडे,—

उपोषितस्य व्रतिनः कृत्तकेशस्य नापितैः।

तावच्छ्रीस्तिष्ठति प्रीता यावत्तैलं न संस्पृशेत् ॥

ब्रह्माण्डपुराणे,—

सन्तापकीर्त्तिमरणं धर्म्ममारोग्यमेव च ।

दारिद्र्यं सर्व्वकामाप्तिरभ्यङ्गे भास्करादिषु ॥ इति

रविकुजगुरुशुक्रवारेष्वपि निषेधः ।

समाचारस्तु स्त्रीणामेव वारवर्जनविचारो न पुंसाम् ।

यत्तु चिन्तामणौ,—

पञ्चमी दशमी चैव पूर्णिमा च त्रयोदशी ।

एकादशी द्वितीया च द्वयोरपि च पक्षयोः ॥

अभ्यङ्गस्नानपानाद्यैर्योऽत्र तैलं निषेवते ।

चतुर्णां तस्य वृद्धिः स्याद्धनापत्यबलायुषां ॥

पूर्णिमायामपि धनादिकामस्य विधिबलान्निषेधाभावः, निषेधस्तु निष्कामस्य, तत्र चित्रादिनक्षत्रयोगेऽपि विहितत्वादेव न दोषः, पर्व्वणि तु विशेषमांसभक्षवत् ।

तथाच शिष्टाः पठन्ति,—

दशम्यां तैलमस्पृष्ट्वा यः स्नायादविचक्षणः ।

चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशोबलम् ॥

तदुपासनमात्रे नित्यव्रतसिद्धया काम्यव्रतानुष्ठानाभावे बोध्यं ।

देवलः,—

शिरोऽभ्यङ्गावशेषेण तैलेनाङ्गं विलेपयेत् । नेति सम्बन्धः, शिरःकार्य्यार्थं पृथगेव तैलमित्यर्थः, तिथिनक्षत्रयोस्तैलादिनिषेधस्तु तद्यामिमात्र एव, निषेधस्तु निवृत्त्यात्मा कालमात्रमपेक्षते इति स्मृतेः ।

संक्रान्तौ तु तदवच्छिन्नाहोरात्रे, संक्रान्तिसमयस्याति-सूक्ष्मत्वेन दुर्लभत्वात्तदवच्छिन्नाहोरात्रस्यैव ग्रहणात् । अतीतानागते पुण्ये इत्यादि वचनानां तु दानविषयत्वमेव न तैलस्त्रीमांस-वर्जनविषयत्वम् ।

पुण्यं नाम विहितविधिर्द्वन्द्वं इति निषेधस्य पुण्यत्वाभावात् ।

सर्व्वदा च तिल. स्नानं पुण्यं व्यासोऽब्रवीन्मुनिरिति वचनान्निषेधाभावाच्च तिलपिष्टेन सर्व्वदिने न दोषः ।

यत्तु चिन्तामणौ,—

तथा सप्तम्यमावास्यासंक्रान्तिग्रहणेषु च ।

धनपुत्रकलत्रार्थी तिलपिष्टं न संस्पृशेत् ॥ इति,

तथा सर्व्वदा स्नानविधिपुण्यतावाक्यबलाद्धनपुत्रकामस्य काम्यो-निषेधः ।

यत्तु,-

प्रतिपद्यनपत्यस्य द्वितीयायामपत्नीकः ।

दशम्यामधनं सर्व्वं हन्ति तत्र त्रयोदशी ॥

तदारोग्यस्नानविषये राजमार्त्तण्डे उपसंहारात्तत्परमेव, सर्व्वदा पुण्यतावचनादेव ।

शिष्टाः पठन्ति,—

श्रीकामः सर्व्वदा स्नानं कुर्य्यादामलकैर्द्विजः ।

तुष्यत्यामलकैर्व्विष्णुरेकादश्यां विशेषतः ॥

गङ्गास्नानाधिका धात्री प्रोक्ता माधववासरे ।

विघ्नानि नैव जायन्ते धात्रीस्नानेन वै नृणाम् ॥

अत्र विशेषः,—

नवम्यां दर्शसप्तम्यां संक्रान्तौ रविवासरे ।

चन्द्रसूर्य्योपरागे च स्नानमामलकैस्त्यजेत् ॥

एतच्च श्रीकामनाभावेऽवगन्तव्यं,—

इदञ्च मलापकर्षणस्नानस्यावश्यकर्त्तव्यत्वात् तैलनिषेधदिने तिलपिष्टेनामलकपिष्टेन वह्निरुद्धृतोदकेन मलापकर्षणस्नानं कृत्वा माध्याह्निकस्नानारम्भः कार्य्यः ।

चतुर्थे च तथा भागे स्नानार्थं मृदमाहरेत् ।

तिलपुष्पकुशादीनि स्नानञ्चाकृत्रिमे जले ॥

तत्र स्नानदेशाः, मनुः,—

नदीषु देवखातेषु तड़ागेषु सरःसु च ।

स्नानं समाचरेन्नित्यं गर्त्तप्रस्रवणेषु च ॥

देवखातत्वं भुवनेश्वरे विन्दुह्रदादौ,

तड़ागः सहस्रधन्वन्तरमितः, सहस्रेण तड़ागः स्यादिति-वचनात् ।

सरांसि इन्द्रद्युम्नाल्लोदप्रभृतीनि,

गर्त्ताश्छन्दोगपरिशिष्टे,

धनुःसहस्राण्यष्टौच गतिर्य्यासां न विद्यते ।

न ता नदीशब्दवहा गर्त्तास्ताः परिकीर्त्तिताः ॥ इति,

शङ्खः,—

सरःसु देवखातेषु तीर्थेषु च नदीषु च ।

स्नानमेव क्रिया यस्मात् स्नानं पुण्यफलं स्मृतम् ॥

स्नानमेव क्रियेति मध्याह्नस्नानस्य षोढ़ास्नाने क्रियापदवाच्यत्वा-
दित्यर्थः।

मार्कण्डेयः,—

भूमिष्ठमुद्धृतात्पुण्यं ततः प्रस्रवणोदकं।
ततोऽपि सारसं पुण्यं ततः पुण्यं नदीजलम्॥
तीर्थं तोयं ततः पुण्यं महानद्यम्बु पावनम्।
ततस्ततोऽपि गङ्गाम्बु पुण्यं पुण्यस्ततोऽम्बुधिः॥

महानद्यनन्तरं, साधुपरिगृहीतमिति,

शङ्खः,—

सर्व्वे प्रस्रवणाः, अत्र सुखार्थस्नानस्यैव निषेधो न त्वदृष्टार्थस्य।
तदुक्तं,

भोगाय क्रियते यत्तु स्नानं यादृच्छिकं नरैः।
तन्निषिद्धं दशम्यादौ नित्यं नैमित्तिकं न तु॥

आपस्तम्बः,—

शिरोमज्जनमप्सु वर्जयेदस्तमिते च स्नानम्।

प्रातःस्नानप्रकरणे नित्यं नैमित्तिकमित्यादिनित्यस्नानं प्रकीर्त्तित-
मित्यन्तं लिखितम्।

तदनन्तरं शङ्खः,—

चण्डालचितियूपादि स्पृष्ट्वा स्नातां रजस्वलाम्।
स्नानार्हस्तु यदा स्नाति स्नानं नैमित्तिकं हि तत्।
पुष्यस्नानादिकं यत्तु दैवज्ञविधिचोदितम्॥

तद्धि काम्यं समुद्दिष्टं ना कामस्तत्प्रयोजयेत् ।
अमुकामः पवित्नाण्यर्चयिष्यन् देवतापितॄन् ॥
स्नानं समाचरेद्यस्तु क्रियाङ्गं तत्प्रकीर्त्तितं ।
मलापकर्षणं नाम स्नानमभ्यङ्गपूर्वकं ॥
सरित्सु देवखातेषु तड़ागेषु सरस्सु च ।
स्नानमेव क्रिया यस्मात् स्नानात्पुण्यफलं स्मृतं ॥ इति

तत्र,

[1]प्रातःस्नानं नित्यकृतं, मध्याह्नस्नानं चोच्यते, क्रियास्नानं चावभागे चोच्यते, कर्माङ्गस्नानं तत्कर्माङ्गस्नानं कृच्छ्राद्यङ्गनिवस्नानादीत्युक्तम् ।

मलापकर्षस्नानं मलक्षयहेतुत्वाद्दृष्टार्थं । नात्रेतिकर्त्तव्यतापेक्षया, पुत्रस्नानादिकाम्यस्नानमपि दृष्टार्थत्वादेव नेति कर्त्तव्यतापेक्षं, यत्तु तीर्थादिषु काम्यस्नानं तददृष्टार्थत्वादितिकर्त्तव्यतापेक्षं सत् प्रातःस्नानवद्वाचनिकातिदेशाभावेऽपि चोदनालिङ्गातिदेशेनैव मध्याह्नस्नानधर्मान् गृह्णाति ।

तथा ब्राह्मे,—

कृत्वाग्राद्दैदिकैर्मन्त्रैरभिषेकं च मार्जनमित्यादि समुद्रस्नानेलिङ्गदर्शनं, यत्तु, ग्रहोपरागसंक्रान्त्यलभ्ययोगादौ नैमित्तिकं स्नानं तदप्यदृष्टत्वादेव तीर्थस्नानवत्सधर्मकं ।

---

(१) तत्र प्रातःस्नानं नित्यकृतं मध्याह्नस्नानं चोच्यते ।

तथाच,—

एवमादिकाम्ये ब्रह्मपुराणीयतर्पणविधिः सचर्मकाले लिङ्ग, यत्तु चण्डालादिस्पर्शनिमित्तं स्नानं तत्र नेतिकर्त्तव्यता।

तथाच,—

अजीर्णेऽभ्युदिते वान्ते श्मश्रुकर्मणि मैथुने।
[1]दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते॥

अजीर्णेऽभ्युदितेऽशुद्धोद्गारादिनाभिव्यक्ते, एतच्चोत्तरकालस्नानप्राप्त्यर्थमजीर्णावस्थायां स्नाननिषेधात् स्नानमात्रमदृष्टार्थेतिकर्त्तव्यतारहितं।

आपस्तम्बः,—

अस्पृश्यस्पर्शने वान्ते अश्रुपाते क्षुरे भगे।
स्नानं नैमित्तिकं कार्य्यं देवपित्रादिवर्जितं॥ इति,
नित्यं नैमित्तिकं काम्यं त्रिविधं स्नानमिष्यते।
तर्पणं तु भवेत्तत्र अङ्गत्वेन विनिश्चितं॥ इति,

ब्रह्मपुराणविहितस्य तर्पणस्याभावेनाद[2]ष्टार्थेतिकर्त्तव्यतामात्रह्रस्तिं बोधयति।

तथाच योगी याज्ञवल्क्यः,

तूष्णीमेवावगाहेत यदा स्यादशुचिः पुमान्।
आचम्य प्रयतः पश्चात् स्नानं विधिवदाचरेत्॥

(१) दुःस्वप्ने दुर्जनस्पर्शे स्नानमात्रं विधीयते।
(२) शरीरशुद्धिकत्वात्।

इह मध्याह्नस्नानप्रकरणाबाधाय स्नानं विधिवदाचरेदिति मध्याह्न-स्नानानुवादः, तुष्णीमेवावगाहेतेत्येतावद्विधीयते, अनुवादप्रयोजन-ञ्चाशुचेर्मन्त्राद्युच्चारणानधिकारात् स्पर्शननिमित्तस्नानस्य मध्याह्न-स्नानेन सह तन्त्रानुष्ठानं नास्तीति ज्ञापकं, अतएव प्रातः-स्नानस्यापि दृष्टादृष्टकरत्वेन शरीरशुध्यर्थत्वान्माघवैशाखादि-काम्यस्नानं न प्रातःस्नानेन सह तन्त्रेणानुष्ठेयं भवतीति केवलं सन्ध्यातः पूर्व्वमेव पृथगनुष्ठेयं तद्विस्तरस्तु वैशाखमासकृत्ये काल-सारे द्रष्टव्यः, तस्माच्चण्डालादिस्पर्शननिमित्तशुध्यर्थस्नाने धर्म्मा-पेक्षा, नात्र नद्यादिनियमः, उद्धृतेनानुद्धृतेन वा सर्व्वाङ्गजलयोग-रूपस्नानपदार्थानुष्ठानरूपमात्रमेव, एवंमलापकर्षणे काम्यपुष्या[1]दि-दृष्टार्थस्नाने च बोध्यम् ।

तथाच शङ्खः,—

नित्यं नैमित्तिकं काम्यं क्रियाङ्गं मलकर्षणम् ।
तीर्थाभावेऽपि कर्त्तव्यमुष्णोदकपरोदके ॥ इति,

एवं कर्म्माङ्गस्नानस्यादृष्टार्थत्वेऽपि तत्र तर्पणविध्यभावलिङ्गेन न स्नानेतिकर्त्तव्यतानिर्द्देशः ।

ब्रह्माण्डे तु,—

मृते जन्मनि संक्रान्तौ ग्रहणे चन्द्रसूर्य्ययोः ।
अस्पृश्यस्पर्शने चैव न स्नायादुष्णवारिणा ॥

अत्र व्याधिवृद्ध्याशङ्कया वृष्ट्यादिकालदोषेण जलाशयगमनासामर्थ्ये

---

(१) पुष्यादि—

सर्व्वाङ्गसंयोगक्षमजलासम्भवे वा मन्त्रस्नानादयोऽनुकल्पाः, प्रातः-स्नानं विधायान्ते च,

एष वो विहितः कृत्स्नः स्नानस्य परमो विधिः।
गुणाश्च तस्याचरणे दोषास्तस्यानिषेवणे॥

इत्युपसंहृत्य,—

असामर्थ्यात् शरीरस्य कालशक्त्याद्यपेक्षया।
मन्त्रस्नानादयः सप्त केचिदिच्छन्ति सूरयः॥

इति स्नानानुकल्पविधेः प्रातःस्नानवन्माध्याह्निकस्नानेऽप्यविशेषात् प्रवृत्तेः।

सन्ध्याप्रकरणे च, उभे सन्ध्ये च स्नातव्यमित्युक्त्वा,

कालदोषादसामर्थ्यात् न शक्नोति यदा ह्यसौ।
तदा स्नात्वा ऋषिभ्यस्तु मन्त्रैर्दृष्टन्तु मार्ज्जनं॥ इति

सन्ध्यासाद्गुण्ये स्नानफलेऽनुकल्पत्वेनोक्तं।

अप्रायत्ये समुत्पन्ने स्नानमेव समाचरेत्।

इति चण्डालादिस्पर्शे स्नानमेव, तत्र निष्कर्षः, कर्म्मसाद्गुण्यं स्नानेन मार्ज्जनाद्यनुकल्पेन वा, अप्रायत्यनिवृत्तिस्तु स्नानादेव, लाला-दिलेपाशुद्धौ स्नानेन क्षालादिना वा।

योगियाज्ञवल्कीये,—

अम्भोऽवगाहनं स्नानं विहितं सार्व्ववर्णिकम्।
मन्त्रवत् प्रोक्षणं वापि द्विजातीनां विशिष्यते॥

तर्पणन्तु शुचिः कुर्य्यादित्यत्र शुचिर्मन्त्रस्नानादिनाऽपीति लक्ष्मी-धरः, काम्यनैमित्तिकस्नाने तु नानुकल्पप्रवृत्तिः, तत्राप्रायत्य-

निमित्तान्युच्यन्ते, गौतमः पतितचण्डालसूतिकोदक्याशवस्पृष्ट-स्पर्शने सचेलोदकोपस्पर्शनात् पूतो भवति।

अत्र उपस्पर्शनं स्नानं सचेल इति लिङ्गात्, अत्र तु स्पृष्टिपरं शवस्पृष्टिपरमित्येके, अन्ये त्वेकपदोपात्तत्वादविशेषात् सर्व्वत्र सम्बन्ध इत्याहुः, अत्र वर्त्तमानचण्डालस्पृष्टस्य स्पर्शने स्नानं। अतीतचण्डालादिस्पर्शस्याकृतस्नानस्य स्पर्शने तु—

शातातपः,—

अशुचिं संस्पृशेद्यस्तु एक एव स दुष्यति[1]।
तं स्पृष्ट्वान्यो न दुष्येत[2] सर्व्वद्रव्येष्वयं विधिः॥

देवलः,—

उपस्पृश्याशुचिस्पृष्टं तृतीयं वापि मानवः।
तथैव हस्तौ पादौ च प्रक्षाल्याचम्य शुध्यति॥

चण्डालः प्रथमस्तत्स्पर्शी द्वितीयः, तत्स्पृष्टस्पर्शी तृतीयः, अतः-अतीतचण्डालस्पर्शस्य द्वितीयस्पर्शे यदाचमनं तदाकामतः, कामतस्तु तत्रापि स्नानमेव,

ततस्पृष्टिनं स्पृशेद्यस्तु स्नानं तस्य विधीयते।
अर्द्धमाचमनं प्रोक्तं द्रव्याणां प्रोक्षणं तथा॥ इति,

स्मृत्यन्तरादित्याहुः, शवस्पृष्टस्पर्शे त्वकामतोऽपि स्नानं, दोषगुरुत्वा

---

(१) न तु पूर्वेषां स्पृष्टत्वरेषां तु वारिणा।
(२) दुष्यति।
(३) दुष्येत।

दित्यवधेयं, गुरुत्वं च वक्ष्यमाणच्यवनस्मृतौ पृथक् निर्देशात्, शवस्पृष्टशब्दस्य तत्रातीतशवस्पर्शनद्रव्यपरत्वात्।

बौधायनः, चण्डालेन सहाध्वगमने सचेलस्नानम्।

तेन सहैककार्य्येणाध्वगमनं,

यस्तु छायां श्वपाकस्य ब्राह्मणोऽप्यधितिष्ठति।

सचेलो जलमाप्लुत्य घृतं प्राश्य विशुध्यति।

आपस्तम्बः,

एकशाखां समारूढश्चण्डालादिर्भवेद्यदि।

ब्राह्मणस्तत्र निवसन् स्नानेन शुचितामियात्॥

एकशाखाशब्दश्चैकावयवाद्युपलक्षणं, अनेकोद्वार्यें दारुशिले भूमिसमे इति वचनादनेकपुरुषवाह्यावयविपरं,

चण्डालं पतितं चैव दूरतः परिवर्जयेत्।

गोवालव्यजनादर्वाक् सचेलो जलमाविशेदत्यन्तसान्निध्ये स्नानम्।

तेन, युगं च द्वियुगं चैव त्रियुगं च चतुर्युगम्।

चण्डालपतितोदक्यासूतिकानामधःक्रमादिति युगादिदेशपरिहारोक्तावपि तन्मध्यगमनं न स्नाननिमित्तं। षड़शीत्यङ्गुलयुगं।

पराशरः,—

चैत्यवृक्षश्चितिर्यूपश्चण्डालः सोमविक्रयी।

एतांस्तु ब्राह्मणः स्पृष्ट्वा सचेलो जलमाविशेत्॥

चितियूपयोः कर्मसमाप्तौ स्पर्शनं स्नाननिमित्तं। वार्त्तिके तु, कर्ममध्ये-वैधस्पर्शभिन्नस्पर्शे स्नानमित्युक्तम्। च्यवनः, स्नानं प्रेतधूमदेवद्रव्योपजीविनं।

श्वामयाजिनं चितिकाष्ठं, मद्यं मद्यभाण्डम् ।

सस्नेहमनुष्यास्थिशवस्पृष्टं महापातकिनं शवं स्पृष्ट्वा सचेलमम्भोऽवगाह्य उत्तीर्य्याग्निमुपस्पृशेत् ।

गायत्र्यष्टशतं जपेत्, घृतं प्राश्य पुनःस्नात्वा द्विराचमेत् ।

इदं कामकृतेऽभ्यस्तेऽग्न्युपस्पर्शनादिकमधिकम् ।

देवद्रव्योपजीवी, देवतायै दत्तस्य हिरण्यादेरपहारेण जीवति यः ।

तथा,—

देवार्च्चनपरो विप्रो वित्तार्थी वत्सरत्रयम् ।

असौ देवलको नाम हव्यकव्येषु गर्हितः ॥

स्पृष्ट्वा देवलकं चैव सवासा जलमाविशेत् ।

कालिकापुराणे,—

स्पृष्ट्वा रुद्रस्य निर्माल्यं सवासा आप्लुतः शुचिः, इदं वेधनिर्माल्यग्रहणव्यतिरिक्तपरम् ।

स्मृतिः,—

शैवान् पाशुपतान् स्पृष्ट्वा वैड़ालव्रतनास्तिकान् ।

विकर्म्मस्थान् द्विजान् शूद्रान् सचेलो जलमाविशेत् ॥

शैवपाशुपतपदं वामशैवपाशुपतपरं ।

योगी याज्ञवल्क्यः,-पाशुपतस्य प्रामाण्योक्तेः ।

कौर्म्मे,—

अन्यानि चैव शास्त्राणि लोके संमोहनानि च ।

वेदवादविरुद्धानि मयैव कथितानि च ॥

"वामं पाशुपतं शैवं दक्षिणे चैव भैरवं" इतिप्रमाणस्य पृथक् निर्देशात्।

मनुः,—

अनुगम्येच्छया प्रेतं ज्ञातिमज्ञातिमेव वा।
स्नात्वा सचेलं स्पृष्ट्वाग्निं घृतं प्राश्य विशुध्यति॥

शुद्धात्यनुवृत्तौ, विष्णुः, सर्व्वस्यैव हि प्रेतस्य वान्धवैः सहाश्रुपातं कृत्वा स्नाने, अकृतेऽस्थिसंचयने सचेलस्नानेन।

मार्कण्डेयपुराणे,—

अभोज्यसूतिकाषण्डमार्जाराखुश्वकुक्कुटाः।
पतिता विद्धचण्डालमृतहाराश्चधर्म्मवित्॥
संस्पृश्य शुद्ध्यति स्नानादुदक्याग्रामशूकरौ॥

अत्र मार्जारपदं स्थिरस्थित मार्ज्जारपरम्। मार्ज्जारचंक्रमे शुचिरिति स्मृत्यन्तराचंक्रमणे मार्ज्जारस्पर्शे न स्नानम्।

आखुपदं कुक्कुटपदसमभिव्याहाराद्ग्राम्याखुपरम्।

एवं मार्जारमूषिकाशनशय(१)म्बुविप्रुषो नित्यं मेध्या इति।

मार्जारमूषिकस्पर्शे कर्म कुर्व्वन्नपः स्पृशेत्।
विशुध्यत्युपवासेन पुनः कृच्छ्रेण चैव हि॥

आरण्यकुक्कुटवराहस्पर्शे स्नानं, स्मृत्यन्तरात् खरोष्ट्रस्पर्शे स्नानं।

अत्र विशेषमाह शातातपः—

(१) शयाम्बु।

रजकश्चर्मकारश्च व्याधजालोपजीवकौ ।
चैलनिर्णेजकश्चैव नटः शैलूषकस्तथा ॥
मुखे भगस्तथा वेश्या वनिता सर्ववर्णगा ।
चक्री ध्वजी वध्यघाती ग्राम्यकुक्कुटशूकरौ ॥
एभिर्यदङ्गं संस्पृष्टं शिरोवर्जं द्विजातिषु ।
तोयेन क्षालनं कृत्वा आचान्तः शुचितामियात् ।

शिरोवर्जमिति शिरःपदं करव्यतिरिक्तमानाभ्यूर्द्ध्वभागपरमित्युक्तमेव, अत्र ग्रामकुक्कुटवराहाणामत्यन्तामेध्यत्वादकामतोऽधमाङ्गस्पर्शे आचमनं, कामतस्तु स्नानमेव ।

विष्णुपुराणे, उदक्यासूतिकाशान्त्यावसायिमृतहारस्पर्शे स्नात्वा द्वादशवारमृद्धर्षणं मैथुने वमने चेत्युक्तं ।

व्यासः,—

भासवानरमार्जारखरोष्ट्राणां शुनां तथा ।
शूकराणाममेध्यं च स्पृष्ट्वा स्नायात् सचेलकं ॥

लघुहारीतः,—

श्वविष्ठां काकविष्ठां च कंकगृध्रनरस्य च ।
अधोच्छिष्टस्तु संस्पृश्य सचेलो जलमाविशेत् ॥

नरविष्ठा परकीया च, अधोच्छिष्टः, मूत्रपुरीषशुक्रोत्सर्गेणाशुचः ।

शंखः,—

रथ्याकर्दमतोयेन ष्ठीवनाद्द्येन वाप्यथ ।
नाभेरूर्द्ध्वं नरः स्पृष्टः सद्यः स्नानेन शुद्ध्यति ॥

ब्राह्मे,—

उच्छिष्टेनाथ विप्रेण विप्रः स्पृष्टस्तु तादृशः।

उभौ स्नानं प्रकुरुतः सद्य एव समाहितौ॥

तथा,—

पलाण्डुलशुनस्पर्शे स्नात्वा नक्तं समाचरेत्।

मनुः,—वान्तो विरक्तः स्नात्वा तु घृतप्राशनमाचरेत्

आचामेदेव भुक्तान्नं स्नानं मैथुनिनं स्मृतम्॥

भुक्तान्नं वान्त इत्यर्थः, तेन सद्यो वान्ते आचमनमात्रं, मैथुनं ऋतौ।

ब्राह्मे,—

मानुषास्थि तु संस्पृश्य दग्धं सस्नेहमेव वा।

स्नायाद्रां संस्पृशेत् सूर्यं पश्येद्विष्णुमनुस्मरेत्॥

मानुषास्थिग्रहणमभक्ष्यपञ्चनखास्थिपरम्।

स्मृत्यन्तरसम्वादात्, देवलः,—

मानुषास्थिवसां विष्ठामार्त्तवं मूत्ररेतसी।

मज्जानं शोणितं वापि परस्य यदि संस्पृशेत्॥

स्नात्वापमृज्य लेपादीनाचम्य स शुचिर्भवेत्।

तान्येव स्वानि संस्पृश्य पूतः स्यात्परिमार्ज्जनात्॥ क्षालनात्।

विष्णुः,—

नाभेरधस्तात्प्रवाहुषु नायकैर्मलैः सुराभिर्मद्यै-

र्वोपहतो मृत्तोयेन तदङ्गं प्रक्षाल्य तदेनसः[1] शुद्धिर्भवति॥

(१) तद्देतः शुद्धोभवति।

अत्यन्तोपहतस्य तदङ्गं मृत्तोयैः प्रक्षाल्य स्नानेन ।

चक्षुष्युपहते उपोष्य स्नात्वा पञ्चगव्येन शुद्धो भवति ।

दशनोपहतश्च, प्रबाहुर्हस्तः, अत्यन्तोपहतः ।

नाभ्यूर्द्धकायः स्पृष्टः,

अङ्गिराः,—

इन्द्रियेषु प्रविष्टं स्यादमेध्यं यदि कर्हिचित् ।

मुखेऽपि संस्पृश्य गतं तत्र स्नानं विशोधनम् ॥

विशोधनं इन्द्रियमुखप्रक्षालनं स्नानं च कार्य्यं ।

हारीतः,—स्नातः शुद्धो भवति अजीर्णवान्तश्मश्रुकर्मायोनिपशु-दिवामैथुनगमने च ।

सुमन्तुः,—अनुदकमूत्रपुरीषकरणे, नखकेशरुधिरप्राशने सद्यः स्नानं घृतकुशहिरण्योदकप्राशनम् ।

लघ्वापस्तम्बः,—

यद्विष्ठितं काकबलाकिकाभ्याममेध्यलिप्तश्च भवेच्छरीरम् ।

श्रोत्रे मुखेन प्रविशन्तु सम्यक् स्नानेन लेपोपहतस्य शुद्धिः ॥

काकबलाकिकाभ्यां यस्योपरि विष्ठा कृता तत् शरीरममेध्य-लिप्तं स्नानेन शुद्ध्यति ।

श्रोत्रमुखप्रवेशे गुरुप्रायश्चित्तं, अत्र पादेतराङ्गेन श्मशानस्पर्शे-सम्वत्सरपर्य्यन्तं नित्यकर्म्माकारिस्पर्शे स्नानं स्मृत्यन्तरात्, कृष्णा-जिनदानग्राहिस्पर्शे स्नानं,

अस्पृश्योऽसौ द्विजो राजन् चितियूपसमो हि सः ।

इति यूपसाम्येन निन्दनात्, ग्रामयाजकस्य स्पर्शे स्नानं स्मृत्य-

स्मरात्, चिताधूमस्पर्शे च, पुत्रजन्मस्नाननिमित्तं बन्धुमरणञ्च, ग्रहणमुक्त्योरपि स्नाननिमित्तत्वं,

यत्तु चण्डालादिस्पर्शे पुनर्मन्त्रं जपेत्, महाव्याहृतिभिः समाज्याहुतीर्जुहुयादिति तत्कामतोऽभ्यासे,

स्मृत्यन्तरेऽस्थिचयनात् पूर्व्वमाबान्धवरोदने स्नात्वोपोष्य शुद्धिः, शूद्रे त्रिरात्रेण,

पराशरः—

अस्तङ्गते यदा सूर्य्ये चण्डालपतितं स्त्रियं।
सूतिकां स्पृशतश्चैव कथं शुद्धिर्भविष्यति॥
स्नानमाचमनं प्रोक्तं दिवोद्धृतजलेन च।

दिवोद्धृताभावे तु,—

जातवेदाः सुवर्णञ्च सोममार्गस्तथैव च।
ब्राह्मणानुमतेनैव स्पृष्ट्वा त्वाचम्य शुद्ध्यति॥

अग्निस्वर्णकाशानां एकं स्पृष्ट्वा ब्राह्मणानुज्ञया जलमुद्धृत्य स्नायादित्यर्थः।

अत्र हेतुमाह, "आचान्तमनुगर्त्तञ्च निशि स्नानं न विद्यते"। अनुगर्त्तं भूमिष्ठजले स्नानं, आचान्तमाचमनञ्च निशि न विद्यत इत्यर्थः।

अत्रापवादः,—

अधोवायुसमुत्सर्गे प्रहासेऽनृतभाषणे।
मार्ज्जारमूषिकस्पर्शे आक्रुष्टे क्रोधसम्भवे॥
निमित्तेष्वेषु सर्व्वेषु कर्म्म कुर्व्वन्नपः स्पृशेत्।

त्रिष्टा:,—

विष्णवालयसमीपस्थान् विष्णुसेवार्थमागतान् ।
चण्डालपुक्कशान् वापि स्पृष्ट्वा न स्नानमाचरेत् ॥

इदञ्चोत्सवादौ बहुजनसङ्कुले,—

तीर्थे विवाहे यात्रायां संग्रामे देशविप्लवे ।
नगरे ग्रामदाहे च स्पृष्टास्पृष्टं न दुष्यति ॥

स्पृष्टमस्पृष्टमिति स्पृष्टास्पृष्टं,

आचारपल्लवे,—

कुण्डे मञ्चे शिलापृष्ठे नौकायां गजपृष्ठयोः ।
संग्रामे संक्रमे चैव स्पर्शदोषो न विद्यते ।

स्मृतिः,—

वाक्प्रशस्तं चिरातीतमनेकान्तरितं लघु ।

शुद्धमित्यर्थः, चिरातीतं उच्छिष्टभाण्डखर्परादिकं शुद्धं मार्गादिस्थं न स्पर्शने स्नाननिमित्तम् ।

अनेकपरम्परया चण्डालादिस्पर्शनं न स्नाननिमित्तं, एकान्तरिते स्नानमित्युक्तमेव, लघु उच्छिष्टाद्यवाप्यतत्स्पृष्टमारुतास्पृश्याग्निधूमादिकं नाशुद्धम् ।

तथा,—

मक्षिकासन्ततिर्धारा, सन्ततिः सन्तन्यमानं द्रवादि धारा, जलक्षीरघृतादेः पात्रादधः पतति तद्धेऽमेध्यसंस्पृष्टाऽपि पात्रं नरं वा न दूषयति ।

तथा,—

पादुके वापि गृह्णीयादस्पृश्यस्पर्शवारणी ।

तथा,—

सप्तरात्रोषितां विष्ठां वशिष्ठः प्राह मृत्तिकां ।

द्रवत्वाप्रत्यभिज्ञायमाने गन्धाद्यभावे च बोध्यम् ॥

तथा,—

रथ्याकर्द्दमतोयानि नावः पन्थास्तृणानि च ।

मारुतेनैव शुध्यन्ति पक्वेष्टकचितानि च ॥

तथा,—

पादौ शुची ब्राह्मणानां इति, पदा स्पृष्ट्वा चामत इत्युक्ता शुचेरपवादः, इत्यादि वाक्यानां आचारोपष्टम्भान्महाजनपरिग्रहाच्च प्रामाण्यं, इति नैमित्तिकस्नानादि ।

अथ जलशुद्धिः,

विष्णुः,—

भूमिष्ठमुदकं शुद्धं वितृष्णा यत्र गौर्भवेत् ।

अव्याप्तं चेदमेध्येन तद्वदाकाशसंस्थितम् ॥

याज्ञवल्क्यः,—

शुचि गोतृप्तिकृत्तोयं प्रकृतिस्थं महीगतं ।

प्रकृतिस्थं रूपरसान्तरमनापन्नं, महीगतं शुद्धभूमिगतम् । आकाशगतमपि गोतृप्तिचमचेत् शुचमाचमनार्हम् ।

दिवा सूर्य्यांशुभिस्तप्तं रात्रौ नक्षत्रमारुतैः ।

सन्ध्ययोरप्युभाभ्याञ्च पवित्रं सर्व्वदा जलम् ॥

इति यमवचनमनुपहतविषयम् ।

देवलः,—

उद्धृता अपि शुध्यन्ति शुद्धैः पात्रैः समुद्धृताः ।
एकरात्रोषिता आपस्त्याज्याः शुद्धा अपि स्वयम् ॥

पर्य्युषिते हारीतः,—

सुराधाने तु यो भुंक्ते अपः पर्य्युषिताः पिबेत् ।
शङ्खपुष्पाविपक्केन त्र्यहं क्षीरेण वर्त्तयेत् ॥

विष्ण्वादिपादोदकं पर्य्युषितं अपि ग्राह्यं प्रसादत्वात् ।

पादोदकञ्च निर्माल्यं नैवेद्यञ्च विशेषतः ॥

प्रसाद इत्युक्तत्वात्,—

तस्य एकरात्रेत्यादि वाक्येन नाप्यशुद्धिः ।

किन्तु,—

अक्षीणाश्चैव गोपानादापः शुचिकराः स्मृताः ।

इति सामान्यतो यत्शुद्धिकरत्वं तत्रैव पर्य्युषितपर्य्युदासो न कार्य्या-न्तरे, नापि यज्ञपात्रप्रोक्षणार्थंजलवत् संस्कारविशेषाधानशुद्धि-हेतुत्वेऽपि, एवं न नक्तोदकपुष्पाद्यैरर्च्चनस्नानमिष्यत इत्यनेनापि देवार्च्चनस्नानयोरेव पर्य्युषितजलनिषेधो न स्नाने ।

एतेन पर्य्युषितजलपानेऽपि दोषाभावो दर्शित इति प्राचीनाः, नव्यास्तु विष्णुपादोदकं मूर्द्ध्नि काल्यमुत्थाय धारयेदिति वचनात् पादोदकस्य काल्ये ग्रहणविधानात् पर्य्युषितस्यैव काल्ये सम्भवादेक-रात्रोषिता इति निषेधस्याप्रवृत्तिः, यत्तु नक्तेत्यादिना देवपूजा-देवस्नानयोरेव पर्य्युषितजलनिषेधो न स्वस्य स्नानादाविति, तन्न,

देवस्पर्शनपदेनैव स्नाननिषेधस्य स्व(१)स्नानपरत्वौचित्यादिति, तन्न सम्यगिति प्रतीमः, एतद्वाक्यस्य केवलदेवविषयत्वात्, यदि स्नानस्य विवक्षा स्यात्तर्हि उदकस्नानयोः पौर्वापर्य्यविपर्य्यासो न संगच्छेत, आद्यपदोपादानमप्यसंगतं स्यात्, देवविषयत्वे तु आद्यपदेन चन्दनादेः परिग्रहः। माघस्नानेऽपि रात्रिजलस्य वाचनिकत्वाच्च। अस्मद्देशे स्वस्वभाण्डस्थितपर्य्युषितजलेन स्नानपानव्यवहारदर्शनाच्चेति।

वर्ज्यं पर्य्युषितं पुष्पं वर्ज्यं पर्य्युषितं जलम्।
न वर्ज्यं जाह्नवीतोयं न वर्ज्यं तुलसीदलम्॥

इति ब्रह्माण्डपुराणोक्तेः, गङ्गाजले न पर्य्युषितत्वस्य दोषः। विष्णुपादोदकेऽपि न, विष्णुपादोदकं मूर्द्ध्नीति वाक्यात्।

माघस्नाने तु,

नारदीयपुराणे,—

सरितामप्यभावे तु नवकुम्भस्थितं जलम्।
वायुना ताड़ितं रात्रौ गङ्गास्नानसमं विदुः॥

इति पर्य्युषितत्वाभावः।

स्मृत्यन्तरे,—

काले मेघोदकं ग्राह्यं वर्ज्यं त्रिदिनमेव च।
अकाले दशरात्रं स्यात्ततः शुद्धिर्विधीयते॥
अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका।
दशरात्रेण शुद्ध्यन्ति भूमिष्ठं च नवोदकम्॥

---

(१) स्नानपरत्वौचित्यादिति।

अत्रि,—

नवखातजलं दशरात्रेण शुध्यति,

अङ्गिराः,—

चाण्डालपरिगृहीतं च योऽज्ञानादुदकं पिबेत् ।
तस्य शुद्धिं विजानीयात् प्राजापत्येन नित्यशः ॥

एतदन्त्यजस्वामिकतदुपभोगसंसृष्टाम्बु[1]विषयम् ।

आपस्तम्बः,—

अन्त्यजैः खानिताः कूपा स्तड़ागा वाप्य एव वा ।
एषु स्नात्वा च पीत्वा च प्राजापत्यं समाचरेत् ॥
म्लेच्छादीनां जलं पीत्वा पुष्करिण्यां ह्रदेऽपि वा ।
जानुदघ्नं शुचि ज्ञेयमधस्तादशुचि स्मृतम् ।

जानुदघ्नादधस्तात् म्लेच्छजलाशयोऽशुद्धः । एतदप्यापदि, अन्त्यजकृतेऽपि तड़ागादौ संपर्काभावे तदुत्सृष्टे वा आपदि [2]जलान्तरासम्भवे वचनादिदोषः ।

तथाच शातातपः,—

अन्त्यैरपि कृते कूपे सेतौ वाप्यादिके तथा ।
तत्र स्नात्वा च पीत्वा च प्रायश्चित्तं न विद्यते ॥

स्मृत्यन्तरे,—

वापीकूपतड़ागेषु दूषितेषु सरस्सु च ।
उद्धृत्य वै कुम्भशतं पञ्चगव्येन शुध्यति ॥

---

(१) संसृष्ट ।

(२) जलान्तरासम्भवे न वचनादि दोषः ।

आपस्तम्बः,—

उपानच्छ्लेष्मविण्मूत्रे ऽस्थिरक्ते मद्यमेवच।
एभिश्च दूषिते चैव कुम्भानां शतमुद्धरेत्॥

इदमल्पोपहतिविषयम्।

पराशरः,—

कूपेषु[1] पतितं दृष्ट्वा श्वशृगालञ्च मर्कटम्।
अस्थिचर्म्मादिपतनात् पीत्वामेध्या ह्यपो द्विजः॥
नारं तु कुणपं काकं विड्वराहं खरोष्ट्रयोः।
गावयं सौप्रतीकञ्च वाग्गुदं त्वामुखं[2] तथा॥
वैयाघ्रमार्क्षं सैंहं वा कूपेषु यदि मज्जते।
तड़ागस्यैव दुष्टस्य पीतं स्यादुदकं यदि॥
विप्रः शुध्येत्त्रिरात्रेण क्षत्रियस्तु दिनद्वयात्।
एकाहेनापि वैश्यस्तु शूद्रो नक्तेन शुध्यति॥

अत्यन्तोपघातविषये तु विष्णुः,—

मृतपञ्चनखात्कूपादत्यन्तोपहतोदकम्।

पीत्वा त्रिरात्रमुपवसेत्।

पुनर्विष्णुः,—

मृतपञ्चनखात्कूपादत्यन्तोपहतात्तथा।
अपः समुद्धरेत्सर्वाः शेषं वस्त्रेण शोषयेत्॥
वह्निप्रज्वालनं कृत्वा कूपे पक्वेष्टकाचिते।
पञ्चगव्यं न्यसेत्पश्चान्नवतोयं समुद्धरेत्॥

(१) तु।    (२) त्वाग्गुदं।

जलाशयेषु सर्व्वेषु स्थावरेषु सरस्सु[1] च ।
कूपवत्कथिता शुद्धिर्महत्सु च न दूषणम् ॥

अतएव न दुष्यतीत्यनुवृत्तौ नापो मूत्रपुरीषाभ्यामिति याज्ञवल्क्यीयं महाजलाशयपरम् ।

पराशरः,—

नदी वेगेन शुध्येत यत्र लेपो न विद्यते ।

देवलः,—

कश्मलाशुचियुक्तानि तीर्थतः परिवर्ज्जयेत् ॥

कश्मलं शवादि, तथाच जलावतरणं शवाद्यशुचियोगादशुद्धं चेत्तर्हि जलावतरणान्तराज्जलं ग्राह्यमित्यर्थः ।

कश्मलानि देवलेन परिभाषितानि ।
मानुषास्थिशिराविष्ठारेतोमूत्रार्त्तवानि च ।
कुणपः पूयमित्येतत्कश्मलं समुदाहृतम् ॥

यमः,—

प्रपामरण्ये घटकं च कूपे द्रोण्यां जलं कोषगतास्तथापः ।
ऋतेऽपि शूद्रात्तदपेयमाहुरापद्गतो भूमिगताः पिबेत्तु ॥

प्रपां पानीयशालास्थजलम् ।

घटकोऽत्र कूपादौ सर्वसाधारणजलोद्धरणपात्रं कलशादि तज्जलं, द्रोणी काष्ठाम्बुवाहिनी निपानमित्यर्थः तज्जलं, कोषश्चर्म्मपुटः ।

शूद्राहृतेऽपि द्विजस्वामिकमपि प्रपादिजलमित्यर्थः । आपद्गत-इति मरुदेशानां शिष्टानामपि विपत्तौ तत्पानसमाचारः ।

---

(१) सरेषु च ।

ातातपः,—

मद्यभाण्डोदकपाने छर्दिनं घृतप्राशन—

रहोरात्रं च।

शुनोच्छिष्टस्थिता आपो यदि कश्चित्पिवेद्विजः।
शंखपुष्पाविपक्केन त्र्यहं क्षीरेण वर्त्तयेत्॥

ुरच्छिष्टजलपानेऽप्येवं हारीतः, पराशरेण 'भाण्डस्थिताभोज्या-
ाम्बुपाने ब्रह्मकूर्चोपवास उक्तः, तद्वचनं वक्ष्यते,

ाथाचास्मदीयशुद्धिसारसंग्रहकारिकाः।

निर्जेन रूपेण रसेन युक्तं गोहृत्प्रियोग्यं शुचि शुद्धभूस्थम्।
व्योमस्थितं शुद्धमथैव दैवं गोतर्पकं चाचमनीयमम्बु।
अप्युद्धृतं वारि विशुद्धमुक्तं शुद्धेन पात्रेण समुद्धृते चेत्॥
विशुद्धमप्यम्बु यदेकरात्रोषितं भवेच्चेन्न हि तद्विशुद्धम्।
गोपानसंक्षीणसमाम्भसोऽन्यदप्येकरात्रोषितमम्बु पेयम्॥
स्नानाय योग्यं तु परं तु देवाभिषेकपूजादिषु नेति वृद्धाः।
गंगाजले पर्य्युषितेऽपि शुद्धि विष्ण्वादिपादोदक एवमाहुः॥
असम्भवे पर्य्युषितञ्च माघे स्नानेऽम्बु वाताहृतमाददीत।
त्र्यहोत्तरं प्रावृषि मेघतोयं शुद्धं दशाहोत्तरतोऽन्यकालम्॥
दशस्वहःस्वेव गतेषु नीरं शुद्धं भवेन्नूतनखातजातम्।
जान्वादिदघ्नाम्भसि पुष्करिण्यादौ सेतुकूपह्रदवापिकादौ॥
अन्यैः क्षतेऽप्यापदि वान्यनीराभावेन दोषस्तदसङ्ग एव।
सर्वेषु कूपादिजलाशयेषु दोषेऽल्पविष्ठादिकयोगरूपे॥

(१) भाण्डस्थिता-

शताम्बुकुम्भोद्धृतिपूर्व्वकञ्च गव्यप्रणिक्षेपणतो विशुद्धिः ।
कूपे यदा पञ्चनखस्य मृत्युः प्रभूतमद्यास्त्रविड़ादियोगः ॥
उद्धृत्य सर्व्वं जलमंशुकेन प्रोक्ष्य क्षिपेत्तत्र च पञ्चगव्यम् ।
पक्वेष्टकासंघटिते विशेषः कूपेऽनलज्वालनमेव भूयः ॥
चराचरेष्वम्बुषु शुद्धिरेवं महत्सु दोषो न जलाशयेषु ।
शुध्यन्ति नद्यः खलु वेगवत्यो वेगेऽपि दुष्यन्ति मलोपलिप्ताः ॥
जलावतारे यदि विट्शवादेः पातोऽन्यतीर्थाज्जलमाददीत ।
जलाशयाभ्यासगसत्रपातान्निपानतश्चर्म्मपुटात्प्रपायाः ॥
दत्तं द्विजेनापि जलं न पेयं मरौ विपत्तौ क्षितिगन्तु पेयम् ।

इति जलशुद्धिः ।

प्रातर्लिखितविधिना माध्याह्निकस्नानं कुर्य्यात्, अथवा अघमर्षणेन कुर्य्यात्, तद्यथा, अघमर्षणसूक्तस्य, अघमर्षण ऋषिः, अनुष्टुप्छन्दः, भाववृत्तं दैवतं, स्नाने विनियोगः, ऋतं चेत्यादि स्वरित्यन्तं वारत्रयमुक्त्वा तीर्थावाहनम् । कृत्रिमे जले गंगादि-शब्देनावाहनम्, पुनरघमर्षणं त्रिवारमुच्चार्य्य जलावर्त्तनरूपं जलाभिमन्त्रणम्, पुनस्त्रिवारमुच्चार्य्य जलचलुकपाने द्विराचमनं, पुनस्त्रिवारपाठेन मार्जनम्, जले मज्जनं त्रिवारमघमर्षणजपः, उद्धृतस्नान मन्त्रजपकाले जलकुम्भेनाभिषेचनं यावत्पाठः, ततोऽ-घमर्षणं त्रिः पठित्वा मज्जनम् ।

विष्णुस्मरणं, उद्धृतस्नानमन्त्रः,—

शक्तौ सत्यां कात्यायनीयविध्यादिना स्नायात् ।

मध्याह्ने तत्सुविस्तरमित्युक्तत्वात्, कात्यायनीय-याज्ञवल्कीय-

ाङ्गीय-बौधायनीय-वाशिष्ठानां पक्षानां विषयोऽस्मत्कृते स्नान-
ारे द्रष्टव्यः, प्रातःस्नानोक्तानि स्नानाङ्गानि तद्देशुखे विष्णुस्मरणं
ायश्चित्तं, पूर्वोक्तरीत्याचमनवस्त्रपरिधानतिलकमालाकुशादि-
हणं,

'स्नातश्चवर्णहृदयं नित्यं कुर्य्याद्द्विशांपते।
प्रियङ्गुचन्दनाभ्याञ्च बिल्वेन तगरेण च॥

ते भविष्यपुराणवचनात् नालमृत्तिकाग्रहणमिति केचित्।
कर्काचार्यास्तु समाचाराद्गङ्गामृत्तिकाग्रहणम्
इत्याहुः, ततः सन्ध्या प्रातःसन्ध्यावत्, तदनन्तरोपस्थाने
शेषः, उद्वयं उदुत्यं चित्रं तच्चक्षुः हंसः शुचिषदित्येतैरुपस्थानं
त्वा गायत्र्या ऋष्यादिस्मरणं, मन्त्रं प्रदक्षिणीकृत्य अङ्गन्यासः,
यत्रुपासनपूर्व्वमुपस्थानं, ध्येयः सदेति ध्यानम्। यथोक्तार्थज्ञाने
ायमे तिर्य्यक्पाणिना गायत्रीजपः शतमष्टोत्तरं अष्टादश वा
ार्घ्यः। ततो गायत्र्युपस्थानपूर्वकं पूर्ववत् गायत्रीविसर्ज्जनं।
ः पुनरुत्थानं वा, योगी याज्ञवल्क्यः,—

विभ्राड़ित्यनुवाकेन सूक्तेन पुरुषस्य च।
शिवसङ्कल्पेन तथा मण्डलब्राह्मणेन च॥
दिवाकीर्त्त्यैश्च सौरैश्च मन्त्रैरन्यैश्च शक्तितः।
जपयज्ञो हि कर्त्तव्यः सर्व्ववेदप्रणीतकैः॥
पवित्रैर्व्विविधैश्चान्यैर्गृह्योपनिषदा तदा।
अध्यात्मविद्या विविधा जप्तव्या जपसिद्धये॥

---

(१) स्नातश्चवर्णनं हृद्यं नित्यं कुर्य्याद्विशांपते। (२) त्नि।

अथ ब्रह्मयज्ञं स एवाह,—

प्रदक्षिणं समावृत्य नमस्कृत्योपविश्य च ।
दर्भेषु दर्भपाणिः स्यात् प्राङ्मुखस्तु कृताञ्जलिः ॥
स्वाध्यायन्तु यथाशक्ति ब्रह्मयज्ञार्थमाचरेत् ।
आकेशादानखाग्राच्च परमं तप्यते तपः ॥
यः स्रग्व्यपि द्विजोऽधीते स्वाध्यायं शक्तितोऽन्वहं ।
आदावारभ्य वेदन्तु स्नात्वोपर्य्युपरि क्रमात् ॥
यदधीतेऽन्वहं शक्त्या स स्वाध्याय इति स्मृतः ।
दर्भपाणिः पवित्रोपग्रहव्यतिरिक्तदर्भत्रयहस्तः ।

आपस्तम्बः,—

तस्य विधिरकृतप्रातराश उदकान्तं गत्वा प्रातः शुचौ देशे अधीयीत ॥

तैत्तिरीयश्रुतौ ब्रह्मयज्ञेन यक्ष्यमाणः प्राच्यां दिशि ग्रामाद्गच्छति दर्शना उदीच्यां प्रागुदिच्यां[1] वोदित आदित्ये दक्षिणत उपवीत्युपविश्य हस्ताववनेनिज्य त्रिराचामेद्द्विः परिमृज्य सकृदुपस्पृश्य शिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्य त्रिराचामते न ऋक्प्राप्णोति यद्द्विः परिमृजति ते यजूꣳषि स यत् सकृदुपस्पृशति तेन सामानि यत् सव्यं पाणिं पादौ प्रोक्षति यच्छिरश्चक्षुषी नासिके श्रोत्रे हृदयमालभ्यते तेनाथर्वाङ्गिरसो ब्राह्मणानितिहासपुराणानि कल्पान् गाथानाराशंसीः[2] प्रीणाति,

(१) उदीच्यां वोदित- ।
(२) नाराशंसीः प्रीणाति ।

दर्भाणां महदुपस्तीर्य्योपस्थं कृत्वा प्राङासीनः स्वाध्यायमधीयीत, तथा तत्रैव, दक्षिणोत्तरौ पाणिपादौ कृत्वा सपवित्रावाचा'मति-प्रतिपाद्येते तद्दै यजुस्त्रयीं विद्यां प्रत्येषी वाचो तत्परमक्षरं, यथा-भू र्भुवःस्वरित्याह तद्दै वाचः सत्यं यद्दे वाचः सत्यं तत्प्रायुङ्क्ताऽथ सावित्रीं तिरश्चाह पश्चोद्वं चिशो नवानं सविता श्रियः।

प्रसविता श्रियमेवाप्नोत्यथो प्रज्ञातदैवप्रतिपदा छन्दांऽसि प्रतिपद्यते, प्रीये मनसो स्वाध्यायमधीयीत दिवानक्तं वेत ह स्माह शौगक्षेय तत्रारण्ये वल उत वाचोत्तिष्ठन्नुतत्र विस्मृत्रासीनः उत-शयानोऽधीयीतैव स्वाध्यायं तपस्वी पूण्योभवति य एवं विद्वान् स्वाध्यायमधीते, नमोब्रह्मणे नमोऽग्नये नमः, पृथिव्यै नमः, ओषधीभ्यो नमोवाचे नमो वनस्पतये नमोविष्णवे बृहते करोमि मध्यंदिने प्रवलमधीयीत, तथा नमोब्रह्मण इति परिधानीयां तिरन्वाह, उपस्पृश्य गृहानेति ततो यत्किञ्चिद्ददासीति सा दक्षिणा, अत्र ग्रामे मनसाध्यायीतेत्यत्रेति विशेषः, अरण्ये उच्चै-रित्यनुवादः रात्रौ मनसा वाचा वेति विकल्पः, रात्रिरपि ब्रह्म-यज्ञस्य एकः कालः, शेषं प्रयोगकाले व्याख्यास्यामः।

कात्यायनः,

स चार्वाक्तर्पणात्कार्य्यः पश्चाद्दा प्रातराहुतेः।
वैश्वदेवावनान्यतोक्त'निमित्तकादिति॥

कालत्रय,

रात्रावेकः कालः स्मृत्युक्तः।

(१) सपवित्रमाचमति। (२) -न्यतोक्त-।

याज्ञवल्क्यः,—

वेदार्थवत्पुराणानि सेतिहासानि शक्तितः ।
जपयज्ञार्थसिद्ध्यर्थं विद्यां चाध्यात्मिकां जपेत् ॥

एवं वेदाध्ययनाशक्तौ ब्रह्मयज्ञे जपन् सूक्तं पौरुषं चिन्तयन् हरिमिति तावन्मात्रस्य जपः ।

अन्यच्च,

अनुष्टुप्त्रिष्टुव्गायत्री विज्ञेया स्याच्छताक्षरा ।
शताक्षरान् समावृत्य चतुर्वेदफलं लभेत् ॥

याज्ञवल्क्यः,—

सोंकारा चतुरावृत्ता विज्ञेया सा शताक्षरा ।
शत-क्षरान् समावृत्य चतुर्वेदफलं लभेत् ॥

बौधायनः,—

प्रणवो व्याहृतयः, सावित्रीत्येते ब्रह्मयज्ञा अहरहर्ब्राह्मणं किल्बिषात्पावयन्ति ।

आपस्तम्बः,

भूर्भुवः स्वः सत्यं तपः श्रद्धया जुहोमि इत्येतेनैवास्य तदहः स्वाध्यायः समाप्तो भवति, आथर्वणीयतापनीयश्रुतौ, यः प्रणवमधीते स सर्वमधीते ।

## अथ तर्पणविचारः ।

शातातपः,—

तर्पणं तु शुचिः कुर्यात्प्रत्यहं स्नातको द्विजः ।
देवेभ्यश्च ऋषिभ्यश्च पितृभ्यश्च यथाक्रमं ॥

शुचिर्मन्त्रस्नानादिनापीति लक्ष्मीधरः, एवं प्रधानतया तर्पणमुक्तम् प्रत्यहमिति वचनान्नित्यं ।

कात्यायनः,—

छायां यथेच्छेच्छरदा उपात्तः पयः पिपासुः क्षुधितो यथान्नम् ।
बालो जनित्रीं जननी च बालं योषित्पुमांसं पुरुषश्च योषितम् ॥
तथा सर्वाणि भूतानि स्थावराणि चराणि च ।
विप्रादुदकमिच्छन्ति सर्वे ह्युदककाङ्क्षिणः ॥
तस्मात् सदैव कर्त्तव्यं कुर्वंश्च महतैनसा ।
युज्यते ब्राह्मणः कुर्वन् सर्वमेतद्बिभर्त्ति हि ॥

स्नातश्चार्द्रवासा देवर्षिपितृतर्पणमम्भस्य एव कुर्य्यात् । परिवर्त्तितवासाश्चेत्तीर्थतीरमुत्तीर्य्य,—

पाद्मे,—

देवान् ब्रह्मऋषीन् सर्वान् तर्पयेदक्षतोदकैः ! यद्वा यवोदकैः, यवाद्भिस्तर्पयेद्देवानिति कात्यायनोक्तेः ।

उशना,—

न वेष्टितशिराः कृष्णाकाषायवासा वा देवर्षिपितृतर्पणं कुर्य्यात् ।

शङ्खः,—

स्नातः कृतजपो<sup>(१)</sup>ऽन्तर्जानुवदङ्मुखश्च ।

दिव्येन तीर्थेन देवानुदकेन तर्पयेत् ।

तथा,—

विना रूप्यसुवर्णेन विना ताम्रतिलेन वा ।

विना दर्भैश्च मन्त्रैश्च पितॄणां नोपतिष्ठते ॥

सुवर्णरजताभ्यां तु खड्गेनोदुम्बरेण वा ।

दत्तमक्षयतां याति पितॄणां तु तिलोदकम् ॥

शङ्खलिखितौ,—

शङ्खेनेष्टकाचिते पितॄंस्तर्पयेत् ।

शङ्खः,—

सौवर्णपात्रेण राजतौदुम्बरेण वा शङ्खेनाऽप्युदकं, पितृतीर्थं स्पृशन् दद्यादिति सौवर्णपात्रादीनां तदभावे तत्कीलकानां च संयोगपृथक्त्वन्यायेन नित्यत्वं काम्यत्वं च, तत्पात्रेणापि दाने यथा पितृतीर्थे जलसंयोगो भवेत्तथा देयमित्यर्थः ।

हैमेन सह यद्दत्तं क्षीरेण मधुना तथा ।

तदप्यक्षयतां याति पितॄणां तु तिलोदकमिति ॥

मधुक्षीरयोर्गुणफलार्थत्वं न नित्यत्वम् ।

याज्ञवल्क्यः,—

स्नातस्तु तर्पणं कुर्य्यात् पितॄणां तु तिलाम्भसा ।

---

(१) जप्यो- ।

मरीचिः,—

मुक्तहस्तं न दातव्यं न मुद्रां तत्र दर्शयेत्।

अन्यत्र,

वामहस्ते तिलान् दत्त्वा जलमध्ये तु तर्पयेत्।

मुद्रा तर्ज्जन्यङ्गुष्ठसंयोग इति लक्ष्मीधरः।

योगी याज्ञवल्क्यः,—

यदुद्धृतं प्रसिञ्चेद्वै तिलान् संमिश्रयेज्जलम्।
अतोऽन्यथा तु सव्येन तिला ग्राह्या विचक्षणैः॥

वामहस्ते तण्डुलाद्या अपि ग्राह्याः।

कूपादुद्धृतजलपक्षे पात्रान्तरे जलं पूरयित्वा तत्र तिलान् प्रक्षिप्य तत्र एव तर्पणं पात्रेण कुर्य्यात्। पात्राभावे प्रथमं वामकरमध्ये तिलान् दत्त्वा पश्चाज्जलं गृहीत्वा तर्पयेदित्यर्थः।

अङ्गस्थैः न तिलैः कुर्य्याद्देवतापितृतर्पणं, इति स्मृतेरुर्व्वादौ[1] न स्थापयेत्।

रोमकूपेष्ववस्थाप्य तिलान् यस्तर्पयेत् पितॄन्॥

तर्पितास्तेन सर्व्वे न[2] रुधिरेण मलेन चेति पराशरवचनात् स्वरोमाङ्गेष्वपि न स्थापयेत्।

तिलसंख्यानियमे मानाभावः, तथाचासम्भवे कपिञ्जलाधिकरणन्यायेन त्रिष्वेव चरितार्थत्वम्।

तिलैः सप्ताष्टभिर्व्वापि इति विष्णुपुराणीयस्य श्राद्धप्रत्याम्नाततर्पणपरत्वान्न तस्येह प्रसङ्गः।

(१) ऊर्व्वादौ। (२) सर्व्वेष।

मरीचिः,—

तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।
'तदभावे निषिञ्चेत्तु' दर्भैर्मन्त्रेण वाप्यथ ॥
पितृश्राद्धे रवौ शुक्रे सप्तम्यां निशि सन्ध्ययोः ।
संक्रान्त्यां जन्मदिवसे न कुर्य्यात्तिलतर्पणम् ॥

तत्रापवादः,—

अयने विषुवे चैव ग्रहणे चन्द्रसूर्य्ययोः ।
उपाकर्म्मणि चोत्सर्गे युगादौ पितृवासरे ॥
रविशुक्रदिने वापि न दुष्येत्तिलतर्पणम् ।
तीर्थे तिथिविशेषे च गङ्गायां प्रेतपक्षके ॥
निषिद्धेऽपि दिने कुर्य्यात्तर्पणं तिलमिश्रितं ।

तथाच पितृश्राद्धे निषेधो युगाद्ययनविषुवमृताहप्रेतपक्षव्यतिरिक्तविषयः ।

रविशुक्रदिने निषेधः, सर्व्वापवादव्यतिरिक्तविषयः, सप्तमीनिषेधस्तीर्थव्यतिरिक्तः ।

तीर्थे तिथिविशे चेत्युक्तेः ।

सन्ध्यारात्रिनिषेधेऽपवादाभावः ।

संक्रान्तिनिषेधोऽयनविषुवगङ्गाप्रेतपक्षव्यतिरिक्तविषयः । जन्मदिवसनिषेधो गङ्गाप्रेतपक्षव्यतिरिक्तविषय इति विवेकः ।

तथाचाष्टकान्वष्टकामावास्याकाम्यश्राद्धेषु तिलतर्पणं न कार्य्य-

---

(१) तदभावे निषिञ्चेत दर्भैर्मन्त्रेण वाप्यथ ।

मिति फलितं केवलं निषिद्धदिनेष्वपि श्राद्धप्रतिनिधितिलतर्पणं कार्य्यम्।

तथा,—

दर्शे स्नात्वा पितृभ्यश्च दद्यात् कृष्णतिलोदकम्।
अन्नं च विधिवद्दद्यात् सन्ततिस्तेन वर्द्धते॥

इति वचनात् सन्ततिवृद्धिकामोऽमावास्यायामपि समुदितानि स्नानतिलतर्पणश्राद्धानि कुर्य्यात्।

बौधायनः,—

पूतः पञ्चभिर्ब्रह्मयज्ञैरेभिरेवाप्सु देवतास्तर्पयति, प्रणवव्याहृतित्रय-गायत्र्यः पञ्च ब्रह्मयज्ञा तदुत्तरम्।

पुनर्बौधायनः,—

नार्द्रवासा नैकवासो दैवानि कर्म्माण्युपसञ्चरेत् पितृकर्म्माणि-चेत्येकेषाम्।

यज्ञः,—

नोदकेषु न पात्रेषु न क्रुद्धो नैकपाणिना।
नोपतिष्ठति तत्तोयं यन्न भूमौ प्रदीयते॥

यज्ञः,—

उदकेनोदकं कुर्य्यात् पितृभ्यश्च कदाचन, एवञ्च वाक्यविरोधे वाधविकल्पव्यवस्थानां परे बलीयांस इति न्यायेन व्यवस्था एवोचिता।

तथाच,—

नद्यादितीरस्थेन स्थले स्थित्वा नद्यादौ तर्पणे

क्रियमाणे जले जलप्रक्षेपः कर्त्तव्यः, गङ्गादावुद्धृतोदकेन तर्पणे स्थल एव, जलमध्ये तर्पणे जल एव ।

अतएव बृहस्पतिः,—

भूमौ यदापो दीयन्ते दाता चैव जले स्थितः ।
वृथा तद्दीयते तोयं नोपतिष्ठति कस्यचित् ॥

तथा,—

असंस्कृतप्रमीतानां स्थले दद्याज्जलाञ्जलिमिति अविशेषाद्वस्त्र-निष्पीडनादितोयं जलस्थेन स्थलस्थेन वा स्थल एव देयम् ।

तथा,—

प्रादेशमात्रमुद्धृत्य सलिलं सलिले क्षिपेत् ।

ब्रह्मयज्ञानन्तरं योगी याज्ञवल्क्यः,—

ततः सन्तर्पयेद्देवान्-ऋषीन् पितृगणांस्तथा ।
ब्रह्माणं तर्पयेत् पूर्व्वं विष्णुं रुद्रं प्रजापतिम् ॥
देवांश्छन्दांसि वेदांश्च ऋषींश्चैव सनातनान् ।
[1]आचार्य्यांश्च पुराणांश्च गन्धर्व्वानितरांस्तथा ॥
सम्वत्सरं सावयवं देवीरप्सरसस्तथा ।
तथा देवानुगान्नागान् सागरान् पर्व्वतानपि ॥
सरितोऽथ मनुष्यांश्च यक्षान् रक्षांसि चैवहि ।
पिशाचांश्च सुपर्णांश्च भूतान्यथ पशूंस्तथा ॥
वनस्पतींश्चौषधीश्च भूतग्रामं चतुर्व्विधम् ।
अन्वारब्धेन सव्येन पाणिना दक्षिणेन तु ॥

---

(१) पाठान्तरम् आचार्य्यांश्चैव गन्धर्व्वानाचार्य्यानितरांस्तथा ।

तृप्यतामिति सेक्तव्यं नाम्ना तु प्रणवादिना ।
आवाह्य पूर्व्ववन्मन्त्रैरास्तीर्य्य च शुभान् कुशान् ॥
प्रागग्रेषु सुरान् सम्यक् दक्षिणाग्रेषु वै पितॄन् ।
सव्यं जानु तदाकुञ्च्य पाणिभ्यां दक्षिणामुखः ॥
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्व्वान् पितृगणांस्तथा ।
मातामहांश्च सततं श्रद्धया तर्पयेद्बुधः ॥
प्राचीनावीत्युदकं प्रसिञ्चेद्वै तिलान्वितम् ।
यदुद्धृतं प्रसिञ्चेद्वै तिलान् सम्मिश्रयेज्जले ।
ततोऽन्यथा तु सव्येन तिला ग्राह्या विपश्चितैः ॥
दक्षिणे पितृतीर्थेन जलं सिञ्चेद्यथाविधि ।
दक्षिणेनैव गृह्णीयात् पितृतीर्थसमीपतः ॥
तिलानामप्यभावे तु सुवर्णरजतान्वितम् ।
तदभावे निषिञ्चेत्तु दर्भैर्मन्त्रेण वाप्यथ ॥
कव्यवालं नलं सोमं यममर्यमणं तथा ।
अग्निष्वात्तान् सोमपांश्च तथा वर्हिषदः पितॄन् ॥
यदि स्याज्जीवत्पितृकः एतान् दिव्यपितॄंस्तथा ।
येभ्यो वापि पिता दद्यात्तेभ्यो वापि प्रदापयेत् ॥
एतांश्च वक्ष्यमाणांश्च प्रमीतपितृको द्विजः ।
वसून् रुद्रांस्तथादित्यान्नमस्कारस्वधान्वितान् ॥
एते सर्व्वस्य पितर एष्वायत्ताश्च मानुषाः ।
आम्नाय्यांश्च पितॄन् स्वांश्च पितृप्रभृति नामतः ॥

मन्त्रैश्च देयमुदकं पितृणां प्रीतिवर्द्धनम् ।
उदीरतामङ्गीरस आयन्तुनोजि'मित्यपि ॥
पितृभ्य इति ये चेह मधुवाता इति 'त्यृचम् ।
पितॄन् ध्यायन् प्रसिञ्चेद्वै जपन्मन्त्रान् यथाविधि ॥
तृप्यध्वमिति च त्रिवैं ततः प्राञ्जलिरानतः ।
नमो व इति जप्त्वा च ततो मातामहान् सखीन् ॥
तर्पयेदानृशंस्यार्थं धर्म्मं परममास्थितः ।
माता मातृष्वसा चैव मातुलानी पितृष्वसा ॥
दुहिता च स्वसा चैव शिष्यर्त्विक्ज्ञातिबान्धवाः ।
नामगोत्रस्वधाकारैस्तृप्याः[२] स्युरनुपूर्व्वशः ॥
सवर्णेभ्यो जलं दद्यान्नासवर्णे कथञ्चन ।
पूर्व्वं स्वपितरस्तर्प्याः[३] पश्चादन्यांश्च तर्पयेत् ॥
नास्तिक्यभावाद्यश्चैतान् न तर्पयति वै सुतः ।
पिबन्ति देहनिस्रावं पितरोऽस्य जलार्थिनः ॥

अत्र पितृभ्य इत्यत्र यजुस्त्रयमेको मन्त्रः । पितृभ्यः स्वधायिभ्य इत्यादि पितरः शुन्धध्वमित्यन्तमिति बोध्यम् । स्मार्त्तकर्म्मणि परादिना पूर्व्वान्त इतिश्रौतवन्मन्त्र-परिच्छेदहेत्वदर्शनात् कण्डिकापरिच्छेदस्य स्मार्त्तविनियोगार्थ-त्वात् ।

ततः सन्तर्पयेद्दीवान्मृषीन् पितृगणांस्तथेत्यत्र ऋषितर्पणं मनुष्यतर्पणं पद्मपुराणीयं सूचितं, तेन सनकादितर्पणवत्,

(१) -नोज्जिमित्यपि । (२) तृप्यं । (३) तर्प्याः ।

मरीचिमत्र्यङ्गिरसौ पुलस्त्यं पुलहं क्रतुम्।

प्रचेतसं वशिष्ठञ्च भृगुं नारदमेव च।

एतेन सनकादि मरीच्यादि तर्पणं याज्ञवल्क्यानुक्तत्वाद्वैकल्पिकमिति निरस्तं इति केचित्।

तन्मते सनकादितर्पणं मरीच्यादितर्पणञ्च नित्यं कार्य्यमिति।

वस्तुतः कात्यायनेन ततो निवीति मनुष्यान्।

सनकञ्च सनदञ्च तृतीयञ्च सनातनम्।

कपिलञ्चासुरञ्चैव वोढुं पञ्चशिखन्तथा॥

इति सनकादय एवोक्ताः,—

ततः सनकादीनामेव तर्पणं नित्यं, यदुक्तं सनकादीनां याज्ञवल्क्यानुक्तमिति तन्न।

ततः सन्तर्पयेद्देवानृषीन् पितृगणांस्तथेति संक्षेपेणोक्ता ब्रह्मादीनां तर्पणं वदता याज्ञवल्क्येन पश्चात् ब्रह्मादीनुपवीती तु देवतीर्थेन तर्पयेत्।

निवीती कायतीर्थेन मनुष्यान् सनकादिकान्, इति सनकादय एव गृहीताः, तथाचारोऽप्यव्याहतप्रसर एव, किञ्च पञ्चपुराणविधिः शूद्रविषय इति कैश्चिदप्युक्तं, पुराणानि इत्याचार्य्यविशेषणं, पुराणाचार्य्यानिति कात्यायनीयसम्वादात्, तथा गन्धर्व्वाचार्य्यानिति, एवमितराचार्य्यानिति, सावयवमिति सम्वत्सर विशेषणम्।

दिव्यान् मनुष्यानिति कात्यायनीयसम्वादात् मनुष्ये दिव्यविशेषणं देयं, चतुर्व्विध इति भूतग्रामविशेषणं गृह्यसूत्रे उक्तम-

कर्म्मणि पुराणाचार्य्यान् गन्धर्वाचार्य्यान् इतराचार्य्यानिति तर्पणदेवतानिर्द्देशादेकत्र निर्णीतः ।

शास्त्रार्थोऽन्यत्र तथेति न्यायाच्च तथैव निर्णयः ।

अन्वारब्धेनेति वामहस्तेन बाहुस्पर्शसमाचारः ॥

पलाशशाखया पशुमन्वारभते हुत्वा वा समन्वारभेरन्नित्यादौ परम्परास्पर्शेऽन्वारम्भशब्ददर्शनात् ।

तृप्यतामिति तृपिधातोः परस्मैपदित्वेऽपि कर्त्तरि छान्द-समात्मनेपदम्, अतएवाग्रे तृप्यध्वमिति च त्रिवैँ इति बहुत्वापेक्षस्य बहुवचनस्योक्तिः ।

तथा च सर्व्वथा भावेन प्रयोगः, ब्रह्मा तृप्यतामिति कल्प-तरुकारोऽपि, तथा कर्काचार्य्योऽपि, एवं देवास्तृप्यन्तामित्यादिषु बहुषु बहुवचनान्तप्रयोगः कर्त्तव्यः ।

अत्र सनकादितर्पणे पितृतर्पणे च मन्त्रः, प्रत्यञ्जलि अभ्यसनीयः, एकस्यैव सोमयागस्य ऐन्द्रवायवादित्यादिग्रहाधीना-भ्यासवत्, अत्र त्यागो मनोमात्रव्यापारो न शब्दरूप इति बहवः, शब्दरूप इति नव्याः ।

त्रिरपः प्रीणनार्थाय देवानामपवर्ज्जनात्[1] ।

पितॄणाञ्च यथान्यायं सकृच्चापि प्रजापतेः ॥ इति

विष्णुपुराणे त्रित्वोक्तावपि,—

एकैकमञ्जलिं देवा द्वौ द्वौ च सनकादयः ।

अर्हन्ति पितरस्त्रींस्त्रीन् स्त्रियश्चैकैकमञ्जलिम् ॥ इति

---

(१) देवानामपवर्जयेत् ।

वचनात् देवतर्पणे सकृत्समाचारः।

तथा,-

न सकृत्प्रतिपद्येत मातॄणां पितृवत्तथा।

तथा मातामहानां च तत्पत्नीनां सकृत्सकृत्॥

आवाह्य पूर्व्ववन्मन्त्रैरिति याज्ञवल्क्यसंहितायामुक्तत्वात् श्राद्ध-प्रकरणोक्ता मन्त्राः।

ततो[1] विशेषः। श्राद्धे ब्राह्मणदेवपित्रावाहनम्।

इह दैवे प्रागग्रास्तृतकुशत्रये देवावाहनम्।

देवतर्पणानन्तरं तत् कुशत्रयमुत्तराग्रं कृत्वा सनकाद्या-वाहनम्। पित्र्य तु सनकादितर्पणानन्तरं तत् कुशत्रयं दक्षिणाग्रं कृत्वावाहनम्। नत्वन्यत्कुशत्रयम्। जले तर्पणे तु यदि प्रवाहा-दिनास्तरणासम्भवस्तदा गुणलोपे तु मुख्यं स्यादिति नीत्या यथाकथञ्चित् कुशान् यत्र क्वापि कृत्वा तत्रावाह्य जले जलप्रक्षेपः।

श्राद्धवदत्र अनुज्ञातभावान्न सर्व्वथावाहनप्रश्नः।

निवीती च भवेत्तत्र इति देवोत्तरं मनुष्यतर्पणार्थम्।

न [2]नीवीतित्वम्,—

मरीच्यादि तर्पणेऽपि नीवीतित्वम्[3]।

पाद्मे,—

नीवीती तु भवेत्तत्र इत्युपक्रम्य सनकादीनां मरीच्यादीनां च तर्पणमुक्त्वा अपसव्यं ततः कृत्वेति पितृतर्पणेऽपसव्यतोक्तेः।

(१) अत-। (२) नीवीतत्वं। (३) नीवीतत्वं।

तैत्तिरीयश्रुतियज्ञोपवीतप्रकरणे,—

अजिनं वासो वा दक्षिणत उपवीत्यदक्षिणं बाहुमुद्धरतेऽवधत्ते सव्यमिति यज्ञोपवीतं विपरीतं प्राचीनावीतं मानुषमिति।

अत्र विपरीतमिति दक्षिणतोंऽशेऽवधत्ते सव्यमुद्धरते एवमपसव्यं भवतीत्युक्तं, संवीतं कण्ठपार्श्वद्वयलम्बं तच्च मानुषमित्यर्थः।

यथा यज्ञोपवीतं तु धार्य्यते च द्विजोत्तमैः।
तत्र संधार्य्यते यस्मादुत्तराच्छादनं शुभम्॥

इति वचनात् उत्तरीयवस्त्रस्यापि निवीतत्वमपि कार्य्यम्।

अतएव श्राद्धप्रकरणे अपसव्यं वासो यज्ञोपवीते कृत्वेत्युक्तम्।

दक्षिणेनैव गृह्णीयादिति वचनाज्जलाञ्जलिपूरणं दक्षिणहस्तपितृतीर्थद्वारा पात्रे पाणावपि ग्रहणे तेनैव, मन्त्रैर्दर्भेणेति।

ऋजुदर्भैश्च दैवं स्यात् कार्य्यं मानुष्यकं तथा।

मूलाग्रश्लिष्टदर्भैस्तु पितृणां तर्पणं स्मृतमित्युक्ते दैवमानुषयोः ऋजवः कुशाः पित्र्ये द्विगुणीकृता मोटकरूपाः।

अग्रैस्तु तर्पयेद्देवान् मनुष्यान् कुशमध्यतः।
पितॄंश्च कुशमूलाग्रैरिति व्यवस्था मन्तव्या॥

अग्निष्वात्तानित्यादिषु त्रिषु पितॄनिति सम्बध्यते।

कात्यायनोक्तं यमतर्पणं सामवेदिनां तच्च जीवत्पितृकस्यापि।

यदि स्याज्जीवत्पितृक इति यमतर्पणानन्तरं कात्यायनोक्तेः।

यत्तु जीवत्पितृकस्य मातृमरणे मातृतर्पणसमाचारः।

येभ्यो वापि पिता दद्यात्तेभ्यो वापि प्रदापयेत्।

इत्युक्तपितामहादितर्पणपक्षाश्रयणेनेति केचित्।

वस्तुतस्तु पितृसंस्कारकत्वात् पितामहादितर्पणमकृत्वाऽपि पुत्रेण मातुः तर्पणं क्रियते। पितामहादीनां पित्रा कृतेन तर्पणेन तत्सिद्धेः।

अत्र, न जीवत्पितृकः कृष्णैस्तिलैस्तर्पणमाचरेदिति नात्र तिलतर्पणम्।

तथा,—

जीवत्पितृकस्य ताम्रपात्रमपि निषिद्धम्।

तथाच स्मृत्यन्तरे,—

गयायाम[1] कुम्भश्राद्धं तिलैस्ताम्रेश्च तर्पणम्।

न जीवत्पितृकः कुर्य्यात् कुर्व्वंस्तु पितृहा भवेत्॥ इति

नमस्कारस्वधान्वितानिति वस्त्रादितर्पणमात्रविषयम्। न कव्यवालनलादिविषयम्। व्यवायैर्न भिन्नवाक्यत्वात्। तृप्यतामिति सेक्तव्यमिति विशेषोपादानात्।

आचार्य्यांश्चेति चकारेण वस्त्रादिवन्नमस्कारस्वधान्वितत्वमतिदिश्यते। तद्वत् पितॄनित्यत्रापि स्वानिति पितृविशेषणम्। पितृप्रभृतिनामत इति पितृप्रभृतीनि पदानि नाम चेतीति द्वन्द्वः।

ततस्तृतीयार्थे तसिल्प्रत्ययः। तथाचास्मत्पिताऽमुकशर्म्मेतिप्रयोगः। नामगोत्रस्वधाकारैरिति योगियाज्ञवल्क्यवचनाद् गोत्रवाचकपदोच्चारणम्।

नामगोत्रस्वधाकारैरिति पश्चाद्युक्तमपि[2] गोत्रपदं विशेषणत्वा-

(१) श्राद्धं।

(२) पश्चादुक्तमपि।

दादौ प्रयुज्यते, 'नामगृहीतविशेषणात् विशेष्ये 'बुद्धिरिति न्यायात् विशेषणस्य पूर्व्वपाठसिद्धेः। पितृप्रभृतिपदस्य नामासमासात् पूर्व्वं निर्देशः, अत्र सन्ततिर्गोत्रजननकुलानीति पर्यायपाठात् पुत्रपौत्रपरम्परा गोत्रशब्दार्थः।

पुत्रपौत्रपरम्परामात्रं चाविशिष्टमिति विशेषलाभाय तदादिभूतेन कुशिकादिना ऋषिणावच्छिन्नं गोत्रशब्दार्थः। यद्यप्यनादिसंसारे सृष्ट्याद्यभावपक्षेऽनादिपुरुषसम्भवस्तथापि कौशिकस्य ये पित्रादयः पूर्व्वे ये च तत्पुत्रादयोऽर्वाञ्चः सर्वे कौशिकेन गोत्रान्तरेभ्यो व्यावृत्ताः कौशिकोपलक्षितपुत्रगोत्रपरम्परामात्रत्वेन गोत्रशब्दाभिधेयाः।

एवं च गोत्रशब्दस्य परम्परारूपधर्म्मवाचित्वात्तद्धर्म्मविशिष्टव्यक्तिलाभाय सगोत्र इति तेनावच्छेदकपुरुषसमानपुत्रपौत्रपरम्पराक इति विशेषणविशेष्यभावात् कौशिकसगोत्र इति निर्देशः। अतएव, सगोत्रां मातुरप्येके नेच्छन्त्युद्वाहकर्म्मणि, असगोत्रा च या पितुरिति स्मृतिषु निर्द्देशः।

यत्तु,—

अमुकामुकगोत्रैतत्तुभ्यमस्तु स्वधा नम इति ब्राह्मणवचनं तद्धर्म्मवाचिगोत्रपदस्य व्यक्तौ लक्षणया सिध्यति, स्वायत्ते प्रयोगे तु लक्षणाया अयुक्तत्वान्न सकारं विहाय प्रयोग इत्यस्मद्देशीयाः।

देशान्तरीयास्तु, मध्यपदलोपिसमासं कृत्वा सकाररहितप्रयोगमपि समादधते।

---

(१) नागृहीतविशेषणात्। (२) विशेष्यबुद्धिरिति।

यमः,—

> शर्म्मा देवश्च विप्रस्य वर्म्मा राजा च भूभृतः ।
> गुप्तो दत्तश्च वैश्यस्य दासः शूद्रस्य कारयेत् ॥

तथाच,—

ब्राह्मणस्य नामान्ते शर्म्मपदप्रयोगो देवपदप्रयोगो वेति-विकल्पः, एवं क्षत्रिये राजा वर्म्मा वैश्ये गुप्तो दत्त इति ।

> शर्म्मान्तं ब्राह्मणस्योक्तं वर्म्मान्तं क्षत्रियस्य वै ।
> वैश्यस्य गुप्तसंयुक्तं दासान्तं शूद्रजन्मनः ॥

इति वाक्यान्तरात्, इति केचित्,

वस्तुतस्तु ब्राह्मणानां पुरुषनाम्नः शर्म्मान्तत्वं स्त्रीनाम्नो-देवाता[1]न्तत्वम् ।

तथाच,—

अमुकशर्म्मा अमुकदेवीतिप्रयोगः, एवं अमुकवर्म्मा अमुका राज्ञी इति क्षत्रियस्य, अमुकगुप्त अमुका दत्तीति[2] वैश्यस्य, अमुक दासो अमुका दासीत्येव शूद्रस्य इति व्यवस्थेति वदामः ।

यत्तु अमुकदासशर्म्मा इति प्रयुज्यते तत्र दास इति दान-पात्रत्वसूचिका लौकिकी संज्ञा न शास्त्रीया ।

दासो भृत्ये दानपात्रे इति विश्वप्रकाशादिकोषात्, एवं कर-धरराथादिसंज्ञाः कुलविशेषेषु ज्ञेयाः, एवञ्च सति यैर्देवशर्म्मेति

---

(१) देव्यन्तत्वं ।    (२) अमुका दत्तेति ।

प्रयुज्यते तेषां देवशब्दस्य लौकिकसंज्ञात्वमिति न कश्चिद्विरोधः, पितॄन् ध्यायन्निति पूर्व्वदृष्टरूपेण ।

अदृष्टेष्वपि पुत्रादिसारूप्येण ।

तृप्यध्वमिति च त्रिवँ इति बहुवचनप्रयोगात् पितृपितामह-प्रपितामहास्तृप्यध्वमिदं जलं तेभ्यः स्वधा नम इति अञ्जलि-त्रयं दातव्यमिति च शब्दाच्च पूर्व्वजवाञ्जलिभिः समुच्चयः ।

नमो व इति जप्त्वा च ततो मातामहान् सखीनिति नमो व-इत्यादि स्वधायै वः पितरो नम इत्यन्तस्य जप एव ।

न षडञ्जलिकरणं,—

तथाच,—

नमो व इत्यञ्जलिं करोतीति श्राद्धसूत्रे कर्काचार्य्यैरुक्तं नमस्काररूपत्वात् पुटाञ्जलिमिति ।

श्राद्धप्रकरण,—

षट्कृत्वो नमस्कारोतीति श्रुतिरपि, तत्र जपानन्तरं माता-महादितर्पणं ततो मातामहानिति वचनात् ।

विष्णुपुराणे,—

मातामहाय तत्पित्रे तत्पित्रे च समाहितः ।
दद्यात्पितृतीर्थेन काम्यं चान्यच्छृणुस्व मे ॥
मात्रे प्रमात्रे तन्मात्रे गुरुपत्न्यै तथा नृप ।
गुरवे मातुलादीनां स्निग्धमित्राय भूभुजे ॥

इति मातामहानन्तरत्वोक्तश्चेति मातामहतर्पणानन्तरं काम्यं मात्रादितर्पणं कार्य्यमिति केचित्, न किञ्चिदेतत् ।

शङ्खः,

पित्रे पितामहाभ्याञ्च मात्रे दद्यात्ततो जलम्।
पितामह्योस्ततो दद्यात्-मातामहकुले ततः॥

मरीचिः,—

पितॄणां तर्पणं पूर्व्वं मातॄणां तदनन्तरम्।
पित्रादित्रयपत्नीनां मुख्यं देयं ततो जलम्॥
ततो मातामहानाञ्च क्रम एष तु तर्पणे।

गोभिलः,—

त्रीन् पितृतस्त्रीन् मातृतः, एवं याज्ञवल्कीयकात्यायनीययो-रनुक्तावपि अविरोधान्मातृतर्पणम्।

पितृतर्पणानन्तरं नित्यमेव कार्य्यं, अतएव मातृवर्गतर्पणं नित्यं स्मृत्यन्तरादिति कल्पतरुकारेणाप्युक्तम्।

मातामहानन्तरं मात्रादितर्पणं कल्पतरुकारेण लिखितमिति यत् कैश्चिदुक्तं तदपि न किञ्चित्।

तेन याज्ञवल्कीयानुक्तत्वेऽपि नित्यं मातृतर्पणं कर्त्तव्यमिति पश्चाद्विचारितं न तु मातामहाद्यनन्तरं कार्य्यमिति लिखितम्।

विष्णुपुराणवचने मात्रे इति यदुक्तं तद्विमातृपरं प्रमात्रे इति मातामह्यै मातामहाय तत्पित्रे च समाहित इति प्रमातामह-वृद्धप्रमातामहयोः सन्निहितत्वेन बुद्धिस्थत्वात्तन्मात्रे इत्यत्र प्रमातामहीवृद्धप्रमातामह्योः परामर्शः।

एकवचनं छान्दसं जात्याभिप्रायेण वा, तैर्यथा व्याख्यातं

प्रमातामहभार्य्या । तन्मातापितामहस्य बुद्धिस्थत्वात्पितामह-माता इति[1] तत्सर्व्वप्रमातृपदेन पितामह्याः परामर्शे विरहस्य व्यक्तनिगमनाविरहात् तन्माते इत्यत्र मातामहादिना व्यवहितत्वात्पितामहस्य परामर्शाभावात् सर्व्वथाप्यसङ्गतमिति सारविद्भिर्विभाव्यम्, एतेन तैरन्यद्यद्युक्तिजालं कृतं तत् पूतिकुष्माण्डायितमिति मन्तव्यम् ।

येनास्य पितरो याता येन याताः पितामहाः ।

तेन गच्छेत् सतां मार्गं तेन गच्छंस्तरिष्यति ॥

इति मनुवचनाच्च परम्पराप्राप्तो मातृतर्पणानन्तरं मातामहतर्पणसमाचारः सर्वथा न त्याज्यः, विष्णुपुराणवचनस्य स्मृत्यपेक्षया दुर्बलत्वमित्यपि केचित्, अत्र पितामह्यादिजीवने स्वान् पितॄनिति दैवतात्वेनाभिधानात्

पिता यस्य तु वृत्तः स्याज्जीवेद्वाऽपि पितामहः ।

पितुः स्वनाम संकीर्त्य कीर्त्तयेत् प्रपितामहमिति वचनाद्वृद्धप्रपितामह्यादियोगेन त्रीनवतर्पयेत् । मातृजीवनेन पितामह्यादितर्पणम् ।

न जीवन्तमतिदद्यादिति निषेधे जीवन्तमिति पुंस्त्वस्योद्देश्यविशेषणत्वेनाविवक्षितत्वात्, पितामहीजीवने मातृमात्रतर्पणं, पिता यस्य तु वृत्तः स्यादिति प्रतिप्रसवाभावेन न जीवन्तमति दद्यादिति निषेधप्रवृत्तेः । मातामहे जीवति प्रमातामहादिपुरुष-

(१) -पितामहमाता इति तन्मातृपदेन पितामह्याः परामर्शे निगमनाविरहात् ।

त्रयतर्पणं, यदि स्याज्जीवत्पितृक एतानेवेतिवत् तर्पणनिषेधाभावात्।

पितरो यत्र पूज्यन्ते तत्र मातामहा अपीति नियमवचनात्, बहूनां प्राप्ते तर्पणोत्पत्तिवाक्ये मातामहाश्च सततमिति मातामहपदोपस्थापितमातृपितादिवर्गस्य बहुत्वप्राप्तेः॥

सर्वत्र नमशब्दादियोगः, नमस्कारस्वधान्वितानिति वचनात्। तत्र क्रमः,—

पितृमातृमातामहवर्गतर्पणानन्तरं विमातृपितृव्यज्येष्ठभ्रात्रादिस्ववंशानां पत्नीनां पुत्राणां च एकैकाञ्जलितर्पणं तत्पुत्राभावेन कार्य्यम्।

विष्णुस्मृतौ आदौ स्ववंशानां इति सामान्याकारेणोक्ते, ज्येष्ठादिक्रमेण कार्य्यं, मातामहादीनां सख्यादीनां च तर्पणं वैकल्पिकत्वात् क्रियेत चेत्।

यथास्वत्वं यथाप्रकाशमिति शङ्खोक्तेः।

अज्ञातायां सत्यां नामस्मरणमनतिक्रम्य कार्य्यम्।

तत्र यत् क्रमवाक्यानि पठन्ति तानि परस्परविरोधान्नादरणीयानि। सर्वतर्पणानन्तरं विष्णुपुराणे, इदं चापि जपेदम्बु दद्याद्वा स्वेच्छया नृप, देवाः सुरास्तथा यक्षा इत्यादि कथनात्। अन्ते तत्तर्पणं पितृधर्मेण, तद्वाक्यानि पद्धतौ लेख्यानि। जपेदम्बु दद्यादिति मन्त्रेण जलं दद्यादित्यर्थः। इदं सर्वं स्नानाङ्गतर्पणेऽपि।

तथाच विष्णुः,—

ततः सम्बन्धिबान्धवाः ततः सुहृदां, एवं नित्यस्नायी भवतीति स्मृत्यन्तरोक्तानां सर्वेषां तर्पणं स्नानाङ्गमित्युक्तं भवति ।

याज्ञवल्क्यः,—

वस्त्रनिष्पीड़ितं तोयं स्नातस्योच्छिष्टभागिनां ।
भागधेयं श्रुतिः प्राह तस्मान्निष्पीड़येत् स्थले ॥

अत्रप्रकरणात्तस्य अपसव्येन पीड़नम् ।

तथा,—असंस्कृतप्रमीतानां इत्यादि ।

स्नानशाट्यां प्रदातव्या मृदस्तिस्रो विशुद्धये ॥

इति वचनात्तय[1]शोधनपूर्व्वकं निष्पीड़नम् ।

अत्र मन्त्रपद्धतौ लेख्यः । एतच्च प्रतिपत्तिकर्मापि स्विष्टकृद्यागवत् त्यागांशेनादृष्टार्थञ्च ।

तेन भ्रान्त्या स्नानवस्त्रस्य पूर्व्वं निष्पीड़ने नाशे वाऽकृतस्नानस्य वा तर्पणे जलान्तरेणासंस्कृतानुद्दिश्य जलं देयम् । स्नातस्येति वाक्येन प्रकरणं वाधित्वाऽस्य स्नानाङ्गत्वम् । तेन तर्पणरहिते क्रियाङ्गस्नानेऽपीदं प्रवर्त्तत इति केचित्तन्न, स्नानपदस्य प्रकृतमाध्याह्निकस्नानपरत्वात् ।

अथ जपयज्ञविचारः, सावित्रीं प्रकृत्य ब्रह्माण्डे,—

अङ्गञ्चतुर्थभागे तु मुख्या भवति मध्यमा ।
नित्यत्वादन्यकालेऽपि सानुष्ठेया स्वशक्तितः ॥

सा सावित्री, अतएवास्य नित्यत्वम् ।

---

(१) त्रि— ।

याज्ञवल्क्यः,—

पीड़यित्वा ततः पश्चाज्जपं कुर्य्यात् सुविस्तरम्।

विष्णुपुराणे,—

अजपो पूयशोणितमिति यो नित्यजप उक्तस्तस्यायं कालविधिः।

याज्ञवल्क्यीये तर्पणात् पूर्व्वमादावारभ्येत्यादिना ब्रह्मयज्ञमुक्त्वा तर्पणान्ते पुनर्जपं कुर्य्यादिति विधानान्नास्य जपयज्ञस्य ब्रह्मयज्ञत्वं, किं च मनुना स्नातकप्रकरणे ऋषियज्ञपदेन ब्रह्मयज्ञमुक्त्वा सन्ध्याजपादिकं च पृथक् तत्रैव कथितम्।

शङ्खः,—

नाघमर्षणात्परमन्तर्जलजपो न व्याहृतिभ्यः परं होमो न सावित्र्याः परं जाप्ये इति जपसामान्यमुद्दिश्य गायत्रीजपं विहितवान्।

तस्मात् पुरुषार्थस्य जपस्यायं कालः

न चास्य जपयज्ञस्य स्नानाङ्गत्वं शङ्कनीयम्।

तर्पणस्य स्नानवस्त्रजलप्रतिपत्त्यन्तत्वात्, अतएव ब्रह्माविष्ण्वादिपूजनं न स्नानाङ्गं न वा तर्पणाङ्गं, तीर्थविसर्जनं तु स्नानाङ्गं, तदादायैव स्नानविधिरेष इति कात्यायनस्यान्ते उपसंहारात्।

नरसिंहपुराणे,—

ततोऽर्घं भानवे दद्यात्तिलपुष्पजलान्वितम् ।
उत्थाप्य मूर्द्धपर्य्यन्तं हंसः शुचिषदित्यपि ॥

हंसः शुचिषदिति भानवेऽर्घं दद्यादिति सम्बन्धः ।

प्रधानक्रियान्वयस्याभ्यन्तर्हितत्वात् ।

पाद्मे,—

आचम्य विधिवत् सम्यगालिखेत्पद्ममग्रतः ।
अक्षताभिः सुपुष्पाभिः सतिलारुणचन्दनैः ॥
अर्घ्यं दद्यात् प्रयत्नेन सूर्य्यनामानुकीर्त्तनैः ।

नमस्ते विष्णुरूपाय प्रभाकर नमोऽस्तुते । इत्यन्तो नमस्कारमन्त्रः पद्धतौ लेख्यः ।

एवं सूर्य्यं नमस्कृत्य त्रिः कृत्वा च प्रदक्षिणम् ।
द्विजं गां काञ्चनं स्पृष्ट्वा[1] ततो विष्णुगृहं व्रजेत् ।

अक्षताभिरर्घ्यं दद्यादिति पूर्व्वेणान्वयः ।

सूर्य्यनामानुकीर्त्तनैः ।

एवं सूर्य्यं नमस्कृत्येति परेणान्वयः । तेनार्घ्यदानानन्तरं नमस्ते विष्णुरूपायेत्यादिना सूर्य्यनमस्कारः ।

प्रदक्षिणत्रयं चार्घदानाङ्गम् ।

याज्ञवल्क्यः,—

निष्पीड्य स्नानवस्त्रं तु आचम्य प्रयतः शुचिः
देवानामर्च्चनं कुर्य्याद्ब्रह्मादीनाममत्सरः ॥

(१) मर्द्दि । (२) दृष्ट्वा ।

ब्राह्मवैष्णवरौद्रैस्तु सावित्रैर्मैत्रवारुणैः।
तल्लिङ्गैस्तर्पयेन्मन्त्रैः सर्व्वान् देवान् समाहितः॥
ध्यात्वा प्रणवपूर्वं तु दैवतं तु समाहितः।
नमस्कारेण पुष्पाणि विन्यसेत्तु पृथक् पृथक्॥
आवाहनादिकं कर्म्म यत्तु नोक्तं मया त्विह।
तत्सर्व्वं प्रणवेनैव कर्त्तव्यं चक्रपाणिनः।
दद्यात् पुरुषसूक्तेन यः पुष्पाण्यप एव वा॥
अर्च्चितं स्याज्जगदिदं तेन सर्व्वचराचरम्।
विष्णुर्ब्रह्मा च रुद्रश्च विष्णुर्देवो दिवाकरः॥
तस्मात् पूज्यतमं नान्यमहं मन्ये जनार्दनात्।
सावित्र्या दद्याद्धूपादि यथाशक्ति समाहितः॥
एवं सम्पूज्य देवेशं क्षणं ध्यात्वा निरञ्जनम्।
ततोऽवलोकयेदर्कं हंसः शुचिषदित्यृचा॥
स याति ब्रह्मणः सद्म स्नात्वैवैतानया तु यः।
अदृश्यमस्येति मन्त्रैरुपस्थाय दिवाकरम्॥
सम्वर्च्चसेति पाणिभ्यां तोयेन विमृजेन्मुखम्।
स्वयम्भुरित्युपस्थाय सूर्य्यस्येति प्रदक्षिणम्॥
आवृत्य तु नमस्कुर्य्याद्दिशो दिग्देवता अपि।
ब्रह्मणेऽग्नये पृथिव्यै [1]ओषधीभ्यस्तथैव च॥
वाचे च वाचस्पतये विष्णवे महते तथा।
एतेभ्यो देवताभ्यश्च नमस्कारादि वै जलम्॥

---

(१) औषधिभ्यः।

दत्त्वा नमस्येत्क्रमशस्त्वन्ते वै सर्व्वकर्म्मणाम् ।
नमोऽद्भ्योऽपां पतये वारुणाय नमो नमः ॥
इत्युक्त्वा ऽपो नमस्कृत्यावनौ देवांश्च नामवत् ।
इदमापः प्रवहत धाम्नो धाम्नस्तथैव च ॥
विमोचनञ्च तीर्थस्य आप्यायस्वेति वै जपेत् ।
देवगा तु विद इति कृत्वा जप्यनिवेदनम् ॥
प्रच्याल्य तीर्थदेशं तु गत्वा स्वं धर्म्ममाचरेत् ।

ब्रह्मविष्णुमहेश्वरा एवैकेन तल्लिङ्गमन्त्रेण पूज्याः । सविता-मित्रौ वरुणश्चाग्निरेव च ।

उपादेयबहुत्वस्य विवक्षितत्वात् तल्लिङ्गैर्ब्रह्मादिदेवताप्रकाशन-सम्बन्धैः, ब्रह्मादीनां मूर्त्तिध्यानं कृत्वा तल्लिङ्गमन्त्रमुच्चार्य्य प्रणवेन नामान्युक्त्वा ॐ ब्रह्मणे नम इत्येवं पृथक् पृथक् पुष्पं विन्यसेत्, जले चिपेदिति पूजाप्रकारः पुष्पदानमात्रेणेत्यर्थः ।

विष्णुपूजायां विशेषः, प्रणवेनावाहनादि पुरुषसूक्तेन समस्तेन पुष्पदानं, समस्तस्य करणत्वेन श्रुतेः, तेन तद्विरुद्धं विष्णुस्मृतिगतं प्रत्येकस्य पुष्पदानसाधनत्वमत्र न ग्राह्यं, उदकदानं पुष्पाभावे, गायत्र्या धूपाद्युद्वासनान्तं कर्म्म, निरञ्जनं निष्प्रपञ्चब्रह्म, यत्र नियुक्तान् पुरुषान् ब्रह्मपुरुषे नारायणेनाभिष्टौ इति श्रुत्वा मन्त्रगतपुरुषपदस्य नारायणपरत्वेन व्याख्यानात् मन्त्रलिङ्गस्यापि नारायणपरत्वात् विरुद्धस्मृतिगतपुरुषोत्तमनरसिंहविष्णुचक्रपाणि-पदानां पूजावाक्यश्रुतनामप्यनादरः ।

नरसिंहपुराणे,—

ध्येयः सदेति नारायणध्यानमुक्तं एवं नारायणाय पुष्पं ददामीति प्रयोगः, अतएव प्राचीनपद्धतौ तथैव लिखनं, समाचारोऽप्येवं, दिशः प्राच्यादिकाः, दिग्देवता इन्द्राद्याः, दिग्भ्यो नमः, दिग्देवताभ्यो नम इति बह्वचः।

अवनौ भूमौ देवनमस्कारः, नामवत्, ऋग्वेदाय नम इत्येवं क्रमेण, आप्यायस्व इति देवा गातुविद इति निवेदनम्। अनेन जपेन परमात्मा मे प्रीयतामित्येवं रूपेण।

अथ मध्याह्नसन्ध्यापद्धतिः,—

तत्र प्रमाणं प्रातःसन्ध्यायां लिखितम्।

तत्र विशेषः,—

गायत्र्या जलाञ्जलिप्रक्षेप एक एव।

तत्र पुष्पमिश्रणनियमः,—

जलाञ्जलिप्रक्षेपकाले सावित्रीध्यानम्।

तद्यथा,—

सावित्री वैष्णवी चतुर्भुजा शङ्खचक्रगदापद्मधारिणी युवतिः शुक्लवर्णा शुक्लवस्त्रद्वयोपेता गरुड़मारुह्य विष्णुलोकादागत्य सूर्य्यमण्डले प्रविष्टेति ध्यानं, तेजोऽसीत्यावाहनम्।

अमन्त्रं प्रदक्षिणं कृत्वा उद्वयं उदित्यं चित्रं तच्चक्षुः हंसः शुचिषदित्येतैरुपस्थानं कृत्वा गायत्र्या ऋष्यादिस्मरणम्।

कार।क्रन्थ।।

सावित्र्यादिपूर्व्ववद्ध्यानं ध्येयः सदेति वा ध्यानं यथोक्तार्थध्याननियमेन तिर्य्यक्पाणिना शतमष्टोत्तरं अष्टादश वा गायत्री-

जपः कार्य्यः, ततो गायत्र्युपस्थानपूर्व्वकं पूर्व्ववद्गायत्री-विसर्ज्जनम् ।

अथोपस्थानादितर्पणपद्धतिः, ऊर्द्धबाहोः सूर्य्याभिमुखस्य उपस्थानं, असंसक्तपार्ष्णिरित्यादि प्रातर्वत्, विभ्राडित्यनुवाकस्य, स्वयम्भु ऋषिः, विभ्राड्बृहती छन्दः, उदुत्यं पावक, दैव्या अध्वर्य्यू, गायत्र्यास्तिस्रः, तं प्रत्नथा । जगती च्छन्दः, अयं वेनश्चित्रं देवानां, आन इलाभिस्तिस्रस्त्रिष्टुभः, तरणिर्व्विश्वः पदद्विकञ्च द्वे गायत्र्यौ[1] तत् सूर्य्यस्य तन्मित्रस्य द्वे त्रिष्टुभौ,[2] वण्महान्, वयंश्रवसा आयन्त इवेति बृहत्यः ।

अद्या देवा आकृष्णेति द्वे त्रिष्टुभौ, अत्र तं प्रत्नथा ।

अयं वेनश्चित्रं देवानामिति ऋक्चयं, प्रतीकोक्तम् पूर्व्वाम्नातं स्मारितम् ।

लोकं शृणुता अस्येन्द्रं विश्वा इतिवत्, एवं सप्तदशर्चो भवति, प्रथमं विभ्राडित्यनुवाकः, विभ्राड्बृहत्पिवतु सोमं मध्वायुर्दध-द्यज्ञपता अविह्रुतं, वातयुतो यो अभिरक्षन्तु त्मना प्रजाः गुपो अपुरुषा विराजति ।

उदुत्यं जातवेदसं देवं वहन्ति केतवः, दृशे विश्वाय सूर्य्यं, येनापावकचक्षुषा भुरण्यन्तं जना अनु ।

त्वं वरुणं पश्यसि ।

दैव्या अध्वर्य्यू अगतꣳरथेन सूर्य्यत्वचा, मध्वायकं सम जाथे, तं प्रत्नथा पूर्व्वथा विश्वथेमथा ज्येष्ठतातिं वर्हिषदꣳ स्वर्विदं, प्रती-

---

(१) यदद्विकञ्चद्वेगायत्र्यौ ।  (२) तत्सूर्य्यस्य तज्जनितस्य द्वे त्रिष्टुभौ ।

चीर्न व्रजिनं दोहसे धुनि माशुं जयन्त मनुया सुवहंसे, अयं वेन-श्चोदयत् पृश्निगर्भाज्योतिर्जरायूरजसोविमाने, इममगाᳫं सङ्गमे सूर्य्यस्य शिशुं न विप्रामतिभीरियन्ति।

चित्रं देवाना मुदकादनीकं चक्षुर्मित्रस्य वरुणस्याग्नेः।

आप्राद्यावा पृथोवी अन्तरीक्षं सूर्य्य आत्मा जगतस्तस्थुषश्च॥

आन इलाभिर्व्विदधे सुशस्तिविश्वानरः सविता देव एतु।

अपियथा युवानो मत्सथानो विश्वं जगदभिपित्वे मनीषा। यदद्यकच्च वृत्रहं नुदगा अभिसूर्य्यः, सर्व्वं तदिन्द्र ते वशे, तरणिर्व्विश्व दर्शतोज्योतिष्कृदसि सूर्य्य, विश्व मा भासि रोचनं, तत्सूर्य्यस्य देवत्वं तन्महित्वं मध्वा कर्त्तोर्विततᳫं सञ्जभार, यदेतयुक्तहरितᳫं सधस्थादादात्रीवासस्तनुतेऽसि मस्मै। तन्मित्रस्य वरुणस्याभिचक्षे सूर्य्योरूपं कृणुदतद्दोरुपस्थे।

अनन्त मन्यद्रुषदस्यपाजः[1] कृष्णमन्यद्धरितः सम्भरन्ति। वण्महां असि सूर्य्यबलादित्य महांसि, महस्तेसतो महिमागनिस्य-तेऽद्धा देवमहांसि। वट्सूर्य्यसहसा महाᳫं असि सत्रा देवमहाᳫं असि, महादेवानामसूर्य्यः पुरोहितोविभुर्ज्योतिरदाभः।

आयन्त इव सूर्य्यं विश्वेदिन्द्रस्य भक्षत[2], वसूनि जाते जन-मान ओजसा प्रतिभागं न दीधिम। अद्या देवा उदिता सूर्य्यस्य निरᳫंहसः पिपृतानि रजद्यात्, तन्नोमित्रोवरुणोमामहन्ता

(१) पार्थिवः।

(२) महानाम-

(३) ज्योपाᳫं।

मदितिः सिन्धुः पृथिवी उतद्यौः। आकृष्णेन रजसा वर्त्तमानो निवेशयन्नमृतं मर्त्यञ्च हिरण्ययेन सविता रथेना देवो याति भुवनानि पश्यन्।

ॐ पुरुष सूक्तमन्त्रस्य, नारायणऋषिः, पञ्चदशार्चाऽनुष्टुप्-छन्दः। षोडश्यर्चास्त्रिष्टुप्छन्दः। जगद्बीजं पुरुषो देवता, पुरुष-मेधे विनियोगः, पुरुषोऽहं नारायणो कामयतेत्यादि ब्राह्मणं।

ॐ सहस्रशीर्षा पुरुषः सहस्राक्षः सहस्रपात्।
स भूमिं सर्व्वतः स्पृत्वात्यतिष्ठद्दशाङ्गुलम्॥

पुरुष एवेदं सर्व्वं यद्भूतं यच्च भाव्यं, उतामृतत्वस्येशानो यदन्ने-नातिरोहति, एतावानस्य महिमातो ज्यायाꣳश्च पूरुषः।

पादोऽस्य विश्वा भूतानि त्रिपादस्यामृतं दिवि।
त्रिपादूर्द्ध्व उदैत्पुरुषः पादोऽस्येहाभवत्पुनः॥

ततो विश्वङ्क्रव्यक्रामत्साशनानशने अभि, ततो विराल जायत, विराजोऽधिपूरुषः।

स जातोऽत्यरिच्यत पश्चात् भूमिमथोपुरः।

तस्माद् यज्ञात्सर्व्वहुतः सम्भृतं पृषदाज्यं पशूꣳस्ताꣳश्चक्रे वायव्या नारण्याग्राम्याश्चये, तस्माद् यज्ञात्सर्वहुत ऋचः सामानि जज्ञिरे, छन्दाꣳसि जज्ञिरे तस्माद् यजुस्तस्मादजायत। तन्मे मनः शिव-सङ्कल्पमस्तु, येनेदं भूतं भवनं भविष्यत् परिगृहीतममृतेन सर्व्वं, येन यज्ञस्तायते सप्तहोता तन्मे मनः शिवसङ्कल्पमस्तु, यस्मिन्नृचः सामयजूꣳषि यस्मिन् प्रतिष्ठिता रथनाभाविवाराः। यस्मिꣳश्चित्तं सर्व्वमोतं प्रजानां तन्मे मनः शिवसङ्कल्पमस्तु। सुसारथिरश्वा

निवचन्मनुष्यान्नेनीयते भिषुभिर्व्वाजिन इव, हृत्प्रतिष्ठं यदजरं जविष्ठं तन्मे मनः शिवसङ्कल्पमस्तु ।

मण्डलब्राह्मणं,—

विनियोज्यत्वेन मन्त्रकार्य्यं करणान्मन्त्रलाभेन ऋष्यादिस्मरणं, प्रजापति ऋषिः, यजुः सूर्य्योदेवता सूर्य्यो पस्थाने विनियोगः, यदेतन्मण्डलं तपति तन्महदुक्तं मरुचः सरुचं लोकोथ यदेतदतिदीप्यते तन्महाव्रतं तानि सामानि ससाम्नां लोकोथ य एष एतदस्मिन् मण्डले पुरुषः सोऽग्निस्तानि यजूꣳषि स यजुषां लोकः मैषा त्रय्येव लोकविद्या तपतीति वाग्वै ते पश्यन्तो वदति । य एष-एव मृत्युर्यः एष तस्मिन् मण्डले पुरुथैवममृतं यददर्चिर्दीप्यते तस्मान् मृत्युर्निम्रियते मृते ह्यस्तस्मादून दृश्यते विवस्ते सर्व्वतोह्येनेन परिवृत्तो मृत्यो पुमा विवस्वतीत्येतस्मिन्विमण्डल एतस्य पुरुस्यात्मेति तदेष श्लोको भवति, तयोर्वा एतयोरुभयो रेतस्य चाग्निष एतस्य च पुरुषस्यैतन्मण्डलं प्रतिष्ठा तस्मान्महदुक्थं परस्मैनग्नꣳ सम्नेदेतां प्रतिष्ठां चिन्नदा इत्येताꣳ हस प्रतिष्ठां मत्तेयो मह्यदुक्थं परस्मै ग्नꣳ सति तस्मादुकथग्नसं भूयिष्ठं परिचक्षते प्रतिष्ठा च्छिन्नो हि भवतीत्यधोदेवतम् ।

अथा यज्ञ यदेतन्मण्डलं यदेतन्मण्डलं यतस्मादश्वा अजायन्त एके चोभयादतः ।

गावो ह जज्ञिरे तस्मात्तस्माज्जाता अजावयः ।
तं यज्ञं वर्हिषि प्रोक्षन् पुरुषं जातमग्रतः ॥
तेन देवा अजायन्त साध्या ऋषयश्च ये ।

यत्पुरुषं व्यदधुः कतिधा व्यकल्पयन्, मुखं किमस्यासि किं बाहू किमूरू पादा उच्येते। ब्राह्मणोऽस्य मुखमासीद्बाहू राजन्यः कृतः, ऊरू तदस्य यद्वैश्यः पद्भ्याᳬ शूद्रो अजायत ।

चन्द्रमा मनसो जातश्चक्षोः सूर्य्यो अजायत ।

श्रोत्राद्वायुश्च प्राणश्च[1] मुखादग्निरजायत ॥

नाभ्या आसीदन्तरीक्षं शीर्ष्णो द्यौः समवर्त्तत ।

पद्भ्यां भूमिर्दिशः श्रोत्रात्तथालोकान् अकल्पयन्, यत्पुरुषेण हविषा देवा यज्ञ मतन्वत ।

वसन्तोऽस्यासीदाज्यं ग्रीष्म इध्मः शरद्धविः ।

सप्तास्यासन् परिधयस्त्रिः सप्त समिधः कृता ॥

देवाय यज्ञं तन्वाना अवध्नन् पुरुषं पशुम् ।

यज्ञेन यज्ञमजयन्त देवास्तानि धर्माणि प्रथमान्यासन् तेहनाकं महिमानः सचन्त यत्र पूर्व्वे साध्याः सन्ति देवाः ।

यज्जाग्रत इत्यस्य षट्कस्य, प्रजापतिऋषिः, त्रिष्टुप्छन्दः, मनोदेवता सूर्य्योपस्थाने विनियोगः, ॐ यज्जाग्रतो दूरमुदैति दैवं तदुसुप्तस्य तथैवेति, दूरं गमं ज्योतिषां ज्योतिरेकं तन्मे मनः शिवसंकल्पमस्तु ।

येन कर्माण्यपसो मनीषिणो यज्ञे कृण्वन्त वितथेषु धीराः ।

यत्पूर्व्वं यक्षमन्तः प्रजानां तन्मेमनः शिवसंकल्पमस्तु ।

यत्प्रज्ञान[2]मूढ़चेतो धृतिश्च ज्योतिरन्तरमृतं प्रजासु ।

यस्मान्नृते किञ्चन कर्म्म क्रियते तन्मे मनः शिवसंकल्पमस्तु ।

---

(१) प्राणाश्च । (२) मुतचेतो- ।

न पत्ययः सक्षोथ यदेत इदं तत्पुष्करपर्णमापोह्येतामापः पुष्करपर्णमथ [1]स एष तस्मिन् मण्डले पुरुषोऽयमेव [2]सत्योऽयः हिरण्मयः पुरुषः, तदेवैतत्त्रयः सः [3]स्मृत्येह्रोपे भेतद् यज्ञस्यैवानुसः स्यामूर्द्धमुपक्रामति तदेतमध्येति तस्मादग्निनाद्रियेत परिहृतममृतह्येषु [4]तदा भवति त्यु एवाधि यज्ञं, अथाध्यात्मं यदेतन्मण्डलं तपति यश्चैषरुक्म इदं तत्शुक्लमं च्चान्नथ यदेतदर्चिर्दीप्यते यच्चैतत् पुष्करपर्णमिदं तत्क्रष्णमच्चान्नथ यएष एतस्मिन्मण्डले पुरुषो यश्चैष हिरण्मयः पुरुषोऽयमेव स योऽयं दक्षिणे यत्पुरुषः। य एष एव लोकं [5]पृणितामेष [6]सर्वोऽग्निरभिसंपद्यते, तस्यैतन्मिथुनं योऽयः सव्येयन्पुरुषोर्द्धमूलत्वे तदात्मनो यन्मिथुनं यदा वै गृहमिथुने नाथसर्वोऽक्रत्स्नतायैतद्वत्ते द्वे भवतोद्वन्द्वः हि मिथुनं प्रजननं तस्माद्दे [7]चव्यरोकं गृणे उपधीयते तस्मादुद्याभ्यां चितिं प्रणयन्ति, स एष एवेन्द्रो योऽयं दक्षिणेयन् पुरुषोथोऽयमन्वाणी ताभ्यां देवा एतां विधृतिमकविन्नासिकां तस्माज्जायाया अन्तेनाश्नियाद्वीर्य्यवान् वास्माज्जायते वीर्य्यवन्तमुत्तसा जनयन्ति यस्या अन्तेनाश्नाति।

तदेत देवव्रतः राजन्य [8]ववी मनुष्याणा गमुत्तमां गोपयन्ति तस्मादुतेषु वीर्य्यवान् जायते मृतवाकावयसाः सान्निप्रस्थेनं न

(१) यएष एतस्मिन्।
(२) मयोऽयः-
(३) स्मृत्येह्रोपभत्ते तद्यज्ञस्यैव-
(४) ह्युष्टो भवति-।
(५) गृह-
(६) सुर्व्वोऽ-
(७) द्वे द्वे लोकं-
(८) बन्ध वो-

जनयति तौ हृदयस्याकाशं प्रत्यवेत्य मिथुनीभवतस्तौ यदा मिथुनस्यान्तं गच्छतोऽथ हैतत् पुरुषः स्वपिति तद्यथा हैं वेदं मानुषस्य मिथुनस्यान्तं गत्वा समिति भव इति दैवꣳ ह्येतन्मिथुनं परमो ह्येष आनन्द तस्मादेवं वित्स्वपं लोक्यꣳ हैते एव तदेव ते मिथुने प्रियेण धाम्ना सम्बर्द्धयति तस्मादुह स्वपन्तं धूरेण वन-बोधयेन्नेतदेते देवते मिथुनीभवन्त्यौ ह्निनसानीति तस्मादुहैतत् सुप्तगुणस्तेषामिव मुखं भवत्येते एव तदेव ते रेतः सिञ्चतः तस्माद्रेतः स इदꣳ सर्वं एव सम्भवति यदिदं किं च, स एष एव मृत्युर्य एष तस्मिन्मण्डले पुरुषो यश्चायं दक्षिणेयन्पुरुषः तस्य ह्येतस्य हृदये पादावतिह्य तौ तौ हैतदाच्छिन्नौ क्रामति यन्मनो क्रामत्यथ हैतत् पुरुषो म्रियते तस्मादुहैतत्प्रेतमाहुराच्छैदितस्येते षड् एव प्राण एषह्येमाः सर्वाः प्रजाः प्रणयति तस्यैते प्राणाः स्वासयदास्वपित्यथैनमेते प्राणाः स्वा अपि यन्ति तस्मात् स्वापीयस्वाप्ययोहः सर्वतꣳ स्वप्नतुत्या चक्षते परोपरोक्षका माह्निदेवाः ।

स एतैः सुप्तो न कस्यानवेदमनसा सङ्कल्पयति न वाचान्नस्य रसं विजानाति न घ्राणेन गन्धं विजानाति न चक्षुषा पश्यन्ति न श्रोत्रेण शृणोत्येवꣳ ह्येते तदापिता भवन्ति स एष एकः सन्प्रजा-सु बहुधा व्याविष्टः तस्मादेकासति लोकं पृणाति सर्वमग्निमनु-विभत्यथ यदेक एव तस्मादेका, तदाहुरेको मृत्युविभना इत्येकश्च वहवश्चेति अब्रूयादद्येहासावमूत्र तेनैकोथ यदिह प्रजासु बहुधा व्यादिष्टस्तेनो रहवः, तदा दुरन्तिके मृत्युदुरात्यन्तिकः दूरे चेति

ह्यन्नूयाद्यदहाय मिहाध्वासं तेनान्तिकेथ यदस्य [1]वमुत्र तेनोदूरे, तदेष श्लोको भवति अन्ये भात्ययश्रितो रसानाꣳ साऽक्षरेऽमृत इति यदेतन्मण्डलं तपति तदन्नमथना एष एतन्मण्डले गुरु भसोभासं एतस्मिन्ननेपश्रितो भातीत्यधिदैवत, अथाध्यात्ममिदमेव शरीरमन्न-मथयो यां दक्षिणे यन्पुरुषस्येता स एतस्मिन्नन्नेपश्रितो भाति, तमेतमग्निरित्यध्वर्यव उपासते यजुरित्येषह्येहीदꣳ सर्वं युनक्ति सामेति छन्दोगा एतस्मिंन्वीदꣳ सर्व्वꣳ समानमुकथमिति वह्वृष-एषह्येदꣳ सर्वमुत्थापयति यान्तरिति यन्तविद एतेन ह्येदꣳ, सर्वं चतं विषमिति सर्पा सर्पा इति सर्पविद उर्जति [2]देवायिरिति [3]मनुष्यमायेत्यसुराः स्वधेति पितरो देवजन इति देवजनपदोरूप-मिति गन्धर्वागन्ध इत्यप्सरसस्तं यथायथोपासते तद्देवो [4]भवति [5]तद्दैत्यत्वावतितस्मादेनमेनं[6] एवंवित्सर्वेरेवैतैरुपासीत सर्वꣳ हैत-द्भवति सर्वꣳ हैनमेतद्भूत्वावति।

स एष तैष्टकोऽग्निरुचो वायुरेकास्यस्यैकातव्यं कांशगर्गेपद-धातिरुक्म एव तस्या आयतनमथ यां यजुषा पुरुष एव तस्या आयतनमथयाꣳ साम्ना पुष्करपर्णमेव तस्या आयतनमेवं त्रैष्टकः ते एवैते उभे एष च रुक्म एतच्च पुष्करपर्णमेतं पुरुषमपीत उभे ह्यन्ना [7]सेनावरपीत एवत स्मृकेष्टकं स एष एव मृत्युर्य एष

(१) वमुत।
(२) देवारयिति।
(३) मनुष्या-।
(४) तत्तद्देवभवति।
(५) तद्दैमाभूत्वावति।
(६) तस्मादेनमेवं वित्-।
(७) ह्यक्कासेयजरपीत।

तस्मिन्मण्डले पुरुषो यश्चायं दक्षिणे यन्पुरुषः स एष एवं विदि आत्मा भवति स यदेवं विदस्माल्लोका दैत्यथैतमे अत्मानमभि-संसवन्ति सोऽमृतो भवति मृत्युर्ह्यस्यात्मा भवति इतिमण्डल-ब्राह्मणं, दिवाकीर्णैः, शतरुद्रीयः शतैरिति लक्ष्मीधरः, नमस्त-इति तिसृणां प्रजापति ऋषिः, गायत्रीछन्दः, द्वयोरनुष्टुप्छन्दः, रुद्रो देवता, सूर्योपस्थाने विनियोगः ।

नमस्ते रुद्रमन्यव उतोत इषवे नमः, बाहुभ्यामुतते नमः, या ते रुद्र शिवातनूरघोरा पापकाशिनी, तया नस्तन्वशन्त मया गिरिशन्ताभिचाकसिहो, यामिषुं गिरिशन्तहस्ते विभर्ष्यऽस्तवे, शिवां गिरित्रतां कुरु मां हिंसीः पुरुषं जगत् ।

सौराः,—

परमेष्ठिप्रजापति ऋषिः, द्वयोरनुष्टुप्तृतीयस्य विराट् आदित्यो देवता, सूर्योपस्थाने विनियोगः, कदाचनस्तरीरसि-नेन्द्रसश्च सिदाशुषे, उपोपेनु मघवन् भूयइन्नुतेदानं देवस्य पृच्छते आदित्येभ्यस्त्वा ।

कदाचन प्रयच्छस्युभे निभासि जन्मनो, हरीयादित्यसवनन्त-[1]इन्द्रियमातस्थाममृतं दिव्या आदित्येभ्यस्त्वा ।

यज्ञोदेवानां प्रत्येति सुम्नामादित्यभवता मृगयन्तः, आवो-र्वाचि सुमतीवव्रत्या द९ ह्योश्चिद्र्यावरिवोविभरासदादित्येभ्यस्त्वा, अघमर्षणसूक्तेनोपस्थानम् ।

---

(१) मात- ।

गृह्योपनिषत्,—

पूर्णमिदं पूर्णात्पूर्णमुच्यते ।

पूर्णस्य पूर्णमादाय पूर्णमेवावशिष्यते ।

ॐ खं ब्रह्म खं पुराणं वायुरमितिहस्माह कौरव्यायणीपुत्रो वेदोऽयं ब्राह्मणा विदुर्वेदैनेन यद्वेदितव्यम् ।

असम्भवे मण्डलब्राह्मणान्तं, असक्तौ विभ्राड़ित्यनुवाकमात्रेण वोपस्थानं, 'तत्र प्रदक्षिणमावृत्य नमस्कृत्योपवेशनं आसनस्थेषु प्रागग्रेषु दर्भेषु, प्राङ्मुखत्वेन सव्यतयोपवीत परामर्शः, हस्तयोस्तोयेन घर्षणं, त्रिराचमनं अङ्गुष्ठमूलेन ओष्ठयोर्मार्ज्जनं, ओष्ठयोरेवाङ्गल्यग्रैः सकृदुपस्पर्शनं, उदकेन वामपाणिना प्रोक्षणं, पादयोश्च प्रोक्षणं, शिरश्चक्षुर्द्वयनासिकाद्वयश्रोत्रद्वयानां हस्तेन स्पर्शनं, पवित्रलक्षणोपेतकुशत्रयेण इन्द्रियस्पर्शनं, तदेव पावनं, पञ्चदशमात्राभिः प्रणवेन प्राणायामत्रयं, दक्षिणजानूपरि पवित्रोपग्रहव्यतिरिक्तपवित्रलक्षणोपेतकुशत्रययुक्ताञ्जलिधारणं, प्रणवमुच्चार्य्यव्याहृतित्रयोच्चारणम् ।

गायत्र्याः पादानां व्यस्तानां उच्चारणं, पुनः गायत्र्याः पादद्वयरूपमर्द्धर्चमुच्चार्य्य तृतीयपादोच्चारणम् ।

ततः आद्यावारभ्य मन्त्रसंहितायाः प्रथमम् ।

अध्यायाध्यायक्रमेण । अनुवाकानुवाकक्रमेण वा । प्रति-

(१) ततः-

दिनं यावत्समाप्ति पाठः । मन्त्रसमाप्तौ ब्राह्मणसंहितायाः अध्यायाध्यायक्रमेण ब्राह्मणक्रमौ यावत्समाप्ति पाठः ।

अशक्तौ कण्डिकाक्रमेण वा, एवमेकां शाखां समाप्य यस्यानेकवेदाध्ययनं तस्यापरस्य वेदस्यैवमेव क्रमेण समापनम् । पश्चादाथर्वपुराणेतिहासाङ्गानां यथाक्रमेण समापनम् । एवं यावद्भिर्दिनैरेतेषां समाप्तिः पुनरादावारभ्य वेदमित्येवं क्रमेण यावज्जीवमभ्यासः । अशक्तौ गायत्रीमात्रं, प्रणवमात्रं वा, फलविशेषार्थिनः पुरुषसूक्तस्य जपनियमः । भूः, भुवः, स्वः, सत्यं, तपः, श्रद्धायां, जुहोमीत्येतावन्मात्रं वा, अशक्तौ सर्ववेदफलार्थिनः, सोंकारचतुरावृत्तिगायत्रीजपः, त्र्यम्बकजातवेदा गायत्रीरूपशताक्षरा जपो वा काम्यः, एवं ब्रह्मयज्ञं कृत्वा अन्ते प्लुतप्रणवोच्चारणं, ॐ नमो ब्रह्मणे, नमस्त्वग्नये, नमः पृथिव्यै, नमो ओषधीभ्यो, नमो वाचे, नमो वाचस्पतये, नमो विष्णवे बृहते करोमीति त्रिजपः, इति तैत्तिरीयश्रुत्यनुसारेण ब्रह्मयज्ञविधिः । अस्य प्रत्यक्षश्रुतिगतप्रकारान्तरं न गृह्यते स्मृत्युक्तत्वात् ।

# अथ तर्पणविधिः।

प्रागग्रकुशत्रयास्तरणं, विश्वेदेवा स इत्यस्य मन्त्रस्य, [1]गृत्स-मद ऋषिः, गायत्रीछन्दः, विश्वेदेवा देवताः, ब्रह्मादीनामावाहने विनियोगः। विश्वेदेवा स आगत शृणुताम इमं हवं, एवं बर्हिर्निषीदत, इत्यक्षतपुष्पाभ्यां ब्रह्मादयो विश्वेदेवा अत्रागच्छते-त्यावाहनं, अक्षतानि वीकीर्य्य, विश्वेदेवाः शृणुतेमं इत्यस्य मन्त्रस्य सुहोत्र ऋषिः, त्रिष्टुप्छन्दः, विश्वेदेवा देवताः, जपे विनियोगः, विश्वेदेवाः शृणुतेमं हवं मे ये अन्तरीक्षे च उपद्यविष्ट, येऽग्नि-जिह्वा उतवायजत्रा आसद्यास्मिन् बर्हिषिमादयध्वं इति जपः।

दक्षिणजानुपातनं, उदङ्मुखत्वं, ऋजुकुशत्रयस्य दक्षिणहस्तेन तर्पणार्थं ग्रहणं, वामहस्तेन दक्षिणहस्तस्पर्शनं, ॐ ब्रह्मा तृप्यतां, इति अङ्गुष्ठमूलरूपब्रह्मतीर्थेन अक्षतयुक्तजलैर्यवाभिर्वा प्रादेश-मात्रमुद्धृत्य जले जलप्रक्षेपेण सकृद्ब्रह्मतर्पणं, इदं ब्रह्मणे मनसा त्यागं कुर्य्यात्, एवं सर्वत्र, एवं ॐ विष्णुस्तृप्यतां, इत्यङ्गुल्यग्र-रूपेण देवतीर्थेन सकृत्तर्पयेत्।

रुद्रस्तृप्यतां इति पूर्ववत्, ॐ प्रजापतिस्तृप्यतां इति कनिष्ठामूलरूपेण प्रजापतितीर्थेन सकृत्।

इतः प्रभृति देवतर्पणं देवतीर्थेन सकृत् कार्य्यं, देवास्तृप्यन्तां छन्दांसि तृप्यन्तां, वेदास्तृप्यन्तां, ऋषयस्तृप्यन्तां, सनातनास्तृप्यन्तां, पुराणाचार्य्यास्तृप्यन्तां, गन्धर्वाचार्य्यास्तृप्यन्तां, इतराचार्य्या-

---

(१) गृ-।

स्तृप्यन्तां, सम्वत्सरः सावयवस्तृप्यतां, देव्य स्तृप्यन्तां, अप्सरस-स्तृप्यन्तां, देवानुगास्तृप्यन्तां, नागास्तृप्यन्तां, ॐ सागरास्तृप्यन्तां, ॐ पर्वतास्तृप्यन्तां, ॐ मनुष्यास्तृप्यन्तां, यक्षास्तृप्यन्तां, रक्षांसि-तृप्यन्तां, ॐ सुपर्णास्तृप्यन्तां, भूतानि तृप्यन्तां, पशवस्तृप्यन्तां, वनस्पतयस्तृप्यन्तां, ॐ ओषधयस्तृप्यन्तां, ॐ भूतग्रामचतुर्विध-स्तृप्यतां,

स्थलस्य समीपे चेज्जले जलप्रक्षेपः, स्थले चेदुद्धृतोदकेन [1]चावाहनस्थानकुशेषु ताम्रादिपात्रादिस्थेषु जले स्थलेऽपि वा ।

ततो यज्ञसूत्रोत्तरीये कण्ठावसक्ते कृत्वा देवावाहनं कुशत्रय-मुत्तराग्रं कृत्वा दक्षहस्तस्थितकुशत्रयमध्यस्य तोयाभिमुखं धृत्वा उदङ्मुखः सनकाद्याः सप्त मनुष्या अत्रागच्छत इति आवाह्य सव्यान्वारब्धे दक्षहस्तेन प्राजापत्यतीर्थेन सनकादीनां प्रत्येकं वारद्वयं तर्पणं, ॐ सनकस्तृप्यतां, ॐ सनन्दस्तृप्यतां, ॐ सनातनस्तृप्यतां, ॐ कपिलस्तृप्यतां, ॐ आसुरिस्तृप्यतां, ॐ वोढुस्तृप्यतां, ॐ पञ्चशिखस्तृप्यताम् ।

अत्र सर्व्वत्रापि मानस स्त्यागः, ततो यज्ञोपवीतोत्तरीये अपसव्ये कृत्वा दक्षिणाभिमुखः सव्यं जानु भूमौ निपात्य तत्र देवावाहनं कुशत्रयं दक्षिणाग्रं कृत्वा तिलपुष्पमादद्यात् ।

ॐ उशन्त इत्यस्य मन्त्रस्य, शङ्ख ऋषिः, त्रिष्टुप्छन्दः, पितरो देवता, आवाहने विनियोगः । ॐ उशन्तस्त्वा निधीमह्युशन्तः-

(१) स्थलस्यस्य तीरसमीपे चेज्जले चेदुद्धृतोदकेन स्थले सम्भवे चावाहन-स्थानकुशेषु ताम्रपात्रादिस्थेषु जले स्थलेऽपि वा ।

समिधीमहि। उशन्तस्त्वा निधीमह्युशन्तः समिधीमहि। उशन्नुशत आवह पितॄन् हविषेऽत्तवे इति पठित्वा कव्यवालनलादयो दिव्यपितरोऽत्रागच्छत।

वसवो रुद्रा आदित्या आचार्य्या अत्रागच्छत, अमुकसगोत्रा अस्मत्पितृपितामहप्रपितामहा अमुकामुकामुकशर्म्माण अत्रागच्छत, अमुकसगोत्रा अस्मन्मातृपितामहीप्रपितामह्यः अमुकामुकामुका देव्यः अत्रागच्छत, अमुकसगोत्रा अस्मन्मातामहप्रमातामह-वृद्धप्रमातामहा अमुकामुकामुकशर्माणः अत्रागच्छत इति आवाहयेत्, असामर्थ्ये सामान्यतः पितरो अत्रागच्छत इति आवाहयेत्, जीवत्पितृको वस्वादिवृद्धप्रमातामहान्तानामावाहनं न कुर्य्यात्, केवलं मातरि मृतायां मातृपितामहीप्रपितामह्य अत्रागच्छत इति वर्हिषदः पितर इत्यनन्तरं आवाहयेत् तिलविकिरणं, आयान्तुन इत्यस्य मन्त्रस्य, शङ्ख ऋषिः, त्रिष्टुप् छन्दः, पितरो देवता जपे विनियोगः।

आयन्तुनः पितरः सोम्यासोऽग्नि[1]ष्वात्ता[2]पथिभिर्देवयानैः
अस्मिन् यज्ञे स्वधयामदन्तोऽधिब्रुवन्तु तेवन्त्वस्मान्।

इति जपः, रजतादिताम्रादिपात्राभावे रजतादिकीलकयुतेनाञ्जलिना वा, केवलाञ्जलिना वा तर्पणं, तर्पणसाधनदक्षहस्तस्थितकुशत्रयस्य द्विगुणीकृत्य कुशद्विदलेन मोटककरणम्।

कुशमूलाग्रयोर्जले प्रवेशाय सव्यहस्ते कुशमध्यधारणम्।

पितृतीर्थेन पात्रे जलपूरणं, दक्षिणहस्तेन अङ्गुष्ठतर्जनीरूपमुद्रां परिहृत्य पात्रस्थलेषु तिलप्रक्षेपः।

(१) ष्वा-। (२) त्ता-।

शुद्धाञ्जलिना ग्रहणे पूर्व्वमेव दक्षिणहस्तेन तिलानादाय वामहस्ते कृत्वा जलपूरणं, उद्धृतोदकेन पक्षे भूमिष्ठजलपूर्ण-पात्रे तिलान् प्रक्षिप्य तत्पात्रात्पात्रेण सतिलजलग्रहणं जीवत्पितृ-कस्य तिलतर्पणाभावः, कव्यवालनलादीनां प्रत्येकं वारत्रयं तर्पणं, ॐ कव्यबालनलस्तृप्यतां, इति गोशृङ्गमात्रमुद्धृत्य पितृ-तीर्थेन जलं क्षिपेत् । त्यागो मानसः ।

ॐ सोमस्तृप्यतां, ॐ यमस्तृप्यतां, ॐ अर्यमा तृप्यतां, ॐ अग्निष्वात्ताः पितरस्तृप्यन्तां, ॐ सोमपाः पितरस्तृप्यन्तां, ॐ बर्हिषदः पितरस्तृप्यन्तां, एतावज्जीवत्पितृकः कुर्य्यात् ।

पितरि जीवति मातरि मृतायां मातृपितामहीनां तर्पणमत्रैव, प्रपितामही ततः प्रमीतपितृकस्याधिकं, ॐ वसव-स्तृप्यन्तामिदं जलं तेभ्यः स्वधानमः, इति पितृतीर्थेन गोशृङ्ग-मात्रमुद्धृत्य वारत्रयम् ।

इतःप्रभृति सर्वेषां प्रत्येकं वारत्रयं तर्पणं, ॐ रुद्रास्तृप्यन्ता-मिदं जलं तेभ्यः स्वधा नमः, ॐ आदित्यास्तृप्यन्तां इदं जलं तेभ्यः स्वधा नमः, ॐ आचार्य्यास्तृप्यन्तां इदं जलं तेभ्यः स्वधा नमः ।

अत्र मन्त्रादौ प्रणवोच्चारणं, नामविशेषणगोत्रादौ च ।

अथ पित्रादितर्पणं, उदीरतामित्यस्य मन्त्रस्य, प्रजापति-ऋषिः त्रिष्टुप्छन्दः, पितरो देवताः, पितृतर्पणे विनियोगः, ॐ उदीरतामवर उत्परा स उन्मध्यमाः पितरः सोम्यासः ।

असुं य ईयुरवृकारुतज्ञास्तेनोऽवन्तु पितरो हवेषु इति पठित्वा

अमुकसगोत्रोऽस्मत्पिता अमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधा नमः, इति प्रथमाञ्जलिं दद्यात्।

अङ्गिरस इत्यस्य मन्त्रस्य, अङ्गिरा ऋषिः, त्रिष्टुप्छन्दः, पितरो देवताः, पितृतर्पणे विनियोगः, अङ्गिरसोनः पितरोऽनवग्वा अथर्वाणो भृगवः सोम्यासः, तेषां वयं सुमतौयज्ञियानामपि भद्रे सौमनसे स्यामः, अमुकसगोत्रोऽस्मत्पिता अमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधा नमः, इति द्वितीयाञ्जलिं दद्यात्। आयन्तुन इत्यस्य मन्त्रस्य, शङ्ख ऋषिः, त्रिष्टुप्छन्दः पितरो देवताः पितृतर्पणे विनियोगः, ॐ मधुवाता ऋतायते मधुक्षरन्तु साधवः, माध्वीर्नः सन्त्वोषधीः।

आयान्तुन इति अस्मानित्यन्तं पठित्वा अमुकसगोत्रोऽस्मत् पिता अमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इति तृतीयाञ्जलिं दद्यात्, प्रत्यञ्जलि मानसस्त्यागः।

ऊर्जमित्यस्य मन्त्रस्य, प्रजापति ऋषिः, यजुःपितरोदेवताः, पितामहतर्पणे विनियोगः, ॐ ऊर्जंवहन्तीरमृतं घृतं पयःकीलालं परिस्रुतं, स्वधास्थतर्पयतमे पितॄन्, ॐ अमुकसगोत्रोऽस्मत्पितामहोऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इतिप्रथमाञ्जलिदानं, त्यागः सर्वत्र मानसः।

ॐ पितृभ्य इत्यस्य मन्त्रस्य, प्रजापति ऋषिः, यजुः पितरोदेवताः पितामहतर्पणे विनियोगः, ॐ पितृभ्यः स्वधायिभ्यः स्वधानमः, पितामहेभ्यः स्वधायिभ्यः स्वधानमः, प्रपितामहेभ्यः स्वाधायिभ्यः स्वधानमः, अक्षन् पितरोऽमीमदन्त पितरोऽति-

तृप्यन्तु पितरोपितरः शुन्धध्वं, अमुकसगोत्रोऽस्मत्पितामहो-ऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इति द्वितीया-ञ्जलिदानम् ।

येचेह इत्यस्य मन्त्रस्य, प्रजापति ऋषिः, त्रिष्टुप्छन्दः, पितरो देवताः पितामहतर्पणे विनियोगः, ॐ येचेह पितरो येचनेह यांश्च विद्मयाꣳ। उच न प्रविद्म, त्वं वेत्थ यति ते जातवेदः स्वधाभिः यज्ञं सुकृतं जुषस्व, ॐ अमुकसगोत्रोऽस्मत्पितामहो ऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इति तृतीया-ञ्जलिदानम् ।

ॐ मधुवाता इत्यस्य मन्त्रस्य, गौतम ऋषिः, गायत्रीछन्दः विश्वेदेवा देवताः, प्रपितामहतर्पणे विनियोगः ।

ॐ मधुवाता ऋताय ते मधु चरन्ति [1]साधवः, माध्वीर्नः [2]सन्तोषधीः, अमुकसगोत्रोऽस्मत्पितामहोऽमुकदेवशर्मा तृप्यता-मिदं जलं तस्मै स्वधानमः, इति प्रथमाञ्जलि दानम् ।

मधुनक्तमित्यस्य मन्त्रस्य, गौतम ऋषिः, गायत्रीछन्दः, विश्वे-देवा देवताः प्रपितामहतर्पणे विनियोगः, ॐ मधुनक्तमुतोषसो-मधुमत्पार्थिवं रजः, मधुद्यौरस्तुनः पिता, अमुकसगोत्रोऽस्मत्-प्रपितामहोऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इति द्वितीयाञ्जलिदानम् ।

ॐ मधुमां न इत्यस्य मन्त्रस्य, गौतम ऋषिः, गायत्रीछन्दः, विश्वेदेवा देवताः, प्रपितामहतर्पणे विनियोगः ।

---

(१) सिन्धवः । (२) सन्त्योषधीः ।

ॐ मधुमान्नो वनस्पतिर्मधुमां अस्तु सूर्य्यः, माध्वीर्गावो भवन्तु नः, अमुकसगोत्रोऽस्मत्प्रपितामहो अमुकदेवशर्म्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इति तृतीयाञ्जलिदानम्।

अमुकसगोत्रास्मत्पितृपितामहप्रपितामहा अमुकामुकामुकदेवशर्म्माणस्तृप्यध्वमिदं जलं युष्मभ्यं स्वधानमः, इति मन्त्रं प्रत्यञ्जलि पठित्वा अञ्जलित्रयदानं, पितामहे जीवति प्रपितामहे पितामहसम्बन्धिमन्त्राः।

एवमन्यद्गृह्य,—

ॐ नमोव इत्यस्य मन्त्रस्य, प्रजापति ऋषिः, यजुः, पितरोदेवताः जपे विनियोगः, ॐ नमोवः पितरो [1]शुष्मायनमो वः पितरस्तपसे नमोवः पितरो यज्जीवं तस्मै नमोवः पितरो रसाय, नमो वः पितरो घोराय मन्यवे स्वधायै वः पितरो नमः, इति कृताञ्जलिर्जपेत्, [2]पुनः षट्कृत्वो नमस्कुर्यात्।

अथ मातृतर्पणं,—

अमुकसगोत्राऽस्मन्माताऽमुकादेवी तृप्यतामिदं जलं तस्यै स्वधानमः, इति प्रत्यञ्जलि पठित्वा अञ्जलित्रयं दद्यात्, एवं अमुकसगोत्राऽस्मत्पितामही तृप्यतामिदं जलं तस्यै स्वधानमः इति प्रत्यञ्जलि पठित्वा अञ्जलित्रयं दद्यात्, अमुकसगोत्राऽस्मत्प्रपितामही तृप्यतामिदं जलं तस्यै स्वधानमः इति प्रत्यञ्जलि पठित्वा अञ्जलित्रयं दद्यात्।

(१) शोषाय। (२) न षट् कृत्वो नमः कुर्य्यात्।

## अथ मातामहादितर्पणम् ।

अमुकसगोत्रोऽस्मन्मातामहोऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इति प्रत्यञ्जलि पठित्वा अञ्जलित्रयं दद्यात् ।

अमुकसगोत्रोऽस्मत्प्रमातामहोऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इति प्रत्यञ्जलि पठित्वा अञ्जलित्रयं दद्यात्, अमुकसगोत्रोऽस्मद्वृद्धप्रमातामहोऽमुकदेवशर्मा तृप्यतामिदं जलं तस्मै स्वधानमः, इति प्रत्यञ्जलि पठित्वा अञ्जलित्रयं दद्यात् ।

ततो ज्येष्ठमात्रादीनां तत्पुत्राभावे तर्पणम् ।

यथा,—

अमुकसगोत्राऽस्मज्ज्येष्ठमाताऽमुकादेवी तृप्यतामिदं जलं तस्यै स्वधानमः, इत्येकवारं तर्पणं, एवं कनिष्ठमात्रादीनामूह्यम् ।

देवा सुरास्तथायक्षा नागागन्धर्वराक्षसाः ।
पिशाचा गुह्यकाः सिद्धाः कुष्माण्डास्तरवः खगाः ॥
जलेचरा भूनिलया वाय्वाहाराश्च जन्तवः ।
तृप्तिमेते प्रयान्त्याशु मद्दत्तेनाम्बुनाऽखिलाः ॥

इति पितृतीर्थेन जलाञ्जलिदानम् ।

एते च प्रेतभावं गता इति बुद्ध्वा तर्पणम् ।

तथा,—

नरकेषु समस्तेषु यातनासु च ये स्थिताः ।
तेषामाप्याययायैतद्दीयते सलिलं मया ॥

इत्येकाञ्जलिः,—

तथा,—

ये बान्धवा अबान्धवा अन्यजन्मनि बान्धवाः।

ते तृप्तिमखिला यान्तु ये चास्मत्तोयकांक्षिणः॥

इत्येकाञ्जलिदानं—

ततः स्नानवस्त्रे मूर्त्तिकां त्रिवारं दत्त्वा वस्त्रक्षालनं समाचारादास्तरणकुशत्रयं तर्पणकुशत्रयं च एकीकृत्य भूमौ संस्थाप्य तत्र स्नानवस्त्रनिष्पीड़नम्।

ये चास्माकं कुले जाता अपुत्रा गोत्रिणो मृताः।

ते गृह्णन्तु मया दत्तं वस्त्रनिष्पीड़ितोदकम्॥

इति मन्त्रेण,—

स्नानाभावेऽपि एतज्जलाञ्जलिदानमत्रैव॥

निष्पीड़नकाले चासंस्कृतप्रमीतानां वृद्धौ करणं ततो यज्ञोपवीती भूत्वा पूर्व्वमुखः सकृदाचमेत्।

अथ जपयज्ञः—

गायत्र्या ऋष्यादिकं स्मृत्वा यथा शक्तिगायत्रीजपः, अस्य शक्तौ सत्यामघमर्षणादीनां जपः।

जपविधिस्तद्धर्मांश्चोक्ताः।

अथ सूर्य्यार्घ्यः—

अग्रतस्ताम्रादिपात्रेऽष्टदलपद्मं लिखित्वा तिलतण्डुलरक्तचन्दनयुक्तजलपात्रं असम्भवे केवलजलपूरितपात्रं गृहीत्वा ऋष्यादिस्मरणपूर्व्वकं हंसः शुचिषदित्यृचा मूर्द्धपर्य्यन्तं पात्रमुत्थाप्य सूर्याय अर्घ्यो नमः, इति लिखितपद्मेऽर्घाम्बुप्रक्षेपः, शिरस्यञ्जलिं

निधाय, नमः सवित्रे जगदेकचक्षुषे जगत्प्रसूतिस्थितिनाशहेतवे, त्रयोमयाय त्रिगुणात्मधारिणे विरञ्चिनारायणशङ्करात्मने नमः, इति नमस्कुर्य्यात्, त्रिः प्रदक्षिणं कुर्य्यात् ।

अथ तर्पणोत्तरकर्म्म,—

तत्र ब्रह्मपूजा,—

ब्रह्माणं चतुर्वक्त्रं रक्तवर्णकमण्डलुस्रक्[1]सूत्रहस्तं ध्यात्वा हिरण्यगर्भ इत्यस्य मन्त्रस्य, प्रजापति ऋषिः, त्रिष्टुप्छन्दः, हिरण्यगर्भो देवता, ब्रह्मपूजायां विनियोगः ।

हिरण्यगर्भः समवर्त्तताग्रे भूतस्य जातः पतिरेक आसीत् ।
सदाधार पृथिवीं द्यामुतेमां तस्मै देवाय हविषा विधेम ॥

इतिजले पुष्पप्रक्षेपः, नात्रावाहनादि, पुष्पदानरूपैव पूजा ।

विष्णुपूजायां विशेषः—

यथा,—

प्रणवमन्त्रस्य, प्रजापति ऋषिः, दैवी गायत्रीछन्दः परमात्मा देवता, विष्णुपूजाकर्म्मणि विनियोगः, प्रणवेनार्घ्यसंस्कारः, जले नारायणमावाहयामि नारायण अत्रागच्छेति जलेन ध्येयः सदेति ध्यात्वा आवाहनं, नारायणाय नमः, नारायणाय गन्धो नमः, इति जलेन गन्धदानं, पुरुषसूक्तस्य ऋष्यादिस्मरणम् ।

पूजाया विनियोग इति विशेषः ।

ॐ सहस्र शीर्षेत्यादि साध्याः सन्तु देवा इत्यन्तं सूक्तमुच्चार्य्य

---

(१) स्रक्सुवाद्यतस्त्रहस्तं- ।

नारायणाय पुष्पं ददामीति पुष्पदानं, असम्भवे तदर्थमपि जलदानं, गायत्र्या ऋष्यादि स्मृत्वा गायत्रीमुच्चार्य्य नारायणाय धूपः स्वाहेति धूपदानं, गायत्रीमुच्चार्य्य नारायणायेति दीपः स्वाहेति दीपदानम् ।

गायत्रीमुच्चार्य्य नारायणाय नैवेद्यं स्वाहेति नैवेद्यदानं, आचमनं, गायत्रीमुच्चार्य्य नारायणाय नमः इति पुष्पाञ्जलित्रयदानं, गायत्रीमुच्चार्य्य नारायणाय नमः स्वस्थानं गच्छेति हृदयकमले गत इति चिन्तनं, इदं सर्व्वं जलेनैव निर्वाहयेत्, सम्भवे पुष्पेण, शक्तौ सत्यां सर्वोपचारान् साक्षाद्दद्यात्, तदन्ते निरञ्जनब्रह्मत्वेन ध्यानं इति विष्णुपूजा ।

---

## अथ रुद्रपूजा ।

नमस्त इत्यस्य मन्त्रस्य, अघोर ऋषिः, गायत्रीछन्दः रुद्रो-देवता, रुद्रपूजायां विनियोगः ।

रुद्रं वृषं रूढ़ं शूलहस्तं शुक्लं शुक्लवाससं ध्यात्वा नमस्ते रुद्र मन्यव उतोत इषवे नमः, बाहुभ्यामुतते नमः इत्युच्चार्य्य रुद्राय नम इति जले पुष्पं दद्यात्, अभावे जलदानं, इयमेव रुद्रपूजा ।

---

## अथ सूर्य्यपूजा ।

देव सवितरित्यस्य मन्त्रस्य, नारायण ऋषिः, यजुः सविता देवता, सूर्य्यपूजायां विनियोगः ।

देव सवितः प्रसुवयज्ञं प्रसुवयज्ञपतिं भगाय दिव्यो गन्धर्वः केतपः[1] केतन्नः पुनातु वाचस्पतिर्वाचं नः स्वदतु ।

गायत्र्याः विश्वामित्र ऋषिः, गायत्रीछन्दः, सविता देवता, पूजायां विनियोगः ।

ततो गायत्रीं पठेत्, विश्वानित्यस्य मन्त्रस्य, नारायण-ऋषिः, गायत्रीछन्दः, सविता देवता, पूजायां विनियोगः, विश्वानि देव सवित दुरितानि परासुव, नाभिद्रं तन्न आसुव, इति मन्त्रत्रयं पठित्वा सूर्य्यं रक्तं द्विभुजं पद्महस्तं ध्यात्वा सवित्रे नमः, इति जले पुष्पं जलं वा दद्यात्, इति सूर्य्यपूजा ।

## अथ मित्रपूजा ।

दण्डहस्तं महिषवाहनं कृष्णवर्णं मित्रं ध्यात्वा, मित्रस्येत्यस्य मन्त्रस्य, प्रजापति ऋषिः, गायत्रीछन्दः, मित्रो देवता, मित्र-पूजायां विनियोगः ।

मित्रस्य [2]र्वृर्षणीधृतो गोदेवस्य मानसे, द्युम्नं वित्तं स्तवस्तमं, मित्र इत्यस्य मन्त्रस्य, प्रजापति ऋषिः, यजुः, मित्रो देवता, मित्रपूजायां विनियोगः ।

मित्रो [3]न एहि सुमित्रधा इन्द्रस्य रुमाविशदक्षिणं उशन्नुशतॕ स्योनः स्योनम् ।

(१) केतवः । (२) तर्षणी- । (३) मित्र न एहि ।

ध्रुत इत्यस्य मन्त्रस्य, प्रजापति ऋषिः, यजुः, मित्रो देवता मित्रपूजायां विनियोगः ।

ध्रुते दृंहमामित्यस्य मा चक्षुषा सर्व्वाणि भूतानि समोक्षन्तां, मित्रस्याहं न चक्षुषा सर्व्वाणि भूतानि समीक्षे, इति मन्त्रत्रय-मुच्चार्य्य मित्राय नमः, इति जले पुष्पं जलं क्षिपेत् । इति मित्रपूजा ।

## अथ वरुणपूजा ।

शुक्लवर्णं पाशहस्तं मकरवाहनं वरुणं ध्यात्वा इमं मे वरुण तत्वा-यामि उरुं इति मन्त्रः तस्य यस्य ऋष्यादिस्मरणं कृत्वा मन्त्रत्रय-मुच्चार्य्य वरुणाय नम इति जले पुष्पं जलं वा क्षिपेत् । इति वरुणपूजा ।

हंसः, शुचिषदिति सूर्य्यावलोकनम् ।

अदृश्रमस्येति मन्त्रस्य, प्रजापति ऋषिः, गायत्रीछन्दः, सूर्य्यो देवता, सूर्य्योपस्थाने विनियोगः ।

अदृश्रमस्य केतवो विरश्मयो जनां अनु ।

भ्राजन्तो अग्नयो यथा ।

इति सूर्य्याभिमुखस्य ऊर्द्ध्ववाहोरवस्थानं, संवर्च्चसेत्यस्य मन्त्रस्य, प्रजापति ऋषिः, त्रिष्टुप्छन्दः, त्वष्टा देवता, मुखविमार्ज्जने विनियोगः, संवर्च्चसा पयसो संतनूभिरगन्महिमनसासंशिवेन, त्वष्टसुदन्तो विदधातु रायोनुमार्ष्टितन्वोयद्विष्टम् । अनेन तोयेन

पाणिभ्यां मुखविमार्जनम् । स्वयम्भूरित्यस्य मन्त्रस्य, प्रजापति-ऋषिः, यजुः, सूर्यो देवता, उपस्थाने विनियोगः ।

स्वयम्भूरसि श्रेष्ठोरश्मिर्वर्चोदा असिवर्चो मे देहि ।

सूर्य्यस्यावृतमन्वावर्त्ते, अनेन सूर्य्योपस्थानम् ।

सूर्य्यस्येत्यस्य मन्त्रस्य, प्रजापति ऋषिः, यजुः, सूर्य्यो देवता, प्रदक्षिणे विनियोगः । सूर्य्यस्यावृतमन्वावर्त्ते, अनेन प्रदक्षिणम् । उपविश्य दिग्भ्यो नम इति दिङ्नमस्कारः । दिग्देवताभ्यो नम-इति दिग्देवतानमस्कारः, नमो ब्रह्मणे इति नमस्कृत्य जला-ञ्जलिदानम् ।

एवमग्नये नमः, पृथिव्यै नमः, ओषधीभ्यो नमः, वाचे नमः, वाचस्पतये नमः, विष्णवे नमः, महते नमः, एतेभ्यो नमस्कृत्य प्रत्येकं जलाञ्जलिदानं, तीर्थे च तीर्थदेशक्षालनं, नमो ऽद्भ्यो अपाम्पतये वरुणाय नमो नमः, इति जलनमस्कारः ।

अत्र भूमौ शिरः कृत्वा वेदनमस्कारः, ऋग्वेदाय नमः, यजुर्वेदाय नमः सामवेदाय नमः, अथर्ववेदाय नमः ।

इदमाप इत्यस्य मन्त्रस्य, [1]परमेष्ठी ऋषिः, अनुष्टुप्छन्दः, वरुणो देवता, तीर्थविसर्जने विनियोगः ।

इदमापः प्रवहत यत्किञ्चिद्दुरितं मयि, यद्वाहमभिदुद्रोह यद्वाशेप उतानृतम् ।

धाम्न इत्यस्य मन्त्रस्य, प्रजापति ऋषिः, धाम्नो धाम्न इति

(१) परमेष्ठिप्रजापति ऋषिः ।

यजुः यदाहुरघ्न इति गायत्रीछन्दः, वरुणो देवता, तीर्थविसर्ज्जने विनियोगः ।

धाम्नो धाम्नोराजꣳस्ततो वरुण नो मुञ्च । यदाहुरघ्न्या वरुणेति शपामहे ततो वरुण नो मुञ्च ।

गङ्गे स्वस्थानं गच्छेति तीर्थविसर्जनं, एवमावाहितस्य तिर्थान्तरस्यापि विसर्जनं, आप्यायस्वेत्यस्य मन्त्रस्य, प्रजापति ऋषिः गायत्रीछन्दः, सोमो देवता, जपे विनियोगः, आप्यायस्व समे तु ते विश्वतः सोमवृष्णंर,[1] भवावाजस्य सङ्गत्थे, इति दश जपेत्, देवागातुविंद इत्यस्य मन्त्रस्य, प्रजापति ऋषिः, यजुः, गातुविदो देवता, जपसमर्पणे विनियोगः ।

देवागातु मिदो गातु मित्वा गातु मित, मनसम्पतइमं[2] देवयज्ञꣳ स्वाहा वातेधाः, अनेन जपेन परमात्मा विष्णुः प्रीयतामिति जपनिवेदनं, एवं स्नात्वा गृहागमनं, माध्याह्निककर्मानन्तरम् ।

याज्ञवल्क्यः,—

प्रक्षाल्य तीर्थदेवीं[3] तु गत्वा स्वं धर्म्ममाचरेत् ।

तथा,—

अवन्त्यादिष्वथाचम्य सोपानत्को ह्यसंस्पृशन् ।
आचान्तः सोदकुम्भस्तु यत्नेन शुचिरेव सः ॥

(१) विष्णुं । (३) देवं तु ।
(२) दानसम्मतत ।

तेनोदकेन द्रव्याणि प्रोक्ष्याचम्य पुनर्गृहे ।
ततः कर्म्माणि कुर्वीत नित्यं वै यानि कानि च ॥

द्रव्याणि पूजापञ्चयज्ञोपयुक्तानि,—

पात्रादिरहितं तोयमुद्धृतं सव्यपाणिना ।
न तेन प्रोक्षणं कुर्य्या[1]द्वस्त्रनिष्पीड़नेन च ॥

शातातपः,—

नाधोवस्त्रैकदेशेन शुद्ध्यर्थमप आहरेत् ।
यदानीतं तु सव्येन प्रोक्षयेद्दक्षिणेन तु ॥

अत्र प्रोक्षणलक्षणं, पूजापञ्चयज्ञभोजनार्थमीदृशमेव जलमित्यवगन्तव्यं,

विष्णुपुराणे, तर्पणानन्तरं ततो गृहार्च्चनं कुर्य्यादभीष्टसुपूजनम् ।

जलाभिषेकपुष्पाणां धूपादीनां निवेदनैः ।

पद्मपुराण,—

द्विजङ्गां काञ्चनं स्पृष्ट्वा ततो विष्णुगृहं व्रजेत् ॥
आश्रयेषु ततः पूज्यः प्रतिमां वापि पूजयेत् ।

नरसिंहपुराणे,—

जले देवं नमस्कृत्य ततो गृहगतः पुनः ।
विधिना पुरुषसूक्तस्य ततो विष्णुं समर्च्चयेत् ॥

एवमाचान्तपूर्व्वं विष्णुपूजायां कृतायामपि पुरुषसूक्तेन मध्याह्ने पूजा आवश्यकी नित्यवद्विधानात् ।

---

(१) -दभिष्टपूजनं "जलाभिषेकपुष्पाणां वस्त्रनिष्पीडनेन च ।

तथाच शिष्टाः,—

प्रातस्तु पूजयेद्विष्णुं पञ्चरात्रविधानतः ।
मध्याह्ने पूजयेद्विद्वान् विष्णुपुरुषसूक्तकैः ॥

पुरुषसूक्तयाज्ञवल्कीयकल्पे ।

चतुरस्रपुरं कृत्वा चतुर्द्वारि विभूषितम् ।
तन्मध्ये विलिखेत् पद्मं कर्णिकाकेशरान्वितम् ॥
प्रणवेन फटन्तेन करौ संशोधयेत्ततः ।
दिग्बन्धनं ततः कुर्य्याद्विधिवद्भूतशोधनम् ॥
प्रणवं प्लुतमुच्चार्य्य वीजं सञ्चिन्त्य निर्द्दहेत् ।
तन्मध्ये तूर्द्ध्वरन्ध्रेण मरुता शोषयेत्ततः ॥
निर्द्दहेदग्निवीजेन प्लावयेद्वारुणेन च ।
एकार्णवमपर्य्यन्तं[1] भावयेत्सचराचरम् ।
ततोऽण्डं जलमध्यस्थं शुद्धकाञ्चनसप्रभम् ॥
वारुणेन तु सञ्चिन्त्य तन्मध्ये पूजयेद्धरिम् ॥
फुल्लारविन्दवदनं पीतनिर्म्मलवाससम् ।
पङ्कजासनमध्यस्थं शुद्धजाम्बूनदप्रभम् ॥
केयूरकटकोपेतं हारकुण्डलमण्डितम् ।
सशङ्खचक्रं सुस्मेरं मुकुटाद्युपशोभितम् ।
सञ्चिन्त्य जीवमात्मानं तं हृदिस्थं विचिन्तयेत् ॥

(१) एकार्णवमपर्य्यन्तं ।

सोऽहमस्मीत्यभेदेन चिन्तयित्वात्म[1]पूजनम् ।
कृत्वा मुद्रात्रयं धृत्वा कुर्य्यान्न्यासविधानतः ॥
आद्यामृतं न्यसेद्वामे द्वितीयां दक्षिणे करे ।
तृतीयां वामपादे तु चतुर्थीं दक्षिणे तथा ॥
पञ्चमीं वामजानौ तु षष्ठीं वै दक्षिणे न्यसेत् ।
सप्तमीं वामकट्यां तु दक्षिणस्यां तथाष्टमीम् ॥
नवमीं नाभिदेशे तु दशमीं हृदये न्यसेत् ।
एकादशीं कण्ठदेशे द्वादशीं वामबाहुके ॥
त्रयोदशीं दक्षिणे च मुखे चैव चतुर्द्दशीम् ।
अक्ष्णोः पञ्चदशीं चैव षोड़शीं मूर्द्धि विन्यसेत् ॥
एवं न्यासविधिं कृत्वा पश्चात्पात्रस्य शोधनम् ।
अस्त्रेण चालयेद्विप्रोगायत्र्या जलपूरणम् ॥
गन्धादि दत्त्वा दशधा वीजं तु प्रणवं न्यसेत् ।
मन्त्रन्यासं ततः कृत्वा प्रोच्चयेत् मण्डलान्तिकम् ॥
अवगुण्ठ्य ततोऽस्त्रेण शङ्खमुद्रां प्रदर्शयेत् ।
हृदये श्रीधरं देवं गन्धाद्यैर्मानसैर्य्यजेत् ॥
पूजयेदासनं तत्र क्रमादाधारशक्तितः ।
आधारशक्तिं कूर्म्मं च अनन्तं क्षितिमण्डलम् ॥
धर्म्मं ज्ञानञ्च वैराग्यमैश्वर्य्यमपि कोणतः ।
पूर्व्वतोऽधर्म्ममज्ञानमवैराग्यमनैश्वरम् ॥

(१) चिन्तयित्वा स्वपूजनम् ।

संपूज्याऽष्टदलं पद्ममर्कसोमाग्निमण्डलम् ।
उपर्य्युपरि संपूज्य मध्ये तु पुरुषं यजेत् ॥

ध्येयः सदा सवितृमण्डलमध्यवर्त्ती, नारायणः सरसिजासन-सन्निविष्टः केयूरवान् मकरकुण्डलवान् किरीटी हारी हिरण्मय-वपुर्धृतशङ्खचक्रः ।

आद्ययावाहयेद्देवं पूर्व्वमुद्राः प्रदर्शयेत् ।
एतावन्तो प्रिया विष्णोर्वन्दनीयास्तु भो द्विजाः ॥
एतावद्दर्शयेत्तिस्रः कृतकृत्यस्ततो भवेत् ।
द्वितीययासनं दद्यात्पाद्यं दद्यात्तृतीयया ॥
स्वदेहे विन्यसेद्देवं सूक्तेन पुरुषस्य तु ।
चतुर्थ्यार्घं ततो दद्यात्पञ्चम्याचमनीयकम् ॥
षष्ठ्या स्नानं प्रकुर्वीत सप्तम्यां पीतवाससी ।
यज्ञोपवीतमष्टम्यां नवम्यां गन्धमेव च ॥
पुष्पं दद्याद्दशम्यां तु एकादश्यां तु धूपकम् ।
द्वादश्यां दीपदानं स्यात्त्रयोदश्यां निवेदनम् ॥
पूर्व्ववत् स्नाननैवेद्यवस्त्रेणाचमनं भवेत् ।
गणेशं क्षेत्रपालं च नारदं गुरुमेव च ॥
सर्व्वतः पूजयेद्विद्वान् मध्ये लोकेशपद्मयोः ।
इन्द्रमग्निं यमं चैव नैर्ऋतं वरुणं तथा ॥
वायुं कुवेरमीशानमनन्तं परमेष्ठिनम् ।
स्वासु दिक्षु ततोऽस्त्राणि नामभिः प्रणवादिभिः ॥

सर्व्वतः पूजयेद्विद्वान् तत्सर्वं प्रणवे स्थितम्।
देवं प्रणवबीजेन संपूज्याञ्जलिभिस्त्रिभिः॥
जपेदष्टोत्तरशतं तन्नमोऽन्तं ततो द्विजाः।
गुह्यातिगुह्यगोप्ता त्वं गृहाणास्मत्कृतं जपम्॥
सिद्धिर्भवतु मे देव त्वत्प्रसादादधोक्षज।
एवं निवेद्य विधिवज्जपं श्रीपुरुषोत्तमे॥
षडृचं पुरतो जप्त्वा जप्तमन्यत्ततो जपेत्।
विष्वक्सेनं तथैशान्यां प्रणवेनैव पूजयेत्॥
गन्धपुष्पादिभिः कृष्णं दंष्ट्रिणं घोरदर्शिनम्।
चतुर्द्दश्याञ्जलिं कुर्य्यात् पञ्चदश्या प्रदक्षिणम्॥
कृत्वा देवस्य पुरतः प्रणमेद्दण्डवत् क्षितौ।
ध्यायेन्मण्डलमध्यस्थं सकलं निष्कलं हृदि॥
अच्छिद्रमवधार्य्यान्ते क्षमस्वेति ततो वदेत्।
संहृत्य मण्डलाद्देवं षोड़श्या प्रणवं पठेत्॥
नासाकर्षणयोगेन हृदि संस्थापयेत् प्रभुम्।
आदित्यवर्णं पुरुषं पुण्डरीकनिभेक्षणम्॥
भक्तिस्निग्धेन मनसा ध्यायेत् पापहरं हरिम्।
योगमूर्त्तिं चतुर्बाहुं शङ्खचक्रगदाधरम्॥
यो वा ध्यायेद्विभूत्यर्थमाप्नोति वसुमिप्सितम्।

अत्र बीजं सञ्चिन्त्य निर्द्दहेदिति बीजं वायुबीजं यं सञ्चिन्त्य मरुता शोषयेत् इति सम्बन्धः, निर्द्दहेदिति वक्ष्यमाणवह्निदाहस्य शोषणसाध्यत्वदर्शनाय प्रथममुपात्तं निर्दग्धं शोषयेदित्यर्थः।

मध्यादूर्द्ध्वरन्ध्रेणेति जीवमात्मानं हृदिस्थं विचिन्तयेदिति वक्ष्यमाणत्वान्मध्यात्हृन्मध्यात् सुषुम्णामार्गेण ऊर्द्ध्वब्रह्मरन्ध्रेण जीवं द्वादशान्तं नयेदिति सम्बन्धः।

निर्दहेदित्यत्र निर्णयेदिति पाठे स्फुटमेव जीवनयनचिन्तनम्। रमिति अग्निबीजं, वं वारुणबीजं सोऽहमस्मीति विष्णुरहमस्मीत्यर्थः, आत्मपूजनं मन्त्राभावे भेदचिन्तनमेव मानसपूजाया वक्ष्यमाणत्वात्, मुद्रात्रयमत्र विष्णोरसाधारणं श्रीवत्सकौस्तुभवैनतेयमुद्रारूपम्।

एतावन्तः प्रियाविष्णोरिति वक्ष्यमाणत्वात्।

एवं तत्त्वसागरसंहितोक्तं सर्वदेवसाधारणं अञ्जलिवन्दिनी नामकमुद्रात्रयं नात्रोपादेयम्।

कुर्यान्न्यासं विधानं तु इति मातृकान्यासकेशवादिन्यासभावनाचतुष्टयरूपन्यासाः तन्त्रान्तरोक्ताः सूचिताः, पूजाङ्गमन्त्रन्यासमाह।

आद्यामृतं न्यसेद्वाम इत्यादिना विष्णोर्गायत्रेरति गायत्रीछन्दस्को वैष्णवो मन्त्रस्तद्विष्णोरितिगाद्यगन्धादित्यादिशब्देन गन्धपुष्पाक्षतयवकुशाग्रतिलश्वेतसर्षपदूर्वाः, मन्त्रन्यासं ततो कृत्वेति उक्तस्य दशधा प्रणवजपस्यानुवादः, पूर्वोक्तविष्णुगायत्री वा मन्त्रः।

पूजाङ्गपुरुषसूक्तमन्त्रो वा, प्रोच्चयेन्मण्डलान्तिकमिति, अर्थसंस्कारस्यात्र कृतस्य दृष्टार्थत्वादर्थक्रमेण पाठक्रमबाधात्प्रोच्चयेन्मण्डलान्तिकमिति शङ्खमुद्रादर्शनानन्तरं सम्बध्यते, तच्च मण्डलं

लिखितपद्मं तत्पर्य्यन्तं द्रव्यजातं सर्वमर्घं संस्कृत्य प्रोक्षयेदिति सम्बन्धः, पूजयेदासनं तत्रेति तत्र मानसपूजायां, आधारादिक्रमेणासनपूजा कार्य्या ।

अर्थाद्बाह्यपूजायामप्यनेनैव विधिना आसनपूजेति गम्यते । आसनं पूजयेदिति तत्रापि सम्बन्धात् ।

आवाहयेदिति हृदये विष्णुं ध्यात्वा नासाद्वारेणावाहनम् ।

नासाप्रदेशेनोद्वासनस्य वक्ष्यमाणत्वात्, आसनपाद्यदानानन्तरं स्वदेहवदाद्यास्ततं न्यसेद्वाम इत्यादिक्रमेण न्यासः ।

लोकेशपद्मयोरिति कर्णिकायां लोकेशो विष्णुः तद्बाह्ये दलानि, तयोर्मध्य इत्यर्थः, तेन दलमूले शक्रादयः, ततोऽस्त्राणि तदनन्तरं दलमध्येऽस्त्राणि वज्रादीनि स्वासु दिक्षु पूजयेदिति सम्बन्धः ।

सङ्ख्यं जप्त्वा ऊर्द्ध्वमन्वजपेदिति स्तोत्रानन्तरं सहस्रनामादि जपेदित्यर्थः, मध्याह्ने गोपालपूजायां ध्याने विशेषः ।

वन्द्यं देवैर्मुकुन्दं विकसितकरविन्दाभमिन्दीवराक्षम् ।
गोगोपीवृन्दवीजं जितरिपुनिवहं कुन्दमन्दारभासम् ॥
नीलग्रीवाग्रपिच्छाकलनसुविलसत्कुन्तलं भानुमन्तम् ।
देवं पीताम्बरं तं यजतु च दिनशो मध्यमेऽह्नो रमायै ॥

ततो गृहपतिः कुर्यादभीष्टसुरपूजनं, इत्युक्तत्वादस्मिन् कालेऽभीष्टगृहदेवतानां पक्वान्नेन पूजा विशेषविधिना कार्य्या असम्भवे पञ्चोपचारपूजादिनाऽपि पाकस्य सर्वार्थत्वाद्वैश्वदेवापूर्वमपि-

नैवेद्यविनियोगे दोषाभावात्, वैश्वदेवात्पूर्वमपि [1]यदि भोजने दोषाभावात्, यत्तु पञ्चमभागे वैश्वदेवार्थं भूतवाचनमुक्तं तद्वैश्व-देवाङ्गमिति न कश्चिद्विरोधः, पूजानन्तरं वैश्वदेवसमाचारस्य सिद्ध एव इति चतुर्थभागकृत्यम्।

## अथ पञ्चमभागकृत्यम्।

दक्षः,—

पञ्चमे च तथा भागे संविभागो यथार्हतः।
देवपितृमनुष्याणां कीटानां चोपदिश्यते॥

यथार्हतो यथायोग्यं, मनुः,—

पञ्चसूना गृहस्थस्य चुल्ली पेषिण्युपस्करः।
कण्डनी चोदकुम्भश्च वध्यन्ते यास्तु वाहयन्॥
आसां क्रमेण सर्व्वासां निष्कृत्यर्थं महर्षिभिः।
पञ्चकॢप्ता महायज्ञाः प्रत्यहं गृहमेधिनां॥
अध्यापनं ब्रह्मयज्ञः पितृयज्ञश्च तर्पणम्।
होमो दैवो वलिर्भौतो नृयज्ञोऽतिथिपूजनम्॥
पञ्चैतान् यो महायज्ञान्न हापयति शक्तितः।
स गृहेऽपि वसन्नित्यं सूनादोषैर्न लिप्यते॥

याः सूना वाहयन् अतिक्रामन् विप्र इति शेषः वध्यते युज्यते पापेनेति शेषः।

---

(१) यति भोजने दोषाभावात्।

छन्दोगपरिशिष्टे,—

श्राद्धं वा पितृयज्ञः स्यात्पित्र्यो वलिरथापिवा।
यश्च श्रुतिजपः प्रोक्तो ब्रह्मयज्ञः स उच्यते॥

अध्यापनस्य ब्रह्मयज्ञत्वं,—

वैकल्पिकं, अत्र सम्भवे समुच्चयः, असम्भवे विकल्पः।
तर्पणश्राद्धवलीनां त्रयाणां सति सम्भवे पितृयज्ञत्वम्॥

वलिदाननित्यश्राद्धाशक्तस्य तर्पणमात्रेण पितृयज्ञसिद्धिः।

यदेव तर्पयेत्वद्भिः पितॄन् स्नात्वा द्विजोत्तमः।
तेनैव सर्व्वमाप्नोति पितृयज्ञक्रियाफलम्॥

इति मनुवचनात्,—

नित्यश्राद्धाशक्तस्य वलिदानमात्रे पितृयज्ञसिद्धिः॥

पित्र्योवलिरथापि वेत्युक्तेः, अत्यन्ताशक्तस्य तु गोतमः, देवपितृमनुष्यभूतर्षिपूजकः, नित्यः स्वाध्यायः पितृभ्यश्चोदकदानं यथोत्साहमन्यत् इति, ब्रह्मयज्ञतर्पणाभ्याञ्च यज्ञसिद्धिमाह, अत्र ऋषिपूजेति ब्रह्मयज्ञः,—

भूतपूजा वलिपूजा मनुष्यपूजा अतिथिपूजा एतेषां नित्यत्वादुपात्तदुरितक्षयफलं, तद्दुरितं चात्र सूनाजन्यं, तदभावे दुरितान्तरक्षय इत्येव।

वैश्वदेवविचारः, शातातपः,—

लौकिके वैदिके वापि हुतोच्छिष्टे जले क्षितौ।
वैश्वदेवस्तु कर्त्तव्यः पञ्चसूनापनुत्तये॥

हुतोच्छिष्ट इति अग्निहोत्राद्यनन्तरं अपद्रव्याकर्मालौकिक-
इत्युक्तरूपाहवनीयादौ, जले क्षितौ चाग्निस्थापनाङ्गपरिसमूहना-
द्यभावः।

अत्र शिष्टाः,—

पचनाग्निं न गृह्णीयात्परवेश्मनि जातुचित्।
तत्पक्वेन तु यः कुर्य्यादग्निदस्य तु तत्फलम्॥
तस्माच्चुल्लीगतं वह्निं न कुर्य्यात्तु विनाशिनम्।
तद्विनाशे मथित्वा तु श्रोत्रियागारतोऽपिवा॥

श्रौतस्मार्त्ताग्निरहितस्य तु मनुः,—

वैवाहिकेऽग्नौ कुर्वीत गृह्यकर्म्म यथाविधि।
पञ्चयज्ञविधानञ्च[1] पंक्तिंचान्वाहिकीं गृही॥

अत्र अग्निहोत्रं जुहोति यवागुं पचतीत्यत्र यवागुपाकस्या-
दृष्टकल्पनाभयेनाग्निहोत्रार्थत्ववत् गृह्याग्न्याधारान्वाहिकपावक-
स्यापि पञ्चयज्ञार्थत्वं, साग्नेः प्रवासे पाकेऽपि न दोषः।

तथाङ्गिराः,—

शालाग्नौ निर्वपेदन्नं लौकिके वाऽपि नित्यशः।
यस्मिन्नेव पचेदन्नं तस्मिन् होमो विधीयते॥

शालाग्निरावसथ्यः, समारोपेऽपि न दोषः।

पचनं यदि कुर्वीत प्रवसन्नग्निमान् द्विजः।
समारोपे कृते चाग्नौ वैश्वदेवं तु लौकिके॥

---

(१) पञ्चयज्ञविधानं चान्वाहिकीं गृहीपंक्तिपाकम्।

कात्यायनः—

सायं प्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म्म च।

अनश्नतापि सततमन्यथा किल्बिषी भवेत्॥

एवं—

प्रातर्होमं ततः कृत्वा समुद्धृत्य हुताशनात्।

शेषं महानसे कृत्वा तत्र पाकं समाचरेत्॥

तत्र विशेषः,—

आहृतो यदि संसृज्येत् संसृष्टमुपशामयेत्।

असंसृष्टं जागरयेदेष धर्म्मः सनातनः॥

चुल्लीतः स्मार्त्ताग्नौ अग्न्यन्तरं संसर्गे तत्त्यागः कार्य्य इत्यर्थः।

कात्यायनः,—

भूतं प्रवाचयेत्पत्नीं यद्यसन्निहिता भवेत्।

महानसेऽन्नं च यावत्सवर्णान्तां प्रवाचयेत्॥

प्रणवाद्यपि वा कुर्य्यात् कात्यायनवचो यथा।

स्वामी सिद्धमन्नं भो इत्यादिरूपेण पत्नीं वाचयेत्॥

पत्न्यभावेऽन्यां पाककर्त्रीं, पत्नी अन्या वा यदि भूतमिति वक्तुं न शक्नोति तदा ॐमिति सम्मतिं सूचयेदित्यर्थः।

शिष्टाः—

आर्द्रामलकमानेन कुर्याद्धोमबलिं तथा।

वैश्वदेवाधिकारे विष्णुः, सर्व्वतः पाकात् समुद्धृत्य '(१)जुहुयात्, तत्र देवयज्ञः।

(१) जुहुयात्।

विष्णुपुराणे,—

अप्पूर्व्वमग्निहोत्रञ्च कुर्य्यात्प्राक्ब्रह्मणे ततः।

प्रजापतिं समुद्दिश्य दद्यादाहुतिमादरात्॥

गुह्याभ्यः कश्यपायाथ ततोऽनुमतये क्रमात्।

अप्पूर्वं जलेन आदौ पर्युक्षणं कृत्वेत्यर्थः, अग्निहोत्रपदेनात्र ब्रह्मादिहोमो गृह्यते अग्नौ हूयमानत्वात्, अनेन पर्य्युक्षणमात्र-विधानेन होमसामान्येतिकर्त्तव्यता निर्वर्त्त्यते।

पारस्करः,—

अथातः पञ्चमहायज्ञा वैश्वदेवादन्नात् पर्य्युक्ष्य[1] स्वाहाकारैर्जुहुयात्, ब्रह्मणे प्रजापतये गुह्याभ्यः कश्यपायानुमतये, वैश्वदेवादन्नादिति, वैश्वदेवसम्बन्धित्वेन कृतादन्नादित्यर्थः, तेन वैश्वदेवार्थः पाकः, अतएव बलिहरणादिकमपि, वैश्वदेवपदञ्च होमकर्म्मणो नाम-धेयम्।

---

## अथ भूतयज्ञः।

वैश्वदेवहोमानन्तरं विष्णुः। ततोऽन्नशेषेण बलिमुपाहरेत्। तेन होमशेषद्रव्येणैव बलिर्न पृथग्द्रव्येण, स्विष्टकृदन्यप्रयुक्तद्रव्यो-पजोवित्वात्, नचैवं तन्नाशे वा जिनयागवल्लोपप्रसङ्गः, नित्येनादृष्ट-सिद्ध्यर्थं द्रव्यान्तराक्षेपात्। पदपांशुनाशे पांश्वन्तरेण यूपाञ्जनवत्। कात्यायनः,—पिण्डवत्पश्चिमा प्रतिपत्तिः।

---

(१) प्य।

तथा,—

अमुष्मै नम इत्येवं वलिदानं विधीयते।
वलिदानप्रदानार्थं नमस्कारः कृतो यतः॥
स्वाहाकारनमस्कारवषट्कारा दिवौकसाम्।
स्वाहाकारः पितॄणां तु हन्तकारो नृणां ततः॥
स्वधाकारेण निर्वपेत्पित्र्यं वलिमतः सदा।
तदप्येके नमस्कारैः कुर्व्वते नेति गौतमः॥

नचापरार्द्धा वलयो भवन्ति महामार्जारश्रवणप्रमाणात्। एकत्र चेत् कृत्स्ना भवन्ति इतरेतरसंसक्ताश्च, पिण्डवदिति पिण्डानां यथा पश्चिमा प्रतिपत्तिरग्निक्षेपादिका एवं वलीनामपि।

विड़ालकर्णप्रमाणान्यूना वलयो न भवन्ति इति केचित्।

आचारस्तु आर्द्रामलकमानेनेति वचनादार्द्रामलकप्रमाणा एव वलय इति।

आपस्तम्भः,—

वलीनां तस्य तस्य देशस्य संस्कारः।
'हस्तेन परिमृज्यावोक्ष्य न्युप्य परिषेचनम्॥
तस्य तस्येति वीप्सावलात्तन्त्रेण न स्थानसंस्कारः।
न्युप्य निवापं कृत्वा परिषेचनम्॥

गोभिलः,—

सकृदपो निनीय वलिं निदध्यात्सकृदन्ततः।

---

(१) हस्तेन परिमृज्यावोक्ष्य न्युप्य परिषेचनम्।

परिषिञ्चेदेकैकञ्वा, एवं च सर्व्वबलीनां आदावन्ते च सकृदेव परिषेचनं, प्रत्येकं वादावन्ते च इति विकल्पः।

परिमार्जनादि तु प्रत्येकमेव न तन्त्रेण।

तथाचापस्तम्बः, सकृदन्ते परिषेचनम्॥

ततस्तोयमुपादाय तेषामाचमनाय वै।

स्थानेषु निक्षिपेत्प्राज्ञो नाम्ना तूद्दिश्य देवताम्॥

एतच्च नामकीर्त्तनं परिषेचनाङ्गम्॥

पारस्करः,—

परिहरणं भूतगुह्येभ्यो मणिके त्रीन्।

पर्ज्जन्यायाभ्यः[1] पृथिव्यै, धात्रे विधात्रे च द्वार्य्ययोः॥

प्रतिदिशं वायवे, दिशां च मध्ये त्रीन् ब्रह्मणे अन्तरीक्षाय सूर्य्याय, विश्वेभ्यो देवेभ्यो विश्वेभ्यश्च भूतेभ्यो उत्तरतः।

उषसे भूतानाञ्चपतये परं उत्तरतः, पितृभ्यः स्वधानम इति दक्षिणतः पात्रं निर्णिज्योत्तरापरस्यां दिशि निनयेत्। यक्ष्मैतत्त इति गृहान्तरेऽपि, दक्षिणे चोदकं दद्यात् यक्ष्मैतत्त इति वदन्

उद्धृत्याग्रं ब्राह्मणाय प्रयच्छेदन्त इति।

यथार्हं भिक्षुकानतिथींश्चैव संविभजेरन्॥

बालज्येष्ठा गृह्या यथार्हमश्नीयुः, पश्चाद्गृहपतिः पत्नी च पूर्व्वौ वा गृहपतिः, पूर्व्वमतिथिभ्योऽश्नीयादिति श्रुतेरिति।

ग्रासप्रमाणा भिक्षा स्यादग्रं ग्रासचतुष्टयम्॥

(१) -द्भ्यः।

अयं चतुर्गुणं प्राहुर्हन्तकारं द्विजोत्तमा इति विष्णुपुराणीयं अग्रहन्तकारयोर्लक्षणम् ।

बालज्येष्ठा इत्यादि सूत्रार्थः क्रियते, गृह्या गृहभवाः पुत्रादयः बालज्येष्ठो येषां ते तथा, बालानन्तरमश्नीयुरित्यर्थः अतिथिभोजनानन्तरं गृहस्थः पत्नी च यद्भुञ्जीयातामिति एकः पक्षः, पत्न्याः पूर्व्वं वा गृहपतिरित्यपरः, सूत्रोक्तश्रुतौ अतिथिभ्य इत्यत्रानन्तरमपि शेषः, स्वादु इष्टमन्नमश्नीयादिति कर्काचार्य्याः, स्वाद्वन्नादिष्टमिति हरिहरभाष्यम् ।

तथाच पाठद्वयं,

विष्णुपुराणे,—

ततोऽन्यदन्नमादाय भूमिभागे शुचौ पुनः ।
दद्यादशेषभूतेभ्यः स्वेच्छया तु समाहितः ॥
देवा मनुष्याः पशव इत्यादि मन्त्रा लिखिताः ।
तत्र स्वेच्छयेति काम्यत्वोक्तेर्न नित्यकरणसमाचारः ॥

तत्र,—

श्वचाण्डालविहङ्गानां भुवि दद्यात्ततो नरः ।
अन्यदन्नमिति वलिहरणोपयुक्तव्यतिरिक्तम् ॥

स्मृत्यन्तरे च,—

अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् ।

तथाच एतानुद्दिश्यान्नत्यागमात्रं न चाण्डालादिस्वीकरणपर्य्यन्तं तेन तद्योग्यस्थाने प्रक्षेपमात्रम् ।

वशिष्ठः,—

श्रोत्रियायाग्रं दत्त्वा ब्रह्मचारितत्रानन्तरं पितृभ्यो दद्यात् इदं च बलिकर्म्मान्तर्गतम्। एतदनन्तरमेव अतिथींश्च सम्भावयेदिति पारस्करवचनात्।

मनुः,—

भिक्षामप्युदपात्रं वा सत्कृत्य विधिपूर्व्वकम्।
वेदतत्त्वार्थविदुषे ब्राह्मणायोपपादयेत्॥

तथा,—

नश्यन्ति हव्यकव्यानि नराणां अविजानताम्।
भस्मीभूतेषु विप्रेषु मोहाद्दत्तानि दातृभिः॥
विद्यातपःसमृद्धेषु हुतं विप्रमुखाग्निषु।
निस्तारयति दुर्गाच्च महतश्चैव किल्बिषात्।

यमः,—

सत्कृत्य भिक्षवे भिक्षां यः प्रयच्छति मानवः।
गोप्रदानसमं पुण्यं तस्याह भगवान् यमः॥

इति भूतयज्ञः, शंखलिखितौ, गोदोहमात्रं कालमन्वाकांक्षेद-तिथिः, श्रोत्रियो वेदव्रती यतिधर्मा नैष्ठिकः समानवृत्तिर्योऽभ्या-गच्छेत्तस्मिन् काले इति।

तस्मिन्काले[1] बलिदानकाले श्रोत्रियः, एकशाखाध्यायी, यतिधर्मा यतिः, नैष्ठिको नैष्ठिकब्रह्मचारी, समानवृत्तिस्तुल्य-जीवनोपायः।

---

(1) तस्मिन्काले बलिदानानन्तरकाले।

## अथ पितृयज्ञनित्यश्राद्धम् ।

मनुशातातपौ,—

श्राद्धस्य प्रथमे,—

दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।
पयोमूलफलैर्वापि पितृभ्यः प्रीतिमाहरन् ॥
अप्येकमाशयेद्विप्रं पित्रर्थं पाकयज्ञियम् ।
न चैवात्राशयेत्कश्चिद्वैश्वदेवं प्रति द्विजम् ॥

मात्स्ये,—

नित्यं तावत् प्रवक्ष्यामि अर्घावाहनवर्ज्जितम् ।
अदैवं तद्विजानीयात् पार्वणं पर्वसु स्मृतम् ॥

कात्यायनः,—

अप्येकमाशयेद्विप्रं पितृयज्ञार्थसिद्धये ।
अदैवं नास्ति चेदन्यो भोक्ता भोज्यमथापि वा ॥
अप्युद्धृत्य यथाशक्ति किंचिदन्नं यथाविधि ।
पितृभ्यश्च मनुष्येभ्यो दद्यादहरहो द्विजः ॥
पितृभ्य इदमित्युक्त्वा स्वधाकारेण कारयेत् ।
हन्तकारं मनुष्येभ्यस्तदन्ते निनयेदपः ।

बहुषु काव्येषु[1] एकेनैव सिद्धेन वर्गद्वयार्थं ब्राह्मणद्वयापेक्षा, मनुष्येभ्य इति सनकादिभ्यः, मनुष्येभ्योनिवर्त्या[2]न्नं हन्तेत्युत्सृजेदिति स्मृत्यन्तरात्, इदञ्च नित्यश्राद्धाङ्गं तत्प्रकरणात्, नित्य-

(१) वाक्येषु । (२) निवर्त्यान्नम् ।

आद्यमदैवं स्यामुष्यैः सह गीयत इति स्मृत्यन्तराच्च, अभ्युदृत्ते-
त्युक्तेर्नात्र ब्राह्मणापेक्षा, समाचारश्चैवमेव, हन्तकारं षोड़शग्रास-
परिमितमन्नम् ।

शिष्टाः,—

आसिक्तैः पाणिनैवार्घो देयोत्सर्गोऽक्षयस्तथा ।

स्वधावाचनमित्येतन्नित्यश्राद्धे चतुष्टयम् ॥

अतो नात्र श्राद्धेतिकर्त्तव्यतान्तरातिदेशः, तेन निमन्त्रणाद्यभावः ।

श्राद्धीयद्रव्यनियमस्याप्यभावः, प्रमाणाभावात् ।

आपस्तम्बः,—

यस्य चाग्नौ न क्रियते यस्य चाग्रं न दीयते, न तद्भोक्तव्यं
यस्येतिभोज्यस्य ।

विष्णुः,—

यन्न दद्यात्तन्नाश्नीयात्, भोज्यमात्रस्य नित्यश्राद्धदेयत्वेनोक्ते-
र्महिषीक्षीरादेरप्यत्र परिग्रहः, उपदेशातिदेशाभावेन अत्र तद्वर्ज-
नाप्रसक्तेश्च, अतएव मांसभोज्यमपि देयं,

देवान्पितृन् समभ्यर्च्य खादन्मांसं न दोषभाक् इति मनुना
नित्यश्राद्धाभिप्रायेण भोज्यताभ्यनुज्ञानात् ।

विशेषतः स्मृतिश्च,—

मांसमन्नं तथा ग्राह्यं गृहे यच्चोपसाधितमिति ।

यत्तु,—

दद्यादहरहः श्राद्धमन्नाद्येनोदकेन वा ।

पयोमूलं फलैर्वापि मांसवर्जमदैवतमिति, तदुदाहृतमांसदानपरवचनविरोधाद्दानप्रस्थविषयम् ।

काम्यमांसवर्जनं सङ्कल्पकर्त्तृविषयं वा, न तु सर्वविषयम् । तथाच पार्व्वणधर्म्मानतिदेशेऽपि ।

तत्र षट्पुरुषं ज्ञेयं पिण्डपात्रविवर्जितम् ।

यत्र पूज्यास्तु पितरस्तत्र मातामहा अपि इति वचनान्तरात्, पितरो यत्र पूज्यन्ते तत्र मातामहा अपि ।

अविशेषेण कर्त्तव्यं विशेषान्नरकं व्रजेदिति ऋष्यशृङ्गोक्तानारभ्यवादाच्च ।

तथा,—

पिता भुङ्क्ते द्विजकरे मुखे भुङ्क्ते पितामहः ।
प्रपितामहस्तु तालुस्थं कण्ठे मातामहः स्मृतः ।
प्रमातामहस्तु हृदये वृद्धो नाभौ प्रतिष्ठितः ॥
तस्मादुत्सर्गे षण्णां प्रत्येकं देवतात्वम् ।
तेन त्यागकाले इदं पित्रे इत्यादि प्रयोक्तव्यं,

पितृभ्य इदमित्युक्त्वा स्वधाकारेण चार्च्चयेत् इति कात्यायनवचनं, अर्घ्यस्वधावाचनविषयं, एवं च षट्पुरुषात्मकं मांसादिसहितं एकमेव पत्रं केचित् कुर्व्वन्ति, केचित्तु पित्रादित्रिपुरुषात्मकमेकं मातामहादित्रिपुरुषात्मकं चान्यत्पत्रमितिपत्रद्वयं कुर्व्वन्ति, भिन्नयोः पत्रद्वयकरणेऽपि,

पितरो यत्र पूज्यन्ते तत्र मातामहा अपि इति वचनस्य न विरोध इति समादधते च, बहवस्तु मांसरहितं पृथक् पृथक् पत्रद्वयं कृत्वा मांसयुक्तं षट्पुरुषात्मकं च पत्रमेकं कुर्वन्ति।

मांसवर्जमदैवतमिति वचनानुरोधेन पृथक् पृथक् पत्रद्वयं, मांसमन्नं तथा ग्राह्यमित्यादिवचनानुरोधेन षट्पुरुषात्मकमेकं पत्रमिति व्यवस्थाया युक्तत्वात्, इति तत्र कुलाचारव्यवस्थैव ग्राह्या वलिदानेऽपि न हविष्यान्ननियमः।

श्रुतिस्मृतिसमापन्नं देवद्रव्यगुणान्वितम्।
देवतायै यथाक्रमं प्रोच्चितं शिष्टभोजनम्॥

[1]इति शङ्खलिखिताभ्यां हविष्यमांसादेरपि देवद्रव्यत्वेन अभ्यनुज्ञातत्वात्।

यदन्नाः पुरुषा राजन् तदन्नाः पितृदेवताः।

इति वचनाच्च प्रोच्चितमिति यथाविहितभोजनानुवादेन अधिक-प्रोक्षणविधिपरः, तस्मात् शुचिः परिमिताहारः स्यादाहारशुद्धौ सत्वशुद्धिरिति आपस्तम्बवचनात् हविष्यभोजनं सत्वशुद्ध्यर्थं काम्यं, एवमन्यदपि ज्ञेयम्।

तत्र कर्त्तृविचारः। विष्णुपुराणे—

प्रेते पितृत्वमापन्ने सपिण्डीकरणादनु।
क्रियन्ते याः क्रियाः सर्वाः प्रोच्यन्ते तान्नृपोत्तराः॥

(१) इति शङ्खलिखिताभ्यां हविष्यमाषमांसादेरपि देवद्रव्यत्वेन अभ्यनुज्ञा-तत्वात्।

तथा पुत्राद्यैरेव चोत्तरा इति तत्रैवानुक्रान्तानां पुत्रपौत्रभ्रातृ-सन्ततिदौहित्रतदन्वयानां कर्त्तृत्वस्योक्तत्वात् प्रेतसंस्कारप्रायपाठात् प्रेतसंस्कारत्वेऽपि पितृव्यादीनामपुत्राणां भ्रातृसन्तत्यादयः सर्व एव नित्यश्राद्धं कुर्वीरन् ।

एवं पितरि मृते पितामहे च जीवति, पितामहस्य तु, वृत्तः स्याज्जिवेद्वापि पितामहः ।

पितुः स्वनाम संकीर्त्त्य कीर्त्तयेत् प्रपितामहमिति विष्णुपुराणवचनाद्वृद्धप्रपितामहप्रवेशेन श्राद्धं, त्रिपुरुषनियमस्य प्रमाणत्वात् ।

तथाच कात्यायनः,—

त्रीन् त्रीन् पिण्डान् विभज्य दद्यात् इति । एवं पितरि पितामहे च मृते प्रपितामहे जीवति वृद्धप्रपितामहप्रवेशेन श्राद्धम् ।

एतद्वचनस्यैव मानत्वात्, एवं मातामहे जीवति प्रमाता-महादित्रयमुद्दिश्य श्राद्धम् ।

पितरो यत्र पूज्यन्ते तत्र मातामहा अपीति त्रिपुरुषनियम-स्यैव मानत्वात्, एवं मातामहप्रमातामहयोर्मृतयोर्वृद्धप्रमातामहे जीवति अतिवृद्धप्रमातामहप्रवेशेन श्राद्धम् । एवं मातामहे मृते प्रमातामहे जीवति अतिवृद्धप्रमातामहप्रवेशपुरुषत्रय-श्राद्धम् ।

मातामहानामप्येवं श्राद्धं कुर्य्याद्विचक्षण इति विष्णुस्मृति-वचनात् पित्रादित्रयश्राद्धप्रकरणाधीतानारब्धविहितसर्वाङ्गानाम-

तिदेशसिद्धौ, त्रयाणामुदकं कार्य्यं त्रिषु पिण्डः प्रवर्त्तते इत्यस्यैव प्रमाणत्वात्। एतद्वैश्वदेवकर्म जीवत्पितृकेणापि नित्यश्राद्धवर्जं कार्य्यं, पितृग्रबलिस्तु कार्य्यः।

श्राद्धस्यैव निषिद्धत्वात्, न जीवन्तमतिदद्यात् इति प्रत्यक्षस्मृत्या निषेधात्, तत्र केचित्। यत्तु विष्णुवचनम्। जीवति पितरि येभ्यः स दद्यात्तेभ्यः। पितरि पितामहे च जीवति येभ्यः पितामहो दद्यात्। पित्रादित्रये जीवति नैव कुर्य्यादिति।

तथा—

येभ्यो वापि पिता दद्यात्तेभ्यो वापि प्रदापयेदिति तत्सर्वं साग्निकविषयम्।

न जीवत्पितृकः श्राद्धं कुर्य्यादग्निमृते द्विजः।

येभ्यो वापि पिता दद्यात्तेभ्यो दद्यात्तु साग्निकः॥ इति सुमन्तुवचनात्।

तस्यापि वैकल्पिकं इति तन्न।

न जीवन्तमतिदद्यादिति प्रत्यक्षश्रुतिविरोधात्।

तथा—

स पितुः पितृकृत्येषु अधिकारो न विद्यते।

इति विष्णुस्मृतिविरोधाच्च। सपितृकस्य तु साग्नेरपि न सर्वथा नित्यश्राद्धसमाचारः। प्रमीतपितृकस्यापि मातामहादित्रयजीवनेन नित्यश्राद्धकरणं, पित्रादित्रये जीवति नैव कुर्य्यादित्यस्यातिदेशात्। एतद्वैश्वदेवादिकं पितृपुत्रभ्रात्रादीनामविभक्ताना-

मेकेन करणे सर्वेषां प्रत्यवायपरिहारात् सर्वैः पृथक् पृथक् न कार्य्यम्।

एकपाके निवसतां पितृदेवद्विजार्चनम्।
एकं भवेद्विभक्तानां तदेव स्याद्गृहे गृहे॥ इति वचनात्॥

मानवे विभागप्रकरणे—

ज्येष्ठ एव तु गृह्णीयात् पित्र्यं धनमशेषतः।
शेषास्तमुपजीवेरन् यथैव पितरं तथा॥
एवं सह वसेयुर्वा पृथग्वा धर्मकाङ्क्षया।
पृथग् हि वर्द्धते धर्मस्तस्माद्धर्म्या पृथक् क्रियाः॥

इति, तथाच विभागाभावे वैश्वदेवादीनां तत्र करणं सिद्धं, पितरो यत्र पूज्यन्ते तत्र मातामहा अपीति गौतमोक्तेर्मातामहादिश्राद्धस्य पितृश्राद्धाधीनत्वात् अविभक्तसपत्नभ्रातृणामेकेन षाट्पुरुषिके श्राद्धे कृते अपरेण स्वमातामहाद्यर्थं पुनः पत्रान्तरं कार्य्यम्। एवं दर्शादिष्वपि बोध्यम्।

यत्कैश्चिदुक्तम्, वैश्वदेवस्यापि एकपाके निवसतामिति वचनबलाद्यदि एकत्वमङ्गीकर्त्तव्य, तदा अविभक्तानां देवार्चनादीनामपि न कार्य्यत्वं स्यादविशेषादिति।

न किञ्चिदेतत्। एकपाकस्थितानां पाके एकपूजाया एव समाचारात्। प्रवासे गृहान्तरावस्थाने वाऽप्यविभक्ताः।

पृथक् पाके सति पृथग्वैश्वदेवं कुर्वन्ति, तन्न न्याय्यम्। पाकस्य वैश्वदेवे निमित्तत्वापादकवचनाभावात्।

लौकिके वैदिके वापि हुतोच्छिष्टे जले क्षितौ।

वैश्वदेवस्तु कर्त्तव्यः पञ्चसूनापनुत्तये॥

इति शातातपाद्युक्तौ पञ्चसूनादोषस्यैव तन्निमित्तत्वमिति एकपाके इत्यादि वचनादेकपाकेन तत्करणे दोषनिवृत्तेर्न पृथक्करणम्। गृहस्थधर्मोक्तानां पूजादीनां पृथक्करणं तु यथा कथञ्चिन्निर्वाहयति, न पक्वद्रव्येणैव कुर्वन्त्यविभक्ताः। अथ यदि गृहस्वामी अनुपनीतः स्यात्तदा पञ्चयज्ञान्न कुर्य्यात्।

तथाच षष्ठे जैमिनिः अपि वा वेदतुल्यत्वादुपायेन[1] प्रवर्त्तेरन्निति।

स्मृतीनां वेदतुल्यत्वादुपायेन उपनयनादूर्द्ध्वं स्मार्त्तधर्माः प्रवर्त्तेरन्नित्यर्थः। तथाच जैमिनिना स्मार्त्तकर्ममात्रे उपनीताधिकारप्रतिपादनात्। अत्र केचित्, समावर्त्तेन तु ततः पञ्चमहायज्ञानिति उद्वाहानन्तरं पञ्चयज्ञा उक्ताः,

अनुपनीतोऽपि कुर्वीत मन्त्रवत् पैतृमेधिकम्।

यदसौ कृतचूड़ः स्याद्यदि न स्यात्त्रिवत्सरः॥

इति सुमन्तुवचनम्। नाभिव्याहरयेद्ब्रह्म स्वधानिनयनादृते इति मनुवचनाच्च सपिण्डीकरणान्तप्रेतसंस्कारपरम्।

मनुना तु, एतच्चानुपनीतोऽपि कुर्य्यात् सर्वेषु पर्वस्विति यदुक्तं तदपि दर्शादिश्राद्धानन्तरपरं, पार्वणश्राद्धानन्तरं तद्वचनस्योक्तत्वात्। इति,

वस्तुतस्तु पारस्करः। समावर्त्तनमुक्त्वा।

---

(१) उपानयेन।

## अथातः पञ्चमहायज्ञाः ।

अथ समावर्त्तनानन्तरं पञ्चमहायज्ञेष्वधिकारः ततो हेतोः, पञ्चसंख्यका महायज्ञशब्दवाच्याः कर्मविशेषा इत्यादि, तथा च समावर्त्तनानन्तरं उद्वाहेऽनुद्वाहेऽपि पञ्चयज्ञकरणमुचितम् ।

गृह्यसूत्रात् स्मृतेदुर्वलत्वात् सम्वर्त्तवचनमनादेयम् ।

यद्वा, समावर्त्तनानन्तरितविवाहपक्षाश्रयणपरं वा तत् । अनुपनीतस्य तु सर्वथा न पञ्चयज्ञाधिकारः । नित्यश्राद्धे तु उपदेशातिदेशयोरभावादकरणं, एतद्वैश्वदेवकर्म स्त्रिया क्लीवेन च कार्य्यम् । स्त्रिया क्लीवेन न हुते भुञ्जीत ब्राह्मणः क्वचिदिति मनूक्तेः । अत्र यद्यपि पारस्करसूत्रादिषु सनकाद्यनन्तरं अतिथि-भोजनदानमुक्तं हरिहरभाष्ये च यक्ष्मवल्यनन्तरं श्वादिवलय उक्ताः, तथापि, नित्यश्राद्धानन्तरं, ततोऽतिथीन् भोजयेत् श्रेयांसं श्रेयांस-मानुपूर्व्वेणेति वशिष्ठोक्तेरेव नित्यश्राद्धानन्तरं अतिथिब्राह्मणेभ्यो-दानसमाचारः ।

तथा,—

ततोऽन्यदन्नमादायेति विष्णुपुराणवचनमन्यदन्नमिति बलि-हरणोपयुक्तान्नादन्यान्नेन श्वश्वपचवायसवलीनां करणप्रसक्तौ तद्बलिपात्रादन्यपात्रे श्वादिवल्यर्थमन्नं स्थापयित्वाऽतिथिब्राह्मणा-नन्तरं श्वादिबलिदानसमाचारः ।

तत्र विष्णुपुराणे,—

श्वचाण्डालविहङ्गानां भुवि दद्यात्ततो नरः ।

इत्युक्ता एतेषां मन्त्रा नोक्ताः। तस्मात्, श्वभ्यो नमः, स्वपचेभ्यो नमः, वायसेभ्यो नमः, इति स्वनामचतुर्थ्यन्ता एव मन्त्राः आहृताः।

यस्तु वायुपुराणे ऐन्द्रवारुणवायव्या इति मन्त्रः। यश्च श्वानौ द्वौ श्यामशवलादिमन्त्रश्च तयोर्गयाश्राद्ध उक्तत्वात्र ताभ्यां दान-समाचारः।

युक्तं चैतत्, वायुपुराणीयमन्त्राणां गयाश्राद्ध एवोपयुक्तत्वात्। श्वभ्यो नमः इत्यादि बहुवचनप्रयोगस्तु विष्णुपुराणे बहुवचन-स्योक्तत्वात्।

अन्नं भूमौ श्वचाण्डालवायसेभ्यश्च निक्षिपेत् इति स्मृतेश्च।

श्वनां च पतितानां च स्वपचां पापरोगिणाम्।
वायसानां कृमीणाञ्च शनकैर्निर्वपेद् भुवि॥

इति बहुवचनस्य मनुनोक्तत्वाच्च। बहुस्मृतिषु स्वपचवायसानां उक्तत्वात् पतितादीनां न बल्यकरणसमाचारः।

## अथ गोग्रासदानम्।

तच्च काम्यं भविष्यपुराणे,—

तृणोदकादिसंयुक्तं यः प्रदद्याद्गवाह्निकम्।
कपिलादानस्य फलं प्राप्नुयान्नात्र संशयः॥

इदं च स्वगोपरगोसाधारणम्।

महाभारते, [1]'परगोसंप्रदानकं पृथक् दानान्तरम् ।

यथा—

घासमुष्टिं परगवे सान्नं दद्यात्तु यः सदा ।

अकृत्वा स्वयमाहारं स्वर्गलोकं स गच्छति ॥

एवं गोग्रासदानस्य काम्यत्वान्न सर्वेषां तत्करणसमाचारः ।

## अतिथिभ्यो दानविचारः ।

विष्णुपुराणे,—

ततो गोदोहमात्रं वै कालं [2]प्राप्नुयान्नात्र संशयः ।

अतिथिग्रहणार्थाय तदूर्द्ध्वं वा यथेच्छया ।

अतिथिं तत्र संप्राप्तं पूजयेत् स्वागतादिना ॥

तथासनप्रदानेन प्रियप्रश्नोत्तरेण च ।

गच्छतश्चानुपातेन प्रीतिमुत्पादयेत् गृही ॥

अज्ञातकुलनामानमन्यतः समुपागतम् ।

पूजयेदतिथिं सम्यक् एकग्रामनिवासिनम् ॥

अकिञ्चनमसम्बन्धिमन्यदेशादुपागतम् ।

असम्पूज्यातिथिं भुञ्जन् भोक्तुकामो व्रजत्यधः ॥

स्वाध्यायगोत्रचरणमपृष्ट्वा च तथा कुलम् ।

हिरण्यगर्भबुद्ध्या तं मन्ये अभ्यागतं गृही ॥

(१) परगोग्रासदानकं पृथक् पृथक् दानान्तरम् ।

(२) तिष्ठेद्गृहाङ्गणे ।

तथा,—

अतिथिर्यस्य भग्नाशो गृहाद्यात्यन्यतो मुखः।
स तस्मै दुष्कृतं दत्त्वा पुण्यमादाय गच्छति॥
धाता प्रजापतिः शक्रो वह्निर्वसुगणोऽर्यमा।
प्रविश्यातिथिमेवैते भुञ्जते वै नराधिप॥
तस्मादतिथिपूजायां यतेत सततं नरः।
स केवलमघं भुङ्क्ते यो भुङ्क्ते त्वतिथिं विना॥

मनुः,—

संप्राप्तायाप्यतिथये प्रदद्यादासनोदके।
अन्नं चैव यथाशक्ति प्रदद्याद्-विधिपूर्वकम्॥
अग्निं हुत्वा विधानेन यत् पुण्यफलमश्नुते।
तेन तुल्यं विशिष्टं वा ब्राह्मणे तर्पिते फलम्॥

तथा,—

तृणानि भूमिरुदकं वाक्चतुर्थी च सूनृता।
एतान्यपि सतां गेहे नोच्छिद्यन्ते कदाचन॥

तथा,—

विप्रपादोदकक्लिन्ना यावत्तिष्ठति मेदिनी।
तावत् पुष्करपात्रेण पिबन्ति पितरो जलम्॥

शङ्खलिखितौ। यथा प्रणीतस्याप्रणीतस्याग्निर्दैवतं, एवं विद्वांश्चा विद्वांश्च ब्राह्मणः पूज्य एव सर्वेषां, यत्र हि ब्राह्मणो न भुंक्ते-तद्धुतमप्यहुतमेवेत्यादि।

तथा,—

वयोवित्तविद्यातपःसंपन्नाय पाद्यमर्घ्याचमनीयमन्नविशेषांश्च तस्मै दद्यात्, सहासीत, प्रदोषेऽनुज्ञाप्य शयीत, पूर्व्वं प्रतिबुध्येत, प्रस्थितमनुव्रजेत्, विद्योद्यानारामवापीतड़ागदेवगृहमहाक्रदस्थाननदीनामन्यतरस्मिन् प्रदक्षिणं कुर्यात्, वाचमुत्सृज्य पुनर्दर्शयेति, विद्यादीनामन्यतरस्मिन् स्थाने पुनर्दर्शयेति, वाचमुत्सृज्य प्रदक्षिणीकुर्य्यादित्यर्थः ।

हारीतः,—

अतिथिश्चेदागच्छेद्यतिर्वैखानसः समानवृत्तिः स्नातको वा तस्य स्वागतमर्घ्यं पाद्यमाचमनीयं च प्रदाय याश्चौषधयः सन्ति ताश्चोपहरेत्, त्रसं प्रयान्तमनु विष्णुक्रमान् क्रामति, मोदन्ते पितरः प्रपितामहाः ।

तेनानुज्ञातो निवर्त्तेत, वसेच्चेद्विधिवत्परिचरणं, अकृतविवाहोऽत्र स्नातकः, गृहस्थः समानवृत्तिः, विष्णुक्रमादि विविष्णुर्व्यक्रस्त इत्यादि मन्त्रकरणकपादन्यासा यज्ञाङ्गरूपाः, एते च काम्याः ।

आपस्तम्बः,—

यानवन्तमायानात्, यावन्नानुजानीयादितरं, अप्रतिभायां सीम्नो निवर्त्तेत, इतरं यानरहितमित्यर्थः ।

दक्षः,—

मनश्चक्षुर्मुखं वाचं सौम्यं दद्याच्चतुष्टयम् ।
अभ्युत्थानमिहागच्छ पूर्व्वालापः प्रियान्वितः ॥

उपासनमनुव्रज्या कार्य्याण्येतानि यत्नतः।

तथा,—

पादशौचं तथाऽभ्यङ्गमाश्रयः शयनं तथा।

मृज्जलं चार्थिने देयं एतान्यपि सदा गृहे॥

गुरौ विशेषमाहापस्तम्बः, वेदाचार्य्योऽभ्यागच्छेत्, तमभिमुखोऽभ्यागम्य उपसंगृह्य न वीभत्समानमुदकमुपस्पृशेत्, पुरस्कृत्योपस्थाप्य यथोपदेशं पूजयेदासने शयने भक्ष्यभोज्ये वाससि संनिहिते हीनतरप्रवृत्तिः, तिष्ठन् सव्येन पाणिनानुगृह्याचार्य्यमाचामयेदन्यम् वासमुदेतं स्नानासनचंक्रमणस्मितेष्वनुचिकीर्षेत्, संनिहिते मूत्रपुरीषे वा वात्सकर्मोच्चैर्भाषाहासनिष्ठीवनदन्तनिष्ठीवनसिंहनभूत्क्षेपणताड़ननिष्ठादीनि।

दारे प्रजायां चोपस्पर्शनं भाषा विश्रम्भपूर्व्वाः परिवर्जयेत्, वाक्येन वाक्यप्रतिघातमाचार्य्यस्य वर्जयेत्, श्रेयसां च, उपसंगृह्य पादाविति शेषः, न वीभत्समानमिति आचार्यं पादस्पर्शे घृणामकुर्वन् पादौ प्रक्षालयेत्, पुरस्कृत्य सत्कृत्य मान्येनोपस्थाप्य मदीयम् सर्व्वमिति निवेद्य यथोपदेशं यथाशास्त्रं, संनिहिते गुरौ तिष्ठन्नाचार्य्यमाचामयेन्नोपविष्टः सव्येन पाणिनानुगृह्य दक्षजलपात्रं वामपाणौ कृत्वा आचामयेत्, अनुचिकीर्षेत्, [1]आचार्यस्य स्नानादि कुर्य्यात्, संनिहिते गुरौ मूत्रादि वर्जयेत्, दारे प्रजायां चोप-

---

(१) आचार्य्यस्य स्नानाद्यनन्तरं स्नानादि कुर्य्यात्।

स्पर्शनं, अङ्गपरिष्वङ्गः, श्रेयसां च विद्यातपःसमृद्धानां गुरुवदातिथ्यमित्यर्थः ।

यतौ विशेषः ।

दक्षः,—

जन्मप्रभृति यत्पापं गृहस्थेन तु संचितम् ।
निर्माजयति तत्सर्वमेकरात्रोषितो यतिः ॥
आश्रमे तु यतिर्यस्य विश्राम्यति मुहूर्त्तकम् ।
किं तस्यान्येन धर्मेण कृतकृत्यो हि स स्मृतः ॥

मनुः,—

यत् पुण्यफलमाप्नोति गां दत्त्वा विधिवद्गुरौ ।
तत् पुण्यफलमाप्नोति भिक्षां दत्त्वा च भिक्षवे ॥

पाद्मे,—

यः पात्रपूरणं भिक्षां यतिभ्यः सम्प्रयच्छति ।
विमुक्तः सर्वपापेभ्यो नासौ दुर्गतिमाप्नुयात् ॥
यतिहस्ते जलं दत्त्वा भैक्ष्यं दत्त्वा पुनर्जलम् ।
तद्भैक्ष्यं मेरुणा तुल्यं तज्जलं सागरोपमम् ॥
यतिर्यस्य गृहे भुंक्ते तस्य भुंक्ते हरिः स्वयम् ।

नारसिंहे,—

अकृते वैश्वदेवे तु भिक्षार्थे गृहमागते ।
उद्धृत्य वैश्वदेवार्थं भिक्षां दत्त्वा विसर्जयेत् ॥
वैश्वदेवकृतं दोषं शक्तो भिक्षुर्व्यपोहति ।
न तु भिक्षुकृतं दोषं वैश्वदेवो व्यपोहति ॥

मनुः,—

अप्रणोद्योऽतिथिः सायं सूर्य्योढ़ो गृहमागते।
काले प्राप्तस्त्वकाले वा नास्यानश्नन् गृहे वसेत्॥
न वै स्वयं तदश्नीयादतिथिं यन्न भोजयेत्।

तथा,—

आसनावसथौ शय्यामनुव्रज्यामुपासनम्।
उत्तमेषूत्तमान् कुर्य्याद्धीने हीनं समे समम्॥

तथा,—

न ब्राह्मणस्य त्वतिथिर्गृहे राजन्य उच्यते।
वैश्यशूद्रौ सखा चैव ज्ञातयो गुरुरेव च॥
यदि त्वतिथिधर्म्मेण क्षत्रियो गृहमाव्रजेत्।
भुक्तवत्सु तु विप्रेषु कामं तमपि भोजयेत्॥
वैश्यशूद्रावपि प्राप्तौ कुटुम्बेऽतिथिधर्म्मिणौ।
भोजयेत् सह भृत्यैस्तान् नृशंसं संप्रयोजयन्॥

आपस्तम्बः,—

शूद्रमभ्यागतं कर्म्मणि नियुंज्यात्।

अथास्मै दद्यात्, दासा वा राजकुलादाहृत्यातिथिवत् शूद्रं पूजयेयुः। इति, एतेन कर्म्मकरणं विना शूद्राय स्वयं न दद्यादित्यर्थः।

शातातपः—

अन्योऽन्यं गुरवो विप्रा अन्योऽन्यातिथयः स्मृताः।

तथा,—

भिक्षां वा पुष्कलं वापि हन्तकारमथापि वा ।
असम्भवे सदा दद्यादुदपात्रमथापि वा ॥
ग्रासमात्रा भवेद्भिक्षा पुष्कलं च चतुर्गुणम् ।
पुष्कलानि च चत्वारि हन्तकारं विदुर्बुधाः ॥

मनुः—

पाषण्डिनो विकर्मस्थान् वैड़ालव्रतिकान् शठान् ।
हैतुकान् वकवृत्तींश्च वाङ्मात्रेणापि नार्चयेत् ॥

पाषण्डिनो वेदवाह्यशास्त्ररताः, विकर्म्मस्थाः स्वाश्रमधर्महीनाः, वैड़ालव्रतिकाः, धर्मध्वजी सदा लुब्ध इत्यादिरूपेण तदुक्ताः, शठाः व्याजेन धर्म्मकारिणः, हैतुका वेदविरुद्धतर्कनिष्ठाः, वकवृत्तयः, अधोदृष्टिर्नैष्कृतिकः स्वार्थसाधनतत्पर इत्येवं मनूक्ताः ।

ब्राह्मे—

देवैर्जिता दैत्या एव पाषण्डिन इत्युपक्रम्य ।
नित्यं सत्पुरुषं कुर्यादेतेष्वभ्यधिकां दयाम् ॥

दुःखाकुलं जगदेतद्विचार्य्य नमोऽस्तु धर्मायेति ब्रुवंश्च ।

दद्याच्चान्नं सर्वगतं च विष्णुं प्रणम्य वै द्वादशवर्णमात्रम् ।
ॐ नमो भगवते वासुदेवायेति द्वादशाक्षरमन्त्रमुच्चार्य्य सर्वगतं विष्णुम् प्रणम्य नमोऽस्तु धर्मायेति वदन् पाषण्डिभ्योऽप्यन्नं दद्यादित्यर्थः ।

यम:—

तिथिपर्वोत्सवा: सर्वे त्यक्ता येन महात्मना ।

सोऽतिथि: सर्वभूतानां शेषानभ्यागतान् विदु: ॥

व्रती यतिर्नैकरात्रं[1] निवसन्नुच्यतेऽतिथि: ।

पर्वाण्यमावास्यादीनि, उत्सवा विवाहाद्या:, एतेन मृष्टान्न-लोलुपा इत्यर्थ: ।

मनुर्विष्णु: शातातपश्च—

एकरात्रन्तु निवसन्नतिथिर्ब्राह्मण: स्मृत: ।

अनित्यं हि स्थितिर्यस्मात्तस्मादतिथिरुच्यते ॥

[2]नैकाग्रमिणमतिथिं विप्रं साङ्गतिकं तथा ।

उपस्थितं गृहे विद्यात् भार्य्या यत्राग्नयोऽपि वा ॥

परिहासादिभि: सर्वै: सङ्गत: साङ्गतिक:, एतौ काले प्राप्तावपि नातिथी, द्वितीयदिनाद्यवस्थितातिथीनां सत्कार:

काम्य:

आपस्तम्बीयादौ द्रष्टव्य: ।

आपस्तम्ब:,—

न गृहे भुञ्जीतानवशिष्यातिथिभ्य: ।

पराशर:,—

अचिन्तितमनाहूतं देशकाल उपस्थितम् ।

अतिथिं तं विजानीयान्नातिथि: पूर्वमागत: ॥

---

(१) वै । (२) नैकग्रामीणम- ।

क्षुधार्त्तस्तृषितः श्रान्तो दूराध्वानमुपागतम् ।
तं पूजयेत्प्रयत्नेन सोऽतिथिः स्वर्गसंक्रमः ॥

देशो भार्य्यादिभिः सहितः, कालो वैश्वदेवान्तः ।

शातातपः,—

प्रियो वा यदि वा द्वेष्यो मूर्खः पण्डित एव वा ।
वैश्वदेवे तु संप्राप्ते सोऽतिथिः स्वर्गसंक्रमः ॥

इदञ्च यथोक्तातिथ्यलाभेऽनुकल्परूपेण ।

वशिष्ठः,—

चण्डालपतितवायसेभ्यो भूमौ निक्षिपेत् ॥

यमः,—

येषामनश्नन्नतिथिर्विप्राणां व्रजते गृहात् ।
ते वै खरत्वमुष्ट्रत्वमश्वत्वमुपपेदिरे ॥

तथा,—

अतिथिं यत्र वै ग्रामे भिक्षमाणो यतस्ततः ।
शेते निरशनस्तत्र ब्रह्महत्या विधीयते ॥

इत्यादयो बहवो गुणा दोषाश्चैतेषु तेषु प्रोक्ता द्रष्टव्याः, विस्तरभयान्नेहलिख्यते ।

स्वभोजनानन्तरमतिथ्यागमने विशेषमाह—

मनुः,—

वैश्वदेवे तु निर्वृत्ते यद्यन्योऽतिथिराव्रजेत् ।
तस्याप्यन्नं यथाशक्ति प्रदद्यान्न बलिं हरेत् ॥

वैश्वदेवे सर्वार्थान्नपाके निर्वृत्ते कृतप्रयोजने ।
यथाशक्नोति पञ्चा शक्त्यनुरूपेणेत्यर्थः ॥
बलिहरणं देवयज्ञपितृयज्ञयोरप्युपलक्षणम् ।

पुरुषार्थस्य बलिहरणस्य कृतत्वात्पाकनिमित्तकत्वाभावाच्च ।
अनेनैव लिङ्गेन अहरहः क्रियमाणस्यापि वैश्वदेवस्य संयोग-पृथक्त्वेन पाकनिमित्तकत्वमप्यस्तु, तथाच बहुषूदाहृतवाक्येषु वैश्व-देवसम्बन्धश्रवणमिति प्रतिभाति ।

तन्न,—

पाकस्याङ्गत्वेन तत्सम्बन्धोक्तेर्लिङ्गमात्रस्यासाधकत्वात् ।

---

## अथ देवयज्ञादिपद्धतिः ।

तत्र प्रथमप्रयोगे यज्ञं चतुष्टयार्थकं मातृपूजापूर्वकमेकमेव आभ्युदयिकश्राद्धं कार्य्यम् ।

गणेश क्रियमाणे तु मातॄणां पूजनं सकृत् ॥

इति कात्यायनोक्तेः, सिद्धेऽन्ने पत्नी भूतमिति स्वामिने ब्रूयात् । तदभावेऽन्याऽपि पाककर्त्री तत्सुभूतमन्नं विराट् तन्माक्षायीति प्रतिवदेत्स्वामी ।

साग्निकः स्वामी आवसथ्यसमीपे प्राङ्मुख उपविशेत् ।

मणिकस्योत्तरत आवसथ्याग्नेः पश्चिमप्रदेशे एकं मण्डलं चूर्णेन कृत्वा ब्रह्मादियज्ञान्तानां बल्यर्थमेकपात्रे अन्नं स्थाप-

येत् । तदुत्तरतः सनकाद्यर्थमेकपात्रेऽन्नादिकं ब्रह्मादिबलिपात्रा-दक्षिणतः पित्रादित्रयार्थमेकपात्रेऽन्नादिकम् । तत्पूर्वस्मिन् मातामहादित्रयार्थमेकपात्रेऽन्नादिकं, एतयोर्मध्यदेशे षट्पुरुषार्थमेकपात्रेऽन्नादिकं, सनकादिपात्रात्पूर्वस्मिन् अतिथिब्राह्मणार्थमेकपात्रेऽन्नादिकम् ।

एतयोर्मध्ये श्वादिबल्यर्थमेकपात्रेऽन्नं स्थापयेत् । अनग्निकस्तु यत्र कुत्राप्येकमेव पात्रं स्थापयेत् । अनग्निकास्तु तत्रोपविश्य, कुशत्रयं, गोमयं, उदकपात्रं, पुनः कुशत्रयं, इति पात्राण्यासाद्य प्रथमकुशत्रयेण भूमिः त्रिः परिसमूह्य गोमयोदकेन त्रिरुपलिप्य द्वितीयकुशत्रयेण त्रिरुल्लिख्य तां मृदं त्रिः प्राक्संस्थमुद्धृत्य तेनोदकेन त्रिरभ्युक्ष्य इति पञ्चभूसंस्कारान् कृत्वा । पाकसाधन-लौकिकाग्निमानीय स्थापयेत् । दक्षिणजानुं भूमौ निपात्य-मणिकोदकेन लौकिकोदकेन वाऽग्नेः पर्युक्षणम् । दक्षिणहस्तेन ब्रह्मादिपात्रादन्नमादाय, ॐ ब्रह्मणे स्वाहा इत्यग्नौ जुहुयात्, इदं ब्रह्मणे इति त्यागः । एवं ॐ प्रजापतये स्वाहा इदं प्रजा-पतये, ॐ गृह्याभ्यः स्वाहा इदं गृह्याभ्यः, ॐ कश्यपाय स्वाहा इदं कश्यपाय, ॐ अनुमतये स्वाहा इदमनुमतये अग्न्यसम्भवे ताम्रपात्रे जलं स्थापयित्वा तत्र ब्रह्मादिपञ्चाहुतीर्जुहुयात् । इति देवयज्ञः ।

---

## अथ भूतयज्ञः।

वक्ष्यमाणबलिदेशे सर्वत्र प्रत्येकं मार्जनमुपलेपनं च वैकल्पिकम्। बलिदानात् पूर्वं सर्वत्र बलिदेशे जलदानम्।

सर्वत्र बलीनां समाप्तौ वा प्रतिबलि वा पूर्वापरजलदानम्।

हुतशेषेणान्नेन बलयः। मणिकस्य समीपे दक्षिणतः किञ्चिद्देशं त्यक्त्वा भूमौ प्राक्संस्थम्। ॐ पर्जन्याय स्वाहा इदं पर्जन्याय।

ॐ अद्भ्यो नमः इदमद्भ्यः। ॐ पृथिव्यै नमः इदं पृथिव्यै। इति दक्षिणदिशि मध्ये स्थानं स्थापयित्वा दक्षिणदिग्द्वारशाखा-समीपयोः प्राक्संस्थम्।

ॐ धात्रे नमः, इदं धात्रे, ॐ विधात्रे नमः, इदं विधात्रे। एवं बलिद्वयं ततः प्राच्यादिक्रमेण प्राग्दक्षिणेन चतुर्दिक्षु वायुबलिचतुष्टयम्।

तद्यथा,—

ॐ वायवे नमः, इदं वायवे इति प्राच्यां दिशि, ततः ॐ वायवे नमः इति दक्षिणदिशि, एवं पश्चिमोत्तरयोः इदं वायवे इति सर्वत्र त्यागः। ततो वायुबलीनामुत्तरदेशेषु ॐ प्राच्यै दिशे नमः इदं प्राच्यै दिशे, ॐ दक्षिणायै दिशे नमः, इदं दक्षिणायै दिशे, ॐ प्रतीच्यै दिशे नमः, इदं प्रतीच्यै दिशे, ॐ उदीच्यै दिशे नमः इदमुदीच्यै दिशे, ततः पर्जन्यादिसमीपोत्तरतः प्राक्-संस्थं बलित्रयं, ॐ ब्रह्मणे नमः, इदं ब्रह्मणे, ॐ अन्तरीक्षाय

नमः, इदमन्तरीक्षाय, ॐ सूर्य्याय नमः, इदं सूर्य्याय, तद्बलित्रयस्योत्तरतः प्राक्-संस्थं बलिद्वयं, ॐ विश्वेभ्यो देवेभ्यो नमः, इदं विश्वेभ्यो देवेभ्यः,[1] इति त्यागं च कुर्य्यात् ।

पुनर्यज्ञोपवीती बलिपात्रप्रक्षालनजलं गृहीत्वा यक्ष्मै तत्ते निर्णेजलं नमः । इति ब्रह्मबलिदानात्कोणे बलिं दद्यात् । इदं यक्ष्म[2] इति त्यागं च कुर्य्यात् ।

## अथ पितृयज्ञः ।

ततः कण्ठलग्नयज्ञोपवीत उदङ्मुखः कुशाक्षतजलान्यादाय ॐ सनकाद्याः सप्त मनुष्या इदमन्नादिकं यथाविभागं युष्मभ्यं हन्त इति सृजेत् ।

इदं सनकादिसप्तमनुष्येभ्य इति त्यागं कुर्य्यात् । ततो दक्षिणामुखोऽपसव्यो भूत्वा वामजानुं भूमौ निपात्य द्विगुणीकृतकुशतिलजलान्यादाय अमुकसगोत्राः अस्मत्पितृपितामहप्रपितामहा अमुकामुकामुकशर्माणः इदमन्नादिकं यथाविभागं युष्मभ्यं स्वधा नमः । इति सृजेत् ।

---

(१) ओं विश्वेभ्यश्च भूतेभ्यो नमः इदं विश्वेभ्यश्च भूतेभ्यः, एतदोरुत्तरतः प्राक्-संस्थं बलिद्वयम् । ओं उषसे नमः इदमुषसे, ओं भूतानां च पतये नमः इदं भूतानाञ्च पतये, ततो ब्रह्मबलिदक्षिणतोऽपसव्यो भूत्वा दक्षिणामुखः सन्, ओं पितृभ्यः स्वधा नमः इति बलिं दद्यात्, इदं पितृभ्यः इति बलित्यागः ।

(२) यक्ष्मणे- ।

इदमस्मत्पित्रे अमुकदेवशर्मणे, इदमस्मत्पितामहाय अमुकदेवशर्मणे इदमस्मत्प्रपितामहाय अमुकदेवशर्मणे इति त्यागं कुर्य्यात् ।

'इदमस्मन्मातामहाय अमुकशर्मणे, इदमस्मत्प्रमातामहाय अमुकशर्मणे, इदमस्मद्वृद्धप्रमातामहाय अमुकशर्मणे, इति त्यागं कुर्य्यात्, इदं षट्पुरुषात्मकमेकं पत्रम् ।

तद्यथा,—

अमुकसगोत्र अस्मज्ज्येष्ठपितृव्य अमुकशर्मन् इदमन्नादिकं तुभ्यं स्वधानमः, इति पितृधर्मेणोत्सृजेत्, त्यागं च कुर्य्यात् ।

## अथ मनुष्ययज्ञः ।

ततो यज्ञोपवीती कुशाक्षतजलान्यादाय अतिथिब्राह्मणेभ्यो-नमः, इत्युत्सृजेत्, इदमतिथिब्राह्मणेभ्य इति त्यागं कुर्य्यात्, इति मनुष्ययज्ञः, ततः श्वादियोग्यस्थाने जलं पातयित्वा श्वादिबलिपात्रादन्नमादाय इदं श्वभ्यो मम इति बलिं दद्यात्,

(१) तथैव अमुकसगोत्रा ऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकामुकशर्माणः इदमन्नादिकं यथाविभागं युष्मभ्यं स्वधा नमः इत्युत्सृजेत्, इति पत्नद्वयं, अथ अमुकसगोत्रा ऽस्मत्पितृपितामहप्रपितामहा अमुकामुकशर्माणः अमुकसगोत्रा-ऽस्मन्मातामहप्रमातामहवृद्धप्रमातामहाः अमुकामुकशर्माणः इदमन्नादिकं यथा-विभागं युष्मभ्यं स्वधानमः इति पूर्ववत् सृजेत्, इदमस्मत्पित्रे अमुकशर्मणे इदमस्मत्पितामहाय अमुकशर्मणे इदमस्मत्प्रपितामहाय अमुकशर्मणे ।

इदं श्वभ्यः इति त्यागं कुर्य्यात्, एवं श्वपचेभ्यो नमः इदं श्वपचेभ्यः, एवं वायसेभ्यो नमः इदं वायसेभ्यः इति यज्ञचतुष्टयम् ।

ततः काम्यगोग्रासदानं, यथाशक्ति अतिथिभोजनं

इति पञ्चमभागे पञ्चमहायज्ञप्रकरणम् ।

## अथ भोजनविधिः ।

पञ्चमे चेत्याद्यनन्तरम् ।

संविभागं ततः कृत्वा गृहस्थः शेषभुग्भवेत् ॥

मनुः,—

भुक्तवत्सु तु विप्रेषु स्वेषु भृत्येषु चैव हि ।

भुञ्जीयातां ततः पश्चादवशिष्टं तु दम्पती ॥

देवानृषीनित्यादि च,—

तथा,—

अघं स केवलं भुङ्क्ते यः पचत्यात्मकारणात् ।

तथा,—

विघसाशी भवेन्नित्यं नित्यञ्चामृतभोजनः ।

विघसं भृत्यशेषं तु यज्ञशेषमथामृतम् ॥

सूतकादौ पञ्चयज्ञाकरणेऽपि, अमृताशी भवेन्नित्यं विघसाशीति वा पुनरिति यमवचनात्, भृत्यशेषभोजनेनापि प्रत्यवायपरिहारः ।

याज्ञवल्क्यः,—

बालस्ववासिनीवृद्धगर्भिण्यातुरकन्यकाः ।
संभोज्यातिथिभृत्यांश्च दम्पत्योः शेषभोजनम् ॥

तथा,—

भोजयेच्चागतान् काले सखिसम्बन्धिबान्धवान् ।
स्ववासिनी विवाहिता पितृगृहस्थिता कन्या ॥

मनुविष्णू च,—

स्ववासिनीं कुमारांश्च रोगिणीं गर्भिणीं तथा ।
अतिथिभ्योऽग्र एवैतान् भोजयेदविचारयन् ॥

तथाचातिथिभ्यः प्राक् बालादिभोजनं एतेषां भोजनं स्वभोजनसमानम् ।

तथाच मार्कण्डेयः,—

कुटुम्बिनो भोजनीयाः स्वसमं भोजने सति ।
श्रीमन्तं ज्ञातिमासाद्य यो ज्ञातिरवसीदति ॥
सीदता यत्कृतं पापं तेन पापेन लिप्यते ।

यत्तु स्मृत्यन्तरे बालादिभोजनात् प्राक् अतिथिभोजनमुक्तं तदतिथिभोजनस्तुत्यर्थम् ।

आत्मानन्तर्पयेत्पश्चान्नियतोऽथाग्रतः शुचिः ।
स्त्रीशूद्रं भोजयेत्पश्चादेष धर्म्मः सनातनः ॥

इति वचनात् गर्भिणीव्यतिरिक्तस्त्रीणां स्वपत्नीप्रमुखानां पश्चाद्भोजनं पूर्वां वा गृहपतिरिति पारस्करसूत्रं व्याख्यातमनुसन्धेयम् ।

तत्तु श्रुत्यन्तरेऽतिथिभोजनात् प्राक् स्वभोजनमुक्तं तद्वैश्वानरोपासकानां इति सिद्धं, स्वभोजनात्प्राक् यदन्नमुक्तम् तत्काम्यमिति न नित्यमध्ये लिखितम् ।

मनुः,—

सायं प्रातर्द्विजातीनामशनं श्रुतिचोदितम् ।

नान्तरा भोजनं कुर्यादग्निहोत्रसमो विधिः ॥

अत्र प्रातःशब्देन दिनपञ्चमभागः [1]'पञ्चमे च तथा भागे ।

सायं शब्देन रात्रेः सार्द्धप्रहरः ।

मुनिभिर्द्विरशनं प्रोक्तं विप्राणां मर्त्यवासिनाम् ।

नित्यमन्यत्र तमस्विन्यां सार्द्धप्रहरयामतः, इतिकात्यायनोक्तेः ।

विष्णुः,—

न तृतीयमथाश्नीयान्नापथ्यञ्च कथञ्चन ।

नातिप्रगे नातिसायं न सायं प्रातराशितः ॥

अतिप्रगेऽतिप्रातः, नातिप्रगे नातिसायमिति गौणत्वेन प्राप्तयोर्निषेधः, आशितः सर्वतोभावेन तृप्तो न रात्रौ भुञ्जीतेत्यर्थः ।

तथाच पुनर्विष्णुः—

नाश्नीयान्नाजीर्णे नार्द्धरात्रे न मध्याह्ने न सन्ध्ययोः ।

मनुः,—

नाश्नीयात्सन्धिवेलायां,

---

(1) पञ्चमे च तथा भागे संविभागो यथार्हतः ।

तथा,— संविभागं ततः कृत्वा गृहस्थः शेषभुक् भवेत् ॥ इति दक्षोक्तेः ।

विष्णुः,

प्रवसितश्चाग्निहोत्री यदाग्निहोत्रं हुतं मन्येत, यद्वा हुतं मन्येत वैश्वदेवमपि, निरग्निरपि वैश्वदेवमित्यर्थः।

बौधायनः,—

अन्तरा प्रातराशञ्च सायमाशं तथैव च।
सदोपवासी भवति यो न भुङ्क्ते कदाचन॥
प्राणाग्निहोत्रमन्त्रांश्च निरुद्धे भोजने जपेत्।
त्रेताग्निहोममन्त्रांस्तु द्रव्याभावे यथा जपेत्।
स एवमाचरन् संस्तु ब्रह्मभूयाय कल्पते॥

केवलं एकादश्युपवासादिषु प्राणाहुतेरपि भोजनात्मकत्वादेव निषेधः, भोजनासम्भवे प्राणाहुतिप्रकरणे बौधायनेन स एव-महरहः सायं प्रातर्जुहुयादद्भिर्वा सायमिति रात्रौ भोजनाभावे जलेनापि तत्करणस्योक्तत्वात् तस्य भोजनात्मकत्वसिद्धेः, नास्तिकादित्वतीयभोजनेऽपि आपोशानादि कार्य्यं,

आपोशानेनोपरिष्टादधस्ताच्च विजानता।
अनग्नममृतं चैव कार्य्यमन्नं द्विजन्मनेति, याज्ञवल्कीयापो-शानक्रियायां भोज्यस्य कर्म्मत्वात् संस्काररूपत्वेन तत्प्रवृत्तेः,

वशिष्ठः,—

अनड्वान् ब्रह्मचारी च आहिताग्निश्च ते त्रयः।
अश्नन्त एव सिध्यन्ति नास्ति सिद्धिरनश्नताम्॥

अत्र लक्ष्मीधरः, यथाहिताग्न्युद्देशेन उपवासः प्रायश्चित्तं

विधीयते तदेतस्य कार्य्यमिति।
वस्तुतोऽयं निषेधः काम्योपवासविषयः॥

एकादशीजन्माष्टम्यादिष्वपि नित्येषु साग्नेरप्युपवासः, शिष्टैः क्रियत इति न नित्यविषयः।

अतएव,

गृहस्थो ब्रह्मचारी च योऽनश्नंस्तु तपश्चरेत्।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः॥

अन्यतः प्रायश्चित्तत्वात्, प्रायश्चित्ते तु तदेव विधानमिति बौधायनवचनेऽपि गृहस्थपदं त्रेताग्न्याहिताग्निगृहस्थपरम्।

## अथ नैवेद्यभक्षणविचारः।

शिष्टाः,—

अनुच्छिष्टामसृष्टान्नं ग्रासं ग्रासार्द्धमेव वा।
विष्णो र्निवेदितान्नं यो नित्यं भुंक्ते स मुक्तिभाक्॥
षड्भिर्मासोपवासैश्च यत्फलं परिकीर्त्तितम्।
विष्णो र्निवेदितान्नेन तुल्यं तद्भुञ्जतां कलौ॥

इति विष्णुनैवेद्यमवश्यं भक्ष्यं पञ्चप्राणाहुत्यनन्तरमेव।

तथा,—

अलाभे तु विष्णवान्नं भुञ्जीयात्प्रोक्ष्य मन्त्रवित्।
विष्णुभुक्तमिति ध्यात्वा वैष्णवस्तु विशेषतः॥

चलाभे परकीयपूजानैवेद्यालाभे।

विष्णुभुक्तचिन्तनस्य नैवेद्यभक्षणकार्य्यापत्तिः।

अत्र उच्छिष्टगृहीतान्नलोभगृहीतभ्रष्टान्नयोः पर्य्युदासनञ्-समासः, तेन दैवात्तथा भक्षणे न दोषो न फलं, भोजन-मध्येऽकस्मादानीते भक्ष्ये विष्णुभुक्तचिन्तनम्।

अनिवेद्य हरेः किञ्चित् समश्नीयान्न पावनम्।

यत्त्वकस्मात् प्रवृत्तं तन्मनसाऽपि समर्चयेत्॥

इति वचनात्,—

प्रायशो न[1] महाविष्णो वैश्वदेवं करोति यः।

प्राणाग्निहवनं चैव तेन लोका जितास्त्रयः॥

इति वचनादापोशानात्प्राक् विष्णुभुक्तत्वचिन्तनम्।

प्राणानां जुहुयादन्नमनिवेदितमन्वहम्॥

तृप्यन्ति हि महाप्राणा अनिवेदितभोजना इति वचनात्-निवेदितान्नेन कुर्व्वन्ति शिष्टाः,—

ब्राह्मे, देवाभ्यङ्गघृताधिकारे,—

ब्रह्माङ्गलग्नं विप्रेभ्यो वैष्णवं च प्रदीयते॥

रुद्राङ्गलग्नमग्नौ च दहेत्सर्वं च तत्क्षणात्।

शिष्टेभ्यस्त्वथ देवेभ्यो यत्तद्दीनेषु निक्षिपेत्॥

शिष्टेभ्यो ब्रह्मविष्णुशिवव्यतिरिक्तेभ्यो देवेभ्यो यदुद्धृत-मङ्गलग्नमित्यर्थः।

---

(१) नैवेद्येन।

तत्रैव नैवेद्याधिकारे,—

विप्रेभ्यस्तत्र तद्देयं ब्राह्मे यन्निवेदितम् ।
वैष्णवं सात्वतेभ्यश्च भस्माङ्गेभ्यश्च शाम्भवम् ॥
सौरं मगेभ्यः[१] शाक्येभ्यस्तायिने यन्निवेदितम् ।
स्त्रीभ्यश्चापि तु तद्देयं मातृभ्यो यन्निवेदितम् ॥
शिष्टेभ्यस्त्वथ देवेभ्यो यत्तद्दीनेषु निक्षिपेत् ।
सात्वतो विष्णुरुक्तस्तेनेमे सात्वता वैष्णवाः ॥

न तु उपनयनसंस्काररहितवैश्यजन्यसंस्कारजातिः ।

ब्राह्मे,—

ब्राह्मणाः पूजनीयाश्च विष्णोराद्याश्च मूर्त्तयः ।
संविभाज्याश्च दायादा व्रात्याः सात्वतजातयः ॥

व्रात्याः सतैकादशीव्रताः,—

ब्राह्मणा विष्णोराद्यमूर्त्तिरूपाः, सात्वता विष्णोर्दायादरूपाः, उभये पूज्या उक्ताः,

देवीपुराणे विष्णुपूजायां, विष्णुभागवतैः सदेति भागवतानां नियुक्तत्वात् भागवता एव सात्वतपदेनाभिधीयन्ते। तथाच यस्य यत्पूजायां विनियोगस्तन्नैवेद्यस्य प्रतिपत्तिः, पाशुपतसिद्धान्ते शिवस्य, पाञ्चरात्रप्रसिद्धेषु मागधब्राह्मणेषु सूर्य्यस्य, शाक्येषु तायिप्रदनामकेषु बुद्धस्य, प्रतिपत्तेः संस्काररूपत्वात्तस्य च भक्ष्यार्थो वा द्रव्ये समत्वादित्यधिकरणे भक्ष्यद्रव्यस्य पुरुषे समर्पणे भक्षणमेव प्रतिपत्तिरिति निर्णीतम् ।

---

(१) सौरमार्त्तण्डेभ्यः ।

तथाच देवनिवेदितद्रव्यस्वीकारे न प्रतिग्रहदोषः। नैवेद्य-प्रतिपत्तेरपि पूजाङ्गत्वेन शिष्टाचारस्य स्वीकारपूर्वकदानत्वेऽपि पूजाप्राधान्यात्तत्स्वीकारो यजनान्तर्गत एवेति ज्ञेयम्॥

पाञ्चरात्रिकपूजायां देवतायै प्रकल्पनमात्रे सिद्धत्वाद्देवदत्त-त्वाभावेऽपि आर्त्तपूजायामिव विप्रेभ्यस्त्वया तद्देयमिति विधेः वैरूप्याय भक्षणस्य प्रतिपत्तिरिति बोध्यम्।

यत्तु, मनुविष्णुयमस्मृतिषु देवान्नानि हवींषि च, देवार्थं हविरिति याज्ञवल्क्यवचनम्।

स्थालीपाकाननूद्दिष्टानि वर्जयेदित्यापस्तम्बीयवचनं च अभक्ष्य-प्रकरणे उक्तं, तत्र देवान्नपदेन देवतार्थपदेन च अनूद्दिष्टपदेन च नैवेद्यार्थमुपकल्पितस्य द्रव्यस्य नैवेद्यदानात् प्राक्भक्षणे दोषा-भिधानपरमिति सर्वैर्व्याख्यातं, यथा हविषो होमात्प्राक्, अतएव हारीतयमौ,

वलयश्चोपहाराश्च हवींषि चरवस्तथा,
निर्विशङ्केन भोक्तव्या व्रतमस्य न लुप्यत इति।

व्रतप्रकरणे भक्ष्यत्वमूचतुः, उपहारशब्दस्य नैवेद्यवचनत्वात्,

एवं, चरवश्चोपहाराश्च भैक्ष्यमुक्तमयाचितम्।
एतान्यनुव्रतान्याहुः शस्तानि जपकर्म्मणीति बोध्यम्॥

तेनान्यदत्तनैवेद्यस्य भक्षणे न दोषः, प्रत्युत विशिष्टं फलं स्यादेव, स्वपूजादत्तनैवेद्यस्य भक्षणं स्वपूजावैगुण्यापादकत्वान्न कर्त्तव्यं, अतएव परदत्तनैवेद्यालाभे स्वभोग्यस्य विष्णूपभोगचिन्तनं नैवेद्य-फलार्थमित्युक्तं, इत्येवं पूजाधिकारिदत्तनैवेद्यस्य भक्षणोक्तावपि

अन्यदत्तभक्षणे पूजावैगुण्यरूपाधर्म्मस्यात्यल्पत्वेन नैवेद्यभक्षणे फलबाहुल्यात् भक्षणे फलमेवेति स्वपूजानैवेद्यभक्षणसमाचारोऽपि संगच्छते।

यत्तु, न चैतत् स्वयमश्नीयादप्यहिष्णोर्न निवेदितम्।
तत्राऽपराधमध्ये वराहपुराणे, अनिवेदितभक्षणमिति गणितं च,
तदुभयं यज्जातीयं [1]तज्जातीयं न भोज्यमित्येवं परं,

गृहीतवैष्णवदीक्षस्य तु विष्णो र्निवेद्यं संग्राह्यं मुनिभिर्भोज्यमुच्यते,

अन्यदेवनिवेद्यं तु भुक्त्वा चान्द्रायणं चरेत्।

मगधाधिकारे भविष्यपुराणे,—

पूजयित्वा तु ते [2]देवान् नैवेद्यं प्राश्य वा विभो।
यान्ति ते परमं स्थानं यत्र देवो दिवाकरः॥

तथाच मागधानां सूर्य्यनैवेद्यं भक्ष्यं, ब्राह्मणानामेव ब्रह्मनैवेद्यं भक्ष्यं,

न भुञ्जीत निवेद्यान्नं गणानां च शिवस्य च।
दुर्गाया वासुदेवस्य नोच्छिष्टस्तु क्वचिद्भवेत्॥

इति वचनाद्गणनैवेद्यं शिवनैवेद्यं च सर्वेषां [3]भक्ष्यम्।

यत्तु [4]योगप्रदीपे,—

पत्रं पुष्पं फलं तोयं अन्नं पानं महौषधम्।
अनिवेद्य न भोक्तव्यं यदाचानुपकल्पितम्॥

---

(१) न दत्तं-
(२) तद्देवान्।
(३) न भक्ष्यम्।
(४) योगशिखीये,—

इति तच्छिवभक्तस्यैव, श्रीपुरुषोत्तमक्षेत्रे श्रीजगन्नाथनैवेद्ये न स्पर्शपर्युषितत्वदूरगमनादिदोषा नापि लोभप्रयुक्तान्नष्टान्नभक्षण-दोषाश्च।

ब्रह्मवैवर्त्ते,—

जगन्नाथस्य नैवेद्यं महापातकनाशनम्।
भक्षणात् फलमाप्नोति कपिलाकोटिदानजम्॥

ब्रह्माण्डपुराणे,—

अनिवेदितमन्नं तु क्षेत्रे श्रीपुरुषोत्तमे।
मोहादश्नाति यो मर्त्यः स नरः श्वपचाधमः॥

विष्णुयामले,—

यत्किञ्चिद्भक्षणादेव मुक्तिमाप्नोति दुर्लभाम्।
पतितादिभिश्च संस्पृष्टं नास्ति दोषोऽत्र भक्षणे॥

तत्त्वयामले,—

तस्योपभुक्तादानेन नरः पापात्प्रमुच्यते।
नास्ति तत्रैव राजेन्द्र स्पृष्टास्पृष्टविवेचनम्॥
यस्य संस्पृष्टमात्रेण यान्त्यमेध्याः पवित्रताम्।

वृहद्विष्णुपुराणे,—

नैवेद्यं जगदीशस्य अन्नपानादिकं च यत्।
भक्ष्याभक्ष्यविचारस्तु नास्ति तद्भक्षणे द्विज॥
ब्रह्मवन्निर्विकारं हि यथा विष्णुस्तथैव तत्।
विकारं ये प्रकुर्वन्ति भक्षणेऽत्र द्विजातयः॥

कुष्ठव्याधिसमायुक्ताः पुत्रदारविवर्जिताः ।
निरयं यान्ति ते विप्रा यस्मान्नावर्त्तते पुनः ॥

ब्रह्मवैवर्त्ते,—

कुक्कुरस्य मुखाद्भ्रष्टं मदन्नं यदि जायते ।
इन्द्रादीनां तु तद्भक्ष्यं भाग्यतो यदि लभ्यते ॥

भविष्यपुराणे,—

अन्यवर्णैर्हीनवर्णैः सङ्करप्रभवैरपि ।
स्पृष्टं जगत्पतेरन्नं भुक्तं सर्वाघनाशनम् ॥

गारुड़पुराणे,—

न कालनियमो विप्रा व्रते चान्द्रायणे तथा ।
प्राप्तमात्रेण भुञ्जीत यदीच्छेन्मोक्षमात्मनः ॥

भगवद्वाक्यं,—

ये नाश्नन्ति ममान्नं तु स्पृष्टास्पृष्टविवेकतः ।
तान् भ्रंशयामि संपन्नो दण्डं तेभ्यो ददाम्यहम् ॥

स्कान्दे,—

नाभिमानं प्रकुर्वीत विष्णोर्निर्माल्यभक्षणे ।
भक्त्या लोभात्कौतुकाद्वा क्षुधासंगमनेऽपि वा ॥
शाकपत्रं भक्षितं तद्धि पुनाति सकलांहसः ।
शुष्कं पर्युषितं वापि नीतं वा दूरदेशतः ॥

तत्र,—

यथा तथोपभुक्तं तत्सर्वपापापनोदनम् ।
न विचारः क्वचित् कार्यो वापि [illegible] द्विजाः ॥

निर्माल्यं जगदीशस्य नाशित्वाऽश्नामि किञ्चन।
इति सत्यप्रतिज्ञो यः प्रत्यहं तच्च भक्षयेत्॥
सर्व्वपापविनिर्मुक्तः शुद्धान्तःकरणो नरः।
स शुद्धं वैष्णवं स्थानं क्रमाद्याति न संशयः॥
यः श्राद्धकाले हरिभुक्तशेषं दद्यात् सुभक्त्या पितृदेवतानाम्।
तेनैव पिण्डांश्च तिलैर्विमिश्रानाकोटिकल्पं पितरः सुतृप्ताः॥

भविष्यपुराणे,—

जगन्नाथस्य नैवेद्यं भक्त्या च पितृदेवताः।
संतर्प्य यः स्वयं भुंक्ते सोऽश्वमेधफलं लभेत्॥ इत्यादि,

अन्यानि तु विस्तरभयान्न लिख्यन्ते,—

श्रीभुवनेश्वरक्षेत्रे तु, तन्नैवेद्यं यत्नतः चोपभुंक्ष्व, इति शिवपुराणादिवचनाल्लिङ्गराजनैवेद्यं भक्ष्यमेव,

तथा न लिङ्गं भुवनेश्वर इत्यादि, विस्तरस्तु अस्मत्कृते शुद्धिसारे द्रष्टव्यः।

## अथ भोज्यक्रमः।

देवलः,—

स्नात्वा प्रक्षाल्य पादौ च स्रगन्धालंकृतः शुचिः।
पञ्चयज्ञावशिष्टं तु यो भुंक्ते सोऽमृताशनः॥

इति स्रगन्धमाल्यधारणं नित्यं, तन्मूलोक्तविधिनेति केचित्,

दन्तधावनादीनि नित्यमपीति पारस्करवचनात्।

विष्णुपुराणे,—

प्रशस्तरत्नपाणिस्तु भुञ्जीत प्रयतो गृही ।

तथा,—

प्राङ्मुखोऽन्नानि भुञ्जीत पञ्चार्द्रो वाग्यतः शुचिः ॥

प्रशस्तरत्नानि गारुड़ादीनि, पञ्चार्द्रः करचरणवदनार्द्रः

आपस्तम्बः,—

भोक्ष्यमाणस्तु प्रयतोऽपि द्विराचमेत्,

द्विः परिमृजीत्, पश्चादाचमने दोषमभिधाय ।

ब्राह्मे,—

तस्माद्बहिरुपस्पृश्य स्वाचान्तः प्रविशेद्गृहे ।

उपलिप्ते समे स्थाने शुचौ श्लक्ष्णसमन्विते ॥

वौधायनः,—

संस्कृते शुचौ देशे, संस्कृते वस्त्रादिना वेष्टिते इत्यर्थः ॥

पवित्रप्रकरणे पराशरः,—

भोजने वर्त्तुलं प्रोक्तमिति वटुकधारणं प्राह ।

मनुः,—

एकवस्त्रो न भुञ्जीत इति, तृतीययज्ञोपवीतेनापि उत्तरीयधारणं भवतीति पृथक् न उत्तरीयधारणसमाचारः,

देवलः,—

प्राङ्मुखोऽन्नानि भुञ्जीत शुचिः पीठाधिष्ठितः ।

एतेन वस्त्रचर्माद्यासनान्तरनिवृत्तिः ॥

स्मृतिः,—

पादाभ्यां धरणीं गत्वा पादेनैकेन वा पुनः ॥

ब्राह्मे,—

चतुरस्त्रं त्रिकोणं वा वर्त्तुलं चार्द्धचन्द्रकम् ॥

कर्त्तव्यमानुपूर्व्येण ब्राह्मणादिषु मण्डलम् ।

मण्डलद्रव्ये समाचाराच्छुक्लचूर्णम् ।

श्राद्धप्रकरणे ब्राह्मे,—

मण्डलानि च कार्य्याणि नैवारैश्चूर्णकैः शुभैः ।

गौरमृत्तिकया वापि प्रणीतेनाथ भस्मना ॥

पाषाणचूर्णसंकीर्णमाहृतं तत्र वर्जयेत् ।

पुनर्ब्राह्मे,—

पात्रेष्वर्थानुरूपेषु, अर्थानुरूपेषु विभवानुरूपेण स्वर्णरजतपित्तलादिरूपेषु,

विष्णुपुराणे,—

भूमौ पात्रं प्रतिष्ठाप्य ॐकारेण च संस्पृशेत् ।

मनुः,—

पूजयेदशनं नित्यमद्याच्चैनमकुत्सयन् ।

दृष्ट्वा हृष्येत्प्रसीदेच्च अभिनन्देच्च सर्वशः ॥

पूजनं नमस्कारः, अकुत्सनमनिन्दा, हर्षः कायिकः, प्रसादो मानसः, अभिनन्दनं वचसा,

अन्नं दृष्ट्वा प्रणम्यादौ प्राञ्जलिः कथयेत्ततः ।

अस्माकं नित्यमस्त्वेतदिति भक्त्याऽथ वन्दयेत्।
अन्नं विष्णुः स्वयं प्राह नित्यमेव जनार्दनः॥
प्राणार्थं मां सदा ध्यायेत् स मां संपूजयेत् सदा।
वामेन पाणिना पात्रं गृहीत्वा भूमिसंस्थितम्।
तेजोऽसीति जपंस्तच्च प्रणमेदमृतं च यत्॥

अत्र यद्यपि वामपाणिनापि पात्रधारणमुक्तम्।
तथापि, आपस्तम्बो विकल्पमाह, नापजोषीत सव्येन पाणिना भुञ्जीत्, अपजोषीत भुञ्जीत वा, तत्र कपर्दिभाष्यं, प्रथमं पात्रधारणमुपक्रान्तं चेत्र त्यागः, अधृत्वैव भोजनारम्भे न धार्य्यमिति।

तथाच तत्र, वामपाणिना धारणपक्षस्य न समाचारः।
तदभावात्तेजोऽसीति मन्त्रपठनस्याप्यभावः॥

अन्नोपरि घृतेनाभिघारणम्।

शिष्टाः,—

धर्म्मराजचित्रगुप्ताभ्यां दद्यात्पिण्डद्वयं भुवि।
धर्म्मराजाय नमः, चित्रगुप्ताय नमः, इति मन्त्र इत्यर्थः॥

बलिकर्म्मत्वान्नमःशब्दप्रयोगः।

ब्राह्मे,—

आपोशानं च गृह्णीयात्सर्व्वतीर्थमयं च यत्॥
अमृतोपस्तरणमसीति विष्णोरन्नमयस्य च।
हस्तेन संचयेत्रान्नं सीदत्येन कदाचन॥

स्वाहान्तोऽयं मन्त्रः, द्वितीयापोशानवाक्ये स्वाहान्तप्रयोगदर्शनात्, एतदपोशानोदके विष्णुपादोदकादि पातयित्वा पिबन्ति शिष्टाः।

नैवेद्यप्राशनादौ तु दिव्यपादोदकाहुतिः।

होतव्या जठराग्नौ तु स्वेन प्राणिस्रुवेण तु॥

इति वचनं च पठन्ति, तथा,—

पादोदकसमायुक्तं तुलसीदलमिश्रितम्।

भुक्त्वा भुक्त्वा हरेर्भुक्तं हत्याकोटिविनाशनम्॥

भुक्तं हरेरुच्छिष्टान्नमित्यर्थः।

योगी याज्ञवल्क्यः,—

प्राणो व्यानस्तथापानः समानोदान एव च।

ॐकारपूर्वैः स्वाहान्तैः पञ्च दद्यात्तथाहुतीः॥ इति वाक्यं

प्रणवस्वाहान्तमन्त्रकथनार्थं, नतु क्रमार्थम्।

तत्र क्रमः, लैङ्गे,—

प्राणायेति ततस्तस्य प्रथमाह्वाहुतिस्ततः।

अपानाय द्वितीया च व्यानायेति च तत्परा॥

उदानाय चतुर्थी स्यात्समानायेति पञ्चमी। अयमेव क्रमो-ऽवगम्यते, तथा हारीतस्मृतौ, सर्वान् प्राणान् प्रीणीतेत्यत्र प्राणापानोदानसमानानां ग्रहणमिति क्रमो लक्ष्मीधरेण दर्शितः, बौधायनीयेऽप्ययमेव क्रमः।

तत्र,—

आर्द्रामलकमानेन कुर्य्याद्धोमबलिं तथा।

प्राणाहुतिविधानं च सदं गात्रविशोधनम्॥

इति दर्शनादुक्तपरिमाणान्नं ग्राह्यम्।

विष्णुपुराणे,—

सर्वकामप्रदा नित्यं तिलकेऽनामिका स्मृता ।
प्राणाहुतिविधौ सैव विज्ञेयाङ्गुष्ठयोगतः ॥

इति वचनादनामिकाङ्गुष्ठाभ्यां ग्रहणं, अनेन स्तोकता च निर्दिश्यते, अनामिकाङ्गुष्ठयोगेन यावद्गृह्यत इति जयस्वामिव्याख्यानात् ।

विष्णुपुराणे,—

अश्नग्रासान्महामौनी प्राणाद्याप्ययनाय तत् ।

ध्वनिवर्णोभयशब्दनिवृत्तिः, निगिरेदिति हारीतोक्तेर्दन्तसंलग्नं न कार्य्यम् ।

पञ्चाहुतीस्तु जुहुयात्प्रलयाग्निनिभे तथा, इति ब्रह्मपुराणात्प्रलयाग्निनिभत्वेन जठराग्निध्यानं, आहुत्यादिशब्दप्रयोगाद्धामरूपत्वात्प्राणाद्युद्देशेन त्यागः, इति प्राणायेत्यादि त्यागः, स च मानस एव, नास्य भोज्यसंस्कारत्वं, तथा सति रात्रौ भोजनाभावे तल्लोपः स्यात्, नच तथा,—

गृहस्थो ब्रह्मचारी च योऽनश्नंस्तु तपश्चरेत् ।
प्राणाग्निहोत्रलोपेन अवकीर्णी भवेत्तु सः ॥

अन्यतः प्रायश्चित्तात्, प्रायश्चित्ते तु तदेव विधानमिति बौधायनवचनात्, पञ्चग्रासानन्तरं प्रथमं विष्णुनैवेद्यभक्षणं, तच्च नैवेद्यं परकीयं, तदभावे निर्णीते तु आपोशानात्प्राक् विष्णुभुक्तचिन्तनं, एवं पञ्चग्रासनैवेद्यजलपानादि मिलित्वा द्वात्रिंशद्ग्रासभोजनम् ।

अष्टौ ग्रासा यतेरुक्ता दशारण्यनिवासिनाम् ।
द्वात्रिंशच्च गृहस्थानाममितं ब्रह्मचारिणामिति वचनात् ॥

देवलः,—

न भुञ्जीताघृतं नित्यं गृहस्थो भोजनं स्वकम् ।
पवित्रमथ हृद्यं च सर्पिराहुरघापहम् ॥

कामक्रोधलोभमोहानपहृत्य सर्वाङ्गुलिभिः शब्दमकुर्वन् प्राश्नीयात् न पिण्डशेषं पात्रगामुत्सृजेत्, भोजनमध्ये उपस्थितस्य द्रव्यस्य मनसा विष्णुप्रभुक्तचिन्तनम् ।

यत्त्वकस्मात् प्रवृत्तिं च मनसाऽपि समर्चयेदिति वचनात् ।

शिष्टाः,—

भुक्त्वा शेषं समादाय अवघ्राय क्षिपेद्भुवि ।
तृप्त्यर्थं नरकस्थानां मन्त्रेणानेन धर्मवित् ॥
रौरवे पुण्यनिलये पद्मार्बुदनिवासिनाम् ।
प्राणिनां सर्वभूतानामक्षय्यमुपतिष्ठताम् ॥
आपोशानं यथा पूर्वं पश्चादपि सकृत्तथा ।
अमृतापिधानमसि स्वाहेति चलुकं पिबेत् ॥
अर्द्धं पिबति गण्डूषमर्द्धं त्यजति भूमिषु ।
पिबन्ति पितरस्तस्य ये चान्ये भूमिदेवताः ॥
हस्तं प्रक्षाल्य गण्डूषं यः पिबेदविचक्षणः ।
हतं दैवं च पित्र्यं च आत्मा वै तेन पातितः ॥
आपोशाने तु चरमे गृहीते यः पयः पिबेत् ।
सपवित्रकरेणैतद्रक्तपानसमं भवेत् ।

तथा,—

अवगुण्ठित उच्छिष्टो [1]मेधातुरो नाभिभाषेत ।
नोर्द्धं ज्योतींषि वीक्षेत नोच्छिष्टः क्वचिद्व्रजेत् ॥
भुक्त्वाचामेद्यथोक्तेन विधानेन समाहितः ।
शोधयेन्मुखहस्तौ च मृदद्भिर्घर्षणैरपि ॥

भुक्तपार्श्वे नाचामेत्,—

पादावसेचनोच्छिष्टे प्रक्षिपेन्न गृहाङ्गणे ।

दन्तोच्छिष्टं त्यक्त्वा शुचिः,—

भोजने दन्तलग्नानि निर्हृत्याचमनं चरेत् ।
यस्तु गण्डूषसमये तर्जन्या दन्तधावनम् ॥
कुर्वीतात्यन्तपूतात्मा पतति नरके स वै ।

ब्राह्मे,—

विप्रस्त्वेवमुपस्पृश्य पादाङ्गुष्ठे च दक्षिणे ।
हस्ताभ्यां विधिवद्ध्यायन्नत्रावनेजनम् ॥
अङ्गुष्ठमात्रः पुरुषोऽङ्गुष्ठं च समाश्रितः ।
ईशः सर्वस्य जगतः प्रभुः प्रीणातु विश्वभुक् ॥

हस्तयोर्घर्षणजलेन चक्षुर्मार्जनं,—

शर्य्यातिं च सुकन्यां च च्यवनं शक्रमश्विनौ ।
भोजनान्ते स्मरेद्यस्तु तस्य चक्षुर्न सीदति ॥

मधुमांसतिलसंसृष्टभक्षणनिमित्तमप्युपस्पर्शनम् ।

---

(1) मेध्यातुरो- ।

मनुः,—

खाम्बुभिः समुपस्पृशेत्, पाण्योरूर्द्धयोर्धारणम् ॥

तथाचापस्तम्बः,—

आचम्योर्द्धपाणिर्धारयेद्वा प्रोदकाभावात्, प्रकृष्टोदकत्वनिवृत्ति-पर्य्यन्तमित्यर्थः, तदनन्तरं सुखार्थं करप्रोञ्छनम्।

विष्णुपुराणे,—

भुक्त्वा सम्यगथाचम्य प्राङ्मुखोदङ्मुखोऽपि वा।
आचान्तः पुनराचामेत् पाणी प्रक्ष्याल्य मूलतः॥
स्वस्थः प्रशान्तचित्तश्च कृतासनपरिग्रहः।
अभीष्टदेवतानां च कुर्वीत स्मरणं ततः॥
भुक्त्वा चैवार्द्रपाणिस्तु यस्तिष्ठेदविचक्षणः।
चत्वारि तस्य नश्यन्ति आयुः प्रज्ञा यशो वलम्॥
मा करेण करं साक्षान्मार्जयेन्ना च चक्षुषी।
सम्मार्ज्य वाहुं जानुं च गोप्रदानफलं लभेत्॥

तथा,—

आचान्तोऽप्यशुचिस्तावद्यावत् पात्रमनुद्धृतम्।
उद्धृतेऽप्यशुचिस्तावद्यावन्नोन्मृज्यते मही॥

आपस्तम्बः,—

यत्र भुज्यते तत्समूहनं निर्हृत्यावोक्षतं देशम्।
अमात्रेभ्योऽन्नं संकृष्याभिसंस्रित्योत्तरतः॥

शूचौ देशे रुद्राय निनयेदेवं वास्तु शिवं भवति, समूहनं पतिता-

मादिवहिःकरणं सम्मार्जन्या, निर्हरणं पात्रस्य प्रोक्षणं समाचाराद्गोमयोदकं दत्त्वा लेपनं, अमात्राणि पात्राणि ।

वैद्यशास्त्रे,—

अगस्त्यं कुम्भकर्णं चाशनिं च वड़वानलम् ।
आहारपरिणामाय संस्मरेयु वृकोदरम् ॥

विष्णुपुराणे,—

अगस्तिरग्निर्वड़वानलश्च भुक्तं ममान्नं जरय त्वशेषम् ।
सुखं च मे तत्परिणामसम्भवं यच्छत्वरोगं च ममास्तु देहे ॥
विष्णुः समस्तेन्द्रियदेहदेही प्रधानभूतो भगवान् यथैकः ।
सत्येन तेनान्नमशेषमेतदारोग्यदं मे परिणाममेतु ॥
विष्णुरत्ता यथैवान्नं परिणामश्च वै यथा ।
सत्येन तेन मे भुक्तं जीर्य्यत्वन्नमिदं तथा ॥
इत्युच्चार्य्य स्वहस्तेन परिमार्ज्य तथोदरम् ।
अनायासप्रधानानि कुर्य्यात्कर्माण्यतन्द्रितः ॥

हारीतः,—

पश्चात्पत्नी शेषं वलिं हरेत्, पाकभाण्डशिष्टेनेति जयस्वामी ।

इति भोजनक्रमः, तत्र भोजनप्रकारः ।

आपस्तम्बः,—

यावद्ग्रासं ग्रासं न स्कन्दयन् कृत्स्नग्रासं ग्रसेत् सहाङ्गुष्ठम् ॥
यावद्ग्रासं यावद्ग्रसितुं शक्यं,

आह्मे,—

सर्व्वाङ्गुलिभिश्चाश्नीयान्नावधूयेत्करं क्वचित् ।
कुर्य्यात् क्षीरान्तमाहारं न तु पश्चात्पिवेद्दधि ॥
जठरं पूरयेदर्द्धमन्नैर्भागं जलेन च ।
वायोः संचरणार्थाय चतुर्थमवशेषयेत् ॥

तथा,—

यस्तु पाणितले भुंक्ते यस्तु फुत्कारसंयुतम् ।
प्रसृताङ्गुलिभिर्यश्च तस्य गोमांसवच्च तत् ॥
नाजीर्णे भोजनं कुर्य्यात्स्याच्च नातिवुभुक्षितः ।

तथा,—

अन्नजन्मकालुष्यं दुःपंक्तिं च न कुत्सयेत् ।
ग्रासशेषं न चाश्नीयात्पीतशेषं पिवेन्न तु ॥
शाकमूलफलेक्ष्वादि दन्तच्छेदैर्न भक्षयेत् ।
संचयेन्नान्नमन्नेन न क्षिप्तं पात्रसञ्चितम् ॥
वृथा न विकिरेदन्नं नोच्छिष्टस्तु क्वचिद्व्रजेत् ।
न स्पृशेत् स्वशिरो विप्रः सोच्छिष्टेनैव पाणिना ।
तिलकल्कं जलं क्षीरं दधि क्षौद्रघृतानि च ॥
न त्यजेदर्द्धजग्धानि सक्तूंश्चैव कदाचन ।

अत्र क्षौद्रग्रहणं श्राद्धमधुपर्कयोरेव, अन्यत्र भोजनस्य निषेधात्, यद्वा शूद्रसाधारणत्वेनोक्तं, अनेन पूपादिना पात्रे विक्षिप्तमन्नं न राशीकुर्य्यादित्यर्थः ।

विष्णुः, नोच्छिष्टो घृतमादद्यात्,

विष्णुपुराणे—

अश्नीयात्तन्मना भूत्वा पूर्व्वं तु मधुरं रसम् ।
लवणाम्लौ तथा मध्ये कटुतिक्तादिकं ततः ॥
प्राग्द्रवं पुरुषोऽश्नीयान्मध्ये च कठिनाशनः ।
अन्ते पुनर्द्रवाशी च वलारोग्ये न मुञ्चति ॥

वौधायनः,—

सर्व्वभिक्षापूपकन्दफलमूलमांसानां दन्तैर्नावद्येत् ॥
कन्दपदेन सूरणादि, मूलानि मूलकादीनि ।
हारीतः, नान्यमभिभाषमाणोऽश्नीयात् ॥

बृहस्पतिः,—

न स्पृशेद्वामहस्तेन भुञ्जानोऽन्नं कदाचन ।
न पादौ न शिरो वस्तिं न पदा भाजनं स्पृशेत् ॥

गौतमः,—

न रात्रौ प्रोष्याहृतं सर्व्वमेव द्रव्यं नाद्यादित्यर्थः ॥

वौधायनः,—

नाति सुहितोऽमृतापिधानमसीत्यपः पीत्वेत्यादि[1] ॥

मनुः,—

अनारोग्यमनायुष्यमस्वर्ग्यं चातिभोजनम् ।
चतुःषष्ट्या पलैः शुद्धैः कुडवं प्रस्थचतुष्टयम् ॥

---

(१) त्वर्थः ।

एतावद्यस्तु निगिरेत्स कुष्माण्डी-पतत्यधः-। इति कुष्माण्डीत्वमति-निषिद्धं।

तत्राभिमुख्यं, विष्णुपुराणे,—

विमुखवदनः प्रीतो भुञ्जीत न विदिङ्मुखः।
प्राङ्मुखोदङ्मुखो वापि न चैवान्यमनादरः॥

मनुः,—

आयुष्यं प्राङ्मुखो भुंक्ते यशस्यं दक्षिणामुखः।

ऋतं सत्यं यशं वा,—

एवञ्च, भुञ्जीत नैवेह च दक्षिणामुखो न च प्रतीचीमभि-भोजनीयमिति दक्षिणापश्चिमाभिमुखत्वनिषेधो निष्कामस्य।

पुष्टिकामाधिकारे आपस्तम्बः, वाग्यतो दक्षिणामुखो भुञ्जीत, अनायुष्यं त्वेवंमुखस्य मातुरुपदिशतीति, एवं च सति निष्कामस्य मातृरहितस्य न दक्षिणामुखत्वं, किं तु पुष्टिकामस्य यशस्कामस्य वा, जीवन्मातृकस्य तु सर्वथा न दक्षिणामुखत्वमिति, जीवत्पितृकस्यापि दक्षिणामुखत्वं निषिद्धम्।

तथाच,—

अमास्नानं गयाश्राद्धं दक्षिणामुखभोजनम्।
न जीवत्पितृकः कुर्यात्कृते च पितृहा भवेत्॥ इति वचनात्,

## अथ निषिद्धदेशाः ।

आपस्तम्बः,—

न चार्वाग्भुञ्जीत तथा प्रासादे कृतभूमौ, प्रासादे प्रासादस्योपरि, कृतभूमौ पाषाणमय्यादौ मृत्प्रक्षेपेण कल्पितभूमौ ।

ब्राह्मे,—

हस्त्यश्वरथयानोष्ट्रप्रासादस्थो न भक्षयेत् ।
श्मशानाभ्यन्तरगतो देवालयगतोऽपि वा ॥
शयनस्थो न भुञ्जीत न पाणिस्थं न चासने ।
नार्द्रवासा नार्द्रशिरा न चाऽयज्ञोपवीतवान् ॥
न प्रसारितपादस्तु पादारोपितपाणिमान् ।
नावसक्थिकसंस्थश्च न च पर्य्यङ्किकास्थितः ॥
न वेष्टितशिराश्चापि नोत्सङ्गे कृतभोजनः ।
नैकवस्त्रो दुष्टमध्ये सोपानत्कः सपादुकः ॥
न चर्म्मोपरिसंस्थश्च चर्मवेष्टितपार्श्ववान् ।

विष्णुपुराणे—

चासन्दी स्थिते पात्रे न चादेशे नरेश्वर, आसन्दी वेत्रादि-निर्म्मिता ।

अदेशे रथ्यादौ ।

विष्णुः,—

नाश्नीयाद्भार्य्यया सार्द्धं नाकाशे न तथोत्थितः ।
बहूनां प्रेक्षमाणानां नैकस्मिन् बहवस्तथा ॥

शून्यागारे वह्निगृहे देवागारे तथैव च ।

आकाशेऽनावृतदेशे एकस्मिन् प्रेक्षमाणे इत्यर्थः ।

उशनाः,

खट्वारूढो न भुञ्जीत न चोत्तानः कथञ्चन ।

मनुः,

एकवस्त्रो न भुञ्जीत कवाटमपिधाय च ।

भूमौ चानन्तरीकृत्य भिन्नपात्रे न चाशनम् ॥

भूमौ पात्राभावे केवलभूमौ, आसनाभावे वा ।

तथा,

नाहारमुपभुञ्जीत तिष्ठन् गच्छन् हसन्नपि ।

स्वग्रामे ग्रामतो वापि सन्निकृष्टे मृते सति ॥

न भुञ्जीताशनं धीमान्नाधर्म्यं शोककारणात् ।

स्वग्रामे स्वग्रामीणे, ग्रामतः सन्निकृष्टे सन्निकृष्टग्रामीणे ।

याज्ञवल्क्यः,

न भार्य्यादर्शनेऽश्नीयान्नैनां वीक्षेत चाश्नतीम् ॥

श्रुतिः,

तस्माज्जायाया अन्ते नाश्नीयादवीर्य्यवान् ह्यस्य पुत्रो जायते ।

वीर्य्यवन्तमुदसा[1] जनयन्ति यस्या अन्ते नाश्नातीति ।

तेन विष्णुस्मृतौ भार्य्यया सार्द्धं सन्निधावित्यर्थः ॥

---

(१) नवि। (२) -मुदयाशा।

एवं ब्राह्मण्या भार्य्यया सार्द्धं क्वचिद्भुञ्जीत चाप्नोति ब्राह्म-वचनमपि

सन्निधिपरं न त्वेकत्रभोजनपरम् ।

केवलं तत्र विवाहकालविषयेऽपवादमाह अङ्गिराः,—

ब्राह्मण्या सह योऽश्नीयादुच्छिष्टं[1] वापि कर्हिचित् ।

न तत्र दोषं मन्यन्ते सर्व्वे एव मनीषिणः ॥

विष्णुः,

न गोब्राह्मणोपरोधेऽश्नीयान्न राजव्यसने ।

यमः,

अश्नाति यो भृत्यजनस्य मध्ये मृष्टान्नमेकोरसदुष्टबुद्धिः ।

दीनैः कटाक्षैरभिवीक्ष्यमाणो व्यक्तं विषं हालहलं स भुंक्ते ।

हारीतः,

न क्रुद्धो नान्यमना नाभिभाषमाणोऽश्नीयात्, न मिथुनभक्षयन् नाप्रदाय प्रेक्षमाणेभ्यः, साभिलाषमीक्षमाणेभ्यो बालादन्येभ्योऽपीत्यर्थः ।

ब्राह्मे,

अप्येकपंक्त्या नाश्नीयात् संवृत्तः स्वजनैरपि ।

भस्मस्तम्भजलद्वारमार्गैः पंक्तिं च भेदयेत् ॥

तथा,—

पञ्चग्रासांस्तु भुक्तादौ क्वचिद्वेश्मनि सङ्कटे ।

पात्रमुद्धृत्य शेषं तु भक्षयेत् सांकरान्नयात् ॥

(१) ब्राह्मण्या सह यो भुंक्तेऽश्नीयादुच्छिष्टं वापि कर्हिचित् ।

पित्रेर कर्मणि भुञ्जानो भूमौ पात्रं न चालयेत् ॥

पञ्चग्रासोत्तरमपि पंक्तिदोषज्ञाने पात्रमुत्तोल्य स्वयमनुत्थाय उपविश्य गत्वा स्थानान्तरे भोजनं कार्य्यम्, पित्रेर न गन्तव्यं पश्चात् प्रायश्चित्तं कार्य्यं, इति निषिद्धदेशादि ।

---

## अथ निषिद्धासनम् ।

देवलः,—

न भिन्नासनगतो न शयनगतः ।

स्मृतिः,—

लोहबद्धं च दग्धं च वर्जयेदासनं बुधः ॥

तथा,—

अध्यास्य शयनं यानमासनं पादुके तथा ।
पालाशस्य द्विजश्रेष्ठ त्रिरात्रं तु व्रती भवेत् ॥

## अथ पात्रम् ।

औदुम्बरसमसः सुवर्णनाभिः प्रशस्तो न चान्येनापि भोक्तव्यं, प्रशस्तो भोजन इति शेषः, अन्येन स्वस्य पुत्रादिनापि तत्र भोजने तदात्मनो योग्यामीत्यर्थः ।

एवं च,—

करे कर्पटके चैव आयसे ताम्रभाजने ।
भुञ्जन् भिन्नके दुष्येत लिप्यन्ते गृहमेधिनः ॥

इति ताम्रपात्रनिषेधः

सुवर्णनाभिताम्रपात्रव्यतिरिक्तपरः, अथवा आपस्तम्बीयताम्रपात्र-विधिः पुष्टिकामस्य, पुष्टिकामान् विना निषेधः, इति केचित्, वस्तुतो न ताम्रपात्रे भक्षणसमाचारः,

शिष्टाः,—

अश्वत्थवटपत्रेषु कुम्भीतिन्दुकपत्रयोः ।

वटाश्वत्थार्कपत्रेष्विति वा पाठः ॥

कोविदारकपित्थेषु भुक्त्वा चान्द्रायणं चरेत्, कोविदारकदम्बेष्विति वा पाठः ।

पलाशपद्मपत्रेषु गृही भुक्त्वैन्दवं चरेत् ।

ब्रह्मचारियतीनां च चान्द्रायणफलं लभेत् ॥

प्रशस्तपत्रेष्वपि पृष्ठभागो निषिद्धः ।

पत्रपृष्ठे तु यो भुंक्ते पञ्चगव्यं समाचरेदिति, वचनात् ॥

भोजनाधिकारे विष्णुः, न भिन्नभाजने नोत्सङ्गे न भूवि न पाणौ, यत्र सुवर्णरजतशङ्खशुक्तिस्फटिकानां भिन्नमभिन्नमितिवचनात् सुवर्णादिपात्रेषु भङ्गेऽपि न दोषः,

हारीतः,—

नाधिशयनासने चाश्नीयात्, न कार्ष्णायसे न मृत्पात्रे न भिन्नाव-कीर्णे, अधिशयने खट्वोपरि अध्यासने पीठोपरि चान्नं स्थाप-यित्वा न भुञ्जीतेत्यर्थः, अवकीर्णे शूद्रादिकृते भोजने, अत्र पाषाणपात्रस्य निषेधाभावात्तत्र भोजने दोषाभावः,

एक एव तु यो भुंक्ते विमले कांस्यभाजने ।

चत्वारि तस्य वर्द्धन्ते आयुः प्रज्ञा यशो बलं इति कांस्यपात्रभोजनं काम्यं,

कांस्यपात्रे न भुञ्जीत न पद्मवटपत्रयोः, इति वैष्णवाधिकारे नारदीयपञ्चरात्रवचनात्कांस्यं वैष्णवस्य त्याज्यमेव, इति पात्रविचारः।

तत्र परिवेषणविचारः, भविष्ये,—

आयसेन तु पात्रेण यदन्नमुपदीयते।
भोक्ता विष्ठासमं भुंक्ते दाता च नरकं व्रजेत्॥

परिवेषकस्य उच्छिष्टभोजनस्पर्शे भूमौ तदन्नादिकं निधायाचम्य पुनः परिवेषणम्, अन्नादिभिन्नद्रव्ये तु तद्धृत्वैवाचम्य परिवेषणम्। आचमनप्रकरणे प्रमाणं लिखितं, उच्छिष्टशूद्रस्पर्शे तु ब्राह्मे,

उच्छिष्टेन तु शूद्रेण संस्पृष्टः परिवेषकः।
द्रव्यहस्तस्तु यत्किंचिद्दद्यात्तच्च न भक्षयेत्॥
एकेन पाणिना दत्तं शूद्रदत्तं न भक्षयेत्।
घृतं तैलं च लवणं पानीयं पायसं तथा॥
भिक्षा च हस्तदत्ता या न ग्राह्या कुत्रचित् क्वचित्।

पराशरः,—

माक्षिकं फणितं शाकं गोरसं लवणं घृतम्।
हस्तदत्तानि भुक्त्वा तु दिनमेकमभोजनम्॥
शूद्रहस्ते तु यो भुंक्ते पानीयं वा पिवेद्द्विजः।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥

अतएव भोजनस्थाने पत्रपातनादिकं जलपात्रस्थापनं च सच्छूद्रै-
रपि न क्रियत इति समाचारः,

चाण्डालपतितोदक्यावाक्यं श्रुत्वा द्विजोत्तमः ।
भुंक्ते तु ग्रासमात्रं तु दिनमेकमभोजनम् ॥
पंक्त्यां न विषमं दद्यान्न याचेन्न च दापयेत् ।
कृच्छ्रं द्वादशरात्रेण मुच्यते कर्मणस्ततः ॥

## अथ ताम्बूलादिभक्षणविचारः ।

दक्षः,—

भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ।

इति,—

अन्नपरिणामश्च वैद्यशास्त्रे ताम्बूलखदिरक्रमुकजातिफल
लवङ्गादीनां चर्वणादित्युक्तमनुसन्धेयम् ॥

शिष्टाश्च,—

भोजनानन्तरं विष्णोरर्पितं तुलशीदलम् ।
भक्षितं पापराशिघ्नं महापातकनाशनम् ॥
भुक्त्वा तु सुखमास्थाय तदन्नं परिणामयेत् ।
भूयोऽप्याचम्य कर्त्तव्यं ततस्ताम्बूलभक्षणम् ॥

अत्राचमनकथनं भोजनोत्तरद्विराचमनानुवादत्वेन, ताम्बूल-
भक्षणस्य भोजनत्वाभावेन नापि भोजनपूर्व्वविहिताचमनप्रसङ्गः,
अतएव प्राङ्मुखोऽन्नानि भुञ्जीतेत्यन्नावग्रहणाताम्बूलभक्षणादौ

न दिङ्नियम इति कल्पतरुकारः, भट्टाचार्य्यैरपि पूर्व्वं नाचमनं लिखितं, ताम्बूलभक्षणावसनाचमनमपि दुराचारत्वेन च लिखितम्, तथाच विष्णुः,—

चर्व्वणे नित्यमाचामेभ्मुक्ता ताम्बूलचर्व्वणम्।

तथा,—

ताम्बूले चेक्षुखण्डे च नोच्छिष्टो भवति द्विजः।
त्वग्भिः पुष्पैर्दलैर्मूलैस्तृणकाष्ठमयैस्तथा॥
सुगन्धिभिस्तथान्यैश्च नोच्छिष्टो भवति द्विजः।
खर्जूरतालकन्दं च मृणालं पद्मकेशरम्॥
नारिकेलं केशरं[1] च नोच्छिष्टं मनुरब्रवीत्।
ताम्बूलं च कषायं च सर्व्वं च जलसम्भवम्॥
मधुपर्कं च सोमं च लवङ्गाद्यं तथा क्वचित्।

अन्यत्र,—

ताम्बूले च फले चैव भुक्तस्नेहावशिष्टके।
दन्तलग्नस्य संस्पर्शे नोच्छिष्टो भवति द्विजः॥
भुक्तस्नेहो मुखादिषु, दन्तलग्नस्पर्शो जिह्वया।

तथा मूलेऽपि न,—

दन्तलग्ने फले मूले भक्ष्यस्नेहे तथैव चेति वचनात्।
कषायं खदिरहरीतक्यादि, जलसम्भवं शृङ्गाटकादि॥

अत्र खदिरस्य शूद्रादिगृहपक्वस्यापि समाचारात् भक्षणं, एवं

(१) कशेरु।

खिन्नस्यापि पूगफलधान्यहरिद्रामरिचादेरपि, पक्कस्य स्पर्शदोष-तदभावयोः समाचारैकप्रमाणत्वात्,

शिष्टाः,—

मरीचधान्ययोश्चैव हरिद्रायां तथैव च।
तथा पूगफलानां च खिन्नदोषो न विद्यते॥

एतत् खदिरस्य चूर्णस्य च तदन्नं परिणामयेदिति वचनात्ताम्बूल-सहचरिततया भक्ष्यत्वविधेर्न दोषशङ्का, पूगादीनां खिन्नत्वदोषा-भावः, शुष्कतायामेव, अशुष्कतायां स्यादेव दोषः, शुष्के त्ववयव-संयोगभेदरूपपक्कत्वनिवृत्तेः,

अथवाऽकठिनद्रव्ये अग्निना सम्यगवयवसंयोगविशेषः, पाकः, न चैवं पूगादौ, अतएव खिन्नं तदुच्यते न पक्कमिति,

पक्कमेव तु शूद्रस्पृष्टं दुष्टं न खिन्नम्।

तथैव समाचारात्, खदिरस्य शूद्रपक्कत्वेऽपि शूद्रोपहृतमन्नमभोज्य-मिति अन्नादावेवाभक्ष्यत्वोक्तेः, खदिरे तु पाककाले पेयत्वलेह्य-त्वयोरेवाभावान्नाभक्ष्यता।

एवं चूर्णस्यापि, यथा काष्ठे दग्धे भस्मीभूते न काष्ठत्वं तथा चूर्णे नास्थित्वम्।[1]

किन्तु भस्मत्वमेव, तेन चूर्णस्य नाभक्ष्यता, नह्यभक्ष्यद्रव्यजं भस्माप्यभक्ष्यं, निषेधाभावात्, केवलं—,

(१) यथा काष्ठे दग्धे भस्मीभूते काष्ठे न काष्ठत्वं तथा चूर्णे नास्थित्वम्।

प्राण्यङ्गमामिषं चूर्णं क्षीरं गव्येतरं तथा।
आमिषं च मधु प्रोक्तं कांस्यभोजनमामिषम्॥
आमिषं सुन्दरीशाकं चर्मपानीयमामिषम्।

इति वाक्यदर्शनात् व्रतिब्रह्मचार्य्यादीनां अभक्ष्यम्।

तथा चास्मत्कृतशुद्धिसारसंग्रहकारिकाः—

खिन्नत्वदोषो खदिरे हरिद्रामरीचपूगादिफलेषु धान्ये।
नाप्यस्ति तेषामशनं तु शूद्रैः स्पर्शे समाचारकृतं वदन्ति॥
शूद्रादिसंस्पर्शनदुष्टतायां खिन्नेषु पूगादिषु नेति चोक्तम्।
जानीत तच्छोषण एव धारा अशोषणे तत्र विगानसत्वात्॥
यद्वाऽग्निना योऽकठिनेषु सम्यक् सर्वाङ्गयोगः स हि पाक उक्तः।
पूगादिके यत् स न विद्यते तु खिन्नत्वमस्पर्शनदुष्टता तत्॥
अन्नं तु शूद्रोपहितं न भक्ष्यमित्युक्तितः स्यात् खदिरं हि भक्ष्यम्।
शूद्रादिभिः पक्वमपीति दृष्टा नह्यन्नमध्ये खदिरं प्रविष्टम्॥
चूर्णं तु ताम्बूलगतं हि भक्ष्यं तस्यास्थिजत्वेऽपि च भस्मता यत्।
परं तु प्राण्यङ्गजताप्रयुक्तामिषत्वतस्तद्व्रतिभिर्न भक्ष्यम्॥

अत्र ताम्बूलादीनां उच्छिष्टत्वाभावेऽपि भक्षणनिमित्तं द्विराचमनं कार्य्यम्।

सुप्त्वा क्षुत्वा च भुक्त्वा च निष्ठिव्योक्त्वाऽनृतानि च।
पीत्वाऽपोऽध्येष्यमाणश्च आचामेत्प्रयतोऽपि सन्॥

इति मनुवचनात्। उच्छिष्टस्पर्शादिप्रतिप्रसवार्थत्वादनुच्छिष्ट-वचनस्य सार्थकत्वम्।

तथाच बृहस्पतिः,—

उच्छिष्टेनान्यविप्रेण विप्रः स्पृष्टस्तु तादृशः।
उभौ स्नानं प्रकुरुतः सद्य एव समाहितौ॥

नोच्छिष्टस्तु क्वचिद्व्रजेत् इत्यादिकमेव ताम्बूलभक्षणादौ नास्ति।

यत्तु भट्टाचार्यैः परस्परताम्बूलभक्षणं दुराचारत्वेनोक्तं तन्नोच्छिष्टस्य स्पर्शदोषमभिप्रेत्य।

किन्तु,—

भुञ्जानस्य तु विप्रस्य सवर्णस्पर्शनं यदि।
त्यक्त्वाऽन्नं स शुचिर्भूत्वा प्राणायामेन शुद्ध्यति॥

इति भक्ष्यकालेऽन्नस्पर्शनमात्रस्याशुद्धिकरत्वमभिप्रेत्य दुराचारत्वेनोक्तम्।

न ह्येतद्भोजनधर्मः। किन्तु भोजने निमित्ते पुरुषार्थः।
तेनाचामनं ताम्बूलभक्षणेऽपि स्यादेव।

## अथाभक्ष्याणि।

विश्वामित्रः,—

जातिक्रियास्वभावदुष्टतासत्संसर्गदुष्टं सुहृल्लेख्यं च न भक्षयेत्।

एतदुपलक्षणं अभक्ष्याणामष्टविधत्वात्।

तथाच,—

जातिदुष्टं क्रियादुष्टं कालाश्रयविदूषितम्।
संसर्गरसदुष्टं च सुहृल्लेख्यं स्वभावतः॥

इति भविष्यपुराणे सुहृल्लेख्यमिति भावदुष्टमुच्यते। चिकित्सा तु हृदये इत्यादि वक्ष्यमाणनिरुक्तेः वाग्दुष्टमपि सुहृल्लेख्यमिति वक्ष्यते।

तत्रादौ जातिदुष्टानि भविष्ये,—

लशुनं गृञ्जनं चैव पलाण्डुं कवकानि च।
वार्त्ताकुं नालिकालावुमुपेयाज्जातिदूषितम्॥

गृञ्जनं लशुनसदृशः कन्दविशेषः, उत्तरापथे प्रसिद्ध इति लक्ष्मीधरः, गृञ्जने 'गजरस्तथेति निरुक्तपाठात् पश्चिमप्रसिद्धः पलाण्डुविशेष इत्येके न तु शङ्काशनम्। तत्र पर्यायाभावात्, तत्तु मादकत्वादभक्ष्यमिति केचित्, गृञ्जनपलाण्डू लशुनप्रभेदौ इति केचित्। कवकञ्चैत्यवृक्षस्थितं पिण्डोपमं कुमुदकलिकाकृति छत्राकसदृशं शुक्लं शिथिलावयवम्।

तथाच ब्राह्मे,—

मधुकैटभवृत्राणां त्रिशीर्षस्यासुरस्य च।
विष्णुना हन्यमानानां यन्मेदः पतितं भुवि॥
पिण्डोपमं तु खखुण्डं कवकं चैत्यसन्निभम्।
छत्राकं छत्रसदृशं दैत्यदेहसमुद्भवम्॥

अत्र वार्त्ताकुपदेन श्वेतवार्त्ताकुः।

खखुण्डं श्वेतवार्त्ताकुं कुष्माण्डञ्च न भक्षयेत्, इति देवलवचनात्,

(१) -ऽजगरस्तथा।

तथा,—

वार्त्ताकुकुम्भीत्यादि यमवचनेऽपि बोध्यम् ।

यत्र वार्त्ताकुशब्दोऽस्ति तत्याज्यं हरिमिच्छतेत्यादावपि बोध्यम् । समाचारोऽप्येवमेव, नालिका कलम्बिका, कुम्भाण्डो दाड़िमसदृशः, फलविशेषः, कुम्भाण्डनिषेधे चल्लणाफलं निषिद्धमिति स्मृतिरत्नमालायां व्याख्यातम् ।

अभक्ष्यप्रकरणे, यच्चान्यत् परिचक्षते इति आपस्तम्बवचनात्, विशेषतोऽनिषिद्धमपि शिष्टविगीतं न भक्ष्यं, तथा चल्लणाफलमभक्ष्यमिति निबन्धकृतः ।

यमः,—

भूमिजं वृक्षजं वापि छत्राकं भक्षयन्ति ये ।
ब्रह्मघ्नांस्तान् विजानीयाद् ब्रह्मवादिषु गर्हितान् ॥

इति द्वयोरपि छत्राकयोर्निषेधः ।

ब्राह्मे—

राजमाषाः स्थूलमुद्गास्तथा वल्लकवासकौ ।
मसूराः शतपुष्पाश्च कुसुम्भं श्रीनिकेतनम्[1] ॥
शस्यान्येतान्यभक्ष्याणि न च देयानि कस्यचित् ।

तथा,—

भुक्त्वा तु क्षारलवणं त्रिरात्रं तु व्रतञ्चरेत् ।

राजमाषाः पश्चिमदेशप्रसिद्धाः, स्थूलमुद्गाः वासकः प्रसिद्धः, शतपुष्पाः सौप इति प्रसिद्धः, क्षारलवणमुषरमृत्तिकाप्रभवलवणम् ।

(१) मसूराः शतपुष्पाच कुसुम्भ चश्विकेतनम् ।

भविष्ये,—

अङ्गुल्या दन्तकाष्ठञ्च प्रत्यक्षलवणञ्च यत्।
मृत्तिकाभक्षणञ्चैव तुल्यं गोमांसभक्षणम्॥

प्रत्यक्षलवणं अन्नव्यञ्जनादिसंस्कारप्रवेशमन्तरेण साक्षादेव केवल-भक्ष्यमाणलवणम्।

प्रचेताः,—

मृल्लोष्टखादनेऽहोरात्रमभोजनाच्छुद्धिः।

विज्ञानेश्वरधृता स्मृतिः,

कुष्माण्डकेवुवृन्ताककोविदारांश्च वर्जयेत्।
तथाऽकालप्ररूढ़ानि पुष्पाणि च फलानि च।
विकारवच्च यत्किञ्चित्तत् प्रयत्नेन वर्जयेत्।
वृन्ताको वार्त्ताकिसदृशः, फलविशेषो हरितः।
पाके रक्त इति लक्ष्मीधरः, केवु केवुकम्।

मनुः,—

अभक्ष्याणि द्विजातीनाममेध्यप्रभवानि च।
लोहितान् वृक्षनिर्यासान् व्रश्चनप्रभवांस्तथा॥
शेलुं गव्यञ्च पेयूषं प्रयत्नेन विवर्जयेत्।
अमेध्यप्रभवानि विष्ठाजातानि तण्डुलीयकादीनि॥

यद्वा,—

वीजानि गुदमार्गनिर्गतानि विष्ठामध्यगतानि यानि वृक्षं जनयन्ति तानि।

तत्र—

चैत्रविष्ठाक्रान्तभूमिजानामपि आम्रवृक्षादीनां फलपुष्पे ग्राह्ये ।

तथा बौधायनः—

अमेध्येषु च ये जाता वृक्षाः पुष्पफलोपगाः ।
तेषामपि न दुष्यन्ति पुष्पाणि च फलानि च ॥

पुष्पफलोपगा इति विशेषणाद्बहुपुष्पफला आम्रादयो ग्राह्या न तु क्षुद्रवार्त्ताक्यादय इति मेधातिथिः, तथा च तद्विधलतावृक्षादीनां पुष्पफले ग्राह्ये, निर्यासा वृक्षनिर्गतकठिनरसास्ते चेल्लोहितवर्णास्तदा न भक्ष्याः, यथा नारिकेलवृक्षादिषु, तेन हिङ्गुकर्पूरादिषु न दोष इति लक्ष्मीधरः, व्रश्चनं छेदनं, तत्प्रभवास्तु निर्यासा लोहिता अभक्ष्याः, पुनर्निर्देशात्, अथो खलु यो लोहितो यथा व्रश्चनान्निर्यसति तस्य नाशं काममन्यस्येति तैत्तिरीयश्रुतेश्च ।

शेलुः श्लेष्मातकः, बहु आलु इति प्रसिद्धः[1] ।

दुग्धप्रकरणे हारीतः, मासे न पेयूषं भवतीति ॥

तथा च नवप्रसूताया गोः क्षीरं मासपर्यन्तं अभक्ष्यम् ।

अनिर्दशाया गोः क्षीरमिति मनुवचनं तु अत्यन्तापद्विषयमिति बोध्यं, तथा यदग्निसंयोगात् कठिनं भवति तच्चेद्द्रव्यं तदाऽभक्ष्यम् ।

आपस्तम्बः—

भक्षयेद्यदि नीलं तु प्रमादाद्ब्राह्मणः सकृत् ।
चान्द्रायणेन शुद्धिः स्यादापस्तम्बोऽब्रवीन्मुनिः ॥

(१) अग्ला आलु इति प्रसिद्धः ।

तथा,—

तथा कीलालोषधीनां च कीलाली सुरा।
तदर्थं स्थापिता भक्ष्या अप्योषधयोऽभक्ष्याः॥

गौतमः—

उद्धृतस्नेहविलयपिण्याकमथितप्रभृतीनि नाद्यात् विलयोद्धृतम्[1]।

षट्त्रिंशन्मते,—

षणपुष्पं शाल्मलिं च करनिर्मथितं दधि।
वह्निर्वेदिपुरोडाशं जग्ध्वा नाद्यादहर्निशम्॥

उशनाः,—

कुसुम्भं नालिकाशाकं वार्त्ताकुं पोतिकं तथा।
भक्षयन् पतितस्तु स्यादपि वेदान्तगो द्विजः॥

पोतिकं, पोइ इति प्रसिद्धं, वार्त्ताकुः श्वेतवार्त्ताकुरुक्त एव, आपस्तम्बेन नवपल्लवस्य पैठीनसिना स्नार्त्तकनाम्नो वृक्षस्य अभक्ष्यत्वमुक्तम्।

यमः,—

भूस्तृणं शिग्रुकञ्चैव खखुण्डं कवकं तथा।
एतेषां भक्षणं कृत्वा प्राजापत्यं समाचरेत्॥

भूस्तृणं, गन्धतृणं, अतएव शिग्रुभक्षणे महद्विगानं, शङ्खलिखिताभ्यां करञ्जकुम्भीभक्षणं घनच्छत्राकभक्षणञ्च निषिद्धं, कुम्भी विल्वफलसदृशं फलमरण्ये प्रसिद्धम्।

(१) उद्धृत स्नेहविलय पिण्याक प्रभृति नाद्यात्।

घनकृताकी मेघसमयोत्पन्नः कवकः ।

देवलः,—

न वीजान्युपयुञ्जीत रोगोत्पत्तिमृते द्विजः ।
फलान्येषामनन्तानि वीजानां हि विनाशयेत् ॥

वीजानि कुष्माण्डवीजानीति लक्ष्मीधरः, तस्यायमाशयः, यद्यपि मुद्गादीनि धान्यादीन्यप्यङ्कुरयोग्यानि तथापि तेषां भक्षणानुज्ञानात् यान्येव कुष्माण्डवीजादीनि विशेषतो भक्ष्यत्वेननोक्तानि ।

[1]अन्यान्यपि यदाङ्कुरजननयोग्यानि तदा न भक्ष्याणि, कोमलतदयोग्यानि चेद्भक्ष्याणि, मुद्गधान्यादीन्यपि अङ्कुरजननयोग्यानि तदर्थं पृथक्कृत्य रक्षितानि न भक्ष्याणीत्येके ।

ब्राह्मे,—

पिप्पलीनिकरञ्जानि कुम्भीराणि वटानि च ।
मातुलङ्गानि प्लक्षाणि पनसोदुम्बराणि च ॥
शिग्रुशोभाञ्जने चैव कोविदाराणि चैव हि ।
अथ तिन्तकपित्थानि शेलुश्लेष्मातकानि च ॥
विभीतकानि च तथा न भक्ष्याणि फलानि तु ।
अलक्ष्मीस्तेषु वृक्षेषु बद्धा दुर्वाससा यतः ॥
वनवासव्रतं कुर्याद्दिनं तत्प्राशनाद्द्विज ।
लताभिर्वेष्टिता ये च गुल्मरोगहताश्च ये ॥

(१) तान्यपि- ।

भूतप्रेतपिशाचैश्च पक्षिभिर्ये च संश्रिताः।

शिग्रु शोभाञ्जनस्यैव भेदः, तत्र पनसस्य भक्षणसमाचारात् विष्णुदेयत्वाच्च पनसाम्रहरीतकीति हविष्यप्रकरणोक्तत्वाच्च पनसनिषेधो भूप्रोतफलकदाचिणात्यप्रसिद्धपनसजातिपर एव इति निबन्धकृतः, मातुलङ्गोदुम्बरप्लक्षफलानां विष्णुदेयत्वाद्भक्ष्यत्वेऽप्यलक्ष्मीकरत्वात् वर्जनमुचितम्।

यथा,—

दधिसक्तुफलादीनां भक्ष्याणामपि रात्रावलक्ष्मीकरत्वाद्वर्जनं॥

तथा च विष्णुः,—

न दिवाधानाः, न रात्रौ तिलसम्बन्धः, न दधिसक्तुकोविदारवटपिप्पलशाकम्।

देवलः,—

दिवापि दधिधानासु रात्रौ च दधिसक्तुषु।

श्लेष्मातके तथालक्ष्मीर्नित्यमेव कृतालया॥

ब्राह्मे,—

अपि प्रयाणसमये रात्रौ न प्राशयेद्दधि।

मधुपर्कप्रदानं तु वर्जयित्वा तु कामतः॥

यद्यपि विष्णुस्मृतौ नाभक्ष्यनैवेद्यार्थं इति निषिद्धद्रव्याणां नैवेद्यपर्युदासः कृतो न तु वराहपुराणोक्तनैवेद्यद्रव्याणां शिष्टभक्ष्यता कथिता, तथा सति वाक्यभेदापत्तेः।

तथापि,—

स्मृतिश्रुतिसमापन्नं देवद्रव्यगुणान्वितम् ।
देवतायै यथाक्लृप्तं प्रोक्षितं शिष्टभोजनम् ॥ इति

शङ्खलिखितस्मृतौ देवनैवेद्यद्रव्यसादृश्यलिङ्गात्सत्वोत्कटविष्ण्वादि-नैवेद्येऽभक्षणसम्भावनाऽपि नास्ति ।

एवञ्च,—

वराहोक्तनैवेद्यद्रव्याणि भक्ष्याण्येव ।

तानि पूजाप्रकरणे लिखितानि, यद्यपि कर्मविपाकसमुच्चये,—

लशुनं गुञ्जनञ्चैव तालञ्चाश्नाति यो द्विजः ।
स वातरोगी भवति कृच्छ्रञ्चान्द्रायणञ्चरेत् ॥ इति

वर्जनाद्वर्जनं प्राप्तं तथा तालफलानि चेति विष्णुदेयत्वाद्भक्षण-समाचारः, तालफलप्रतिषेधवाक्यानाञ्च कल्पतरुकारेण नादृत-त्वादिति केचित् ।

मूलकं तु भक्ष्यं तन्निषेधवाक्यानामसम्मूलत्वात् ।

मूलकस्य च शाकं चेति वाराहे मूलकशाकस्य विष्णुनैवेद्य-देयत्वात्, "मूलकं दीर्घमेव चे"ति वायुपुराणे श्राद्धदेयत्वात् ।

द्वाविन्दू द्वे च मूलके इति मनुवचने श्रान्तद्विजस्य स्तेयापवादेन भक्ष्यत्वाभ्यनुज्ञानत् । सर्वदेशीयाविगीतभक्षणसमाचाराच्च ।

कथञ्चिन्निषेधवाक्यानां प्रामाण्यसन्देहेऽपि वर्षाकालीनपिण्ड-मूलकरक्तमूलकपरत्वोपपत्तेस्तद्वर्जनं अनादरणीयम्,

इति केचित् ।

वस्तुतस्तु, माघोपक्रमे स्कान्दे,—

मातॄणां देवतानाञ्च मूलकं नैव दापयेत् ।
ददन्नरकमाप्नोति भुञ्जीत ब्राह्मणो यदि ॥
ब्राह्मणो मूलकं भुक्त्वा चरेच्चान्द्रायणं व्रतम् ।
अन्यथा याति नरकं क्षत्रं विट् शूद्र एव हि ॥

वर्जनीयं प्रयत्नेन मूलकं यदिवागममिति, माघे मूलकं निषिद्धम् ।

अतएव,—

योऽर्च्चयेन्माधवं मूढ़ो भक्षयित्वाऽन्न मूलकम् ।

अपराधशतं तेन कृतं भवति वासवेति वाक्यस्य प्रामाण्य-सन्देहेऽपि माघे विष्णोर्माधवनामकत्वान्माघपरत्वमेव,

आषाढ़शुक्लैकादश्यादिचातुर्मास्यव्रतोपक्रमे स्कन्दपुराणचेत-माहात्मेग,—

पटोलं मूलकञ्चैव वार्त्ताकुञ्च न भक्षयेदिति । तत्रापि मूलकवर्ज्जनं, तथाच अन्येषु सप्तसु मासेषु मूलकं भक्ष्यमेव ।

## अथ दुग्धानि ।

मनुः,—

अनिर्दशाया गोः क्षीरमौष्ट्रमेकशफन्तथा ।
आविकं सन्धिनीक्षीरं विवत्सायाश्च गोः पयः ॥

आरण्यानां च सर्वेषां मृगाणां महिषीं विना ।
स्त्रीक्षीरं चैव वर्ज्यानि सर्वशुक्तानि चैव हि ॥

अनिर्दशायाः प्रसवदिनादारभ्य दशदिनानपक्रान्तायाः ।

इदञ्चात्यन्तापद्विषयमिति प्रागुक्तम् ।

मासोत्तरं दोहनं सम्यगित्यप्युक्तं, तत्रापि विशेषमाह—

हारीतः,—

द्वौ मासौ पालयेद्वत्सं तृतीये द्विस्तनं दुहेत् ।
चतुर्थे त्रिस्तनं दुह्याद्यथान्यायं यथाबलम् ॥

एकशफा अश्वादयः, आविकं मेषक्षीरं, सन्धिनी या ऋतुमती वृषमिच्छति, विवत्सा, वत्सरहिता, आरण्यमृगाः, रुरुपृषतादयः, गोश्च क्षीरमनिर्दशायाः सूतके अजामहिष्योश्च, स्यन्दिनीयमसूसन्धिनीनाञ्च, स्यन्दिनी वत्सं विना प्रस्नुता, यमसूर्यमलापत्या, अजामहिष्योः सूतकं दशदिनपर्य्यन्तम् ।

तथाच यमः,—

अजा गावो महिष्यश्च ब्राह्मणी च प्रसूतिका ।
दशरात्रेण शुद्ध्यन्ति भूमिष्ठञ्च नवोदकम् ॥

क्षीरनिषेधं प्रकृत्य बौधायनः, विवत्साऽन्यवत्सेन दुग्धा ।

हारीतः,—

न मृतवत्सायाः शोकाभिभूतत्वात् ।

न निर्णिक्तायाः असत्वात्, निर्णिक्ताया निःशेषदुग्धायाः, वत्सं प्रत्यवशेषस्य असत्वादित्यर्थः ।

आपस्तम्बः,—

अपेयं तथोदकं पयः।

निषेधप्रकरणे विष्णुः, अमेध्यभुजश्चेति।

तथाच विष्ठाभुजो गोः क्षीरं अपेयम्।

क्षीराणि यान्यभक्ष्याणि तद्विकाराशने बुधः।
सप्तरात्रं व्रतं कुर्य्याद्यदेतत्परिकीर्त्तितम्॥

ब्राह्मे,—

घृतान्नमण्डं घृतात्फेनं पेयूषमथवापि गोः।
सगुड़ं मरिचाक्तञ्च तथा पर्युषितं पयः॥

सगुड़ं मरीचाक्तञ्च पर्युषितं पयोऽप्यभक्ष्यमित्यर्थः।

भविष्ये,—

कपिलायाः पिवेच्छूद्रो नरके स विपच्यते।
हुतशेषं पिवन् विप्रो विप्रः स्यादन्यथा पशुः॥

विज्ञानेश्वरीये,—

क्षत्रियश्चापि वृत्तस्थो वैश्यः शूद्रोऽथवा पुनः।
यः पिवेत्कपिलाक्षीरं न ततोऽन्योऽस्त्यपुण्यकृत्॥

## अथ मांसानि ।

### तत्र पक्षिप्रभृतयः ।

मनुः,—

क्रव्यादः शकुनीन् सर्वान् तथा ग्रामनिवासिनः ।
अनिर्दिष्टांश्चैकशफान् टिट्टिभञ्च विवर्जयेत् ॥
कलविङ्कं प्लवं हंसं चक्राङ्गं ग्रामकुक्कुटम् ।
सारसं रज्जुदालञ्च दात्यूहं शुकसारिके ॥
प्रत्युदान् जलपादांश्च कोयष्टिनखविष्किरान् ।
निमज्जतश्च मत्स्यादान् सौनं वल्गुरमेव च ॥
वकञ्चैव वलाकञ्च काकोलं खञ्जरीटकम् ।
मत्स्यादान् विड्वराहांश्च मत्स्यानेव च सर्वशः ॥

क्रव्यादो मांसाशिनो गृध्रादीन् ग्रामवासिनः, पारावतादीन्, रज्जुदालः, काष्ठकुट्टकः, दात्यूहः डाहुक इति सिद्धः, प्रत्युदा ये चञ्चा-प्रत्युद्य प्रत्युद्य भक्षयन्ति, जलपादा आद्यादयः, नखविष्किरा-नखैर्विकीर्य्य ये भक्षयन्ति, निमज्ज्य मत्स्यादा मद्‌गुरप्रभृतयः, सौनं सुनास्थानभवं मांसं, वल्गुरं शुष्कमांसं, काकोलो द्रोणकाकः, मत्स्यादा नक्रादयः, सर्वशः सर्वप्रकारेण ।

देवलः,—

वलाकहंसदात्यूहभृङ्गराजकचित्रकाः ।
उलूककुररश्येनगृध्रकुक्कुटवायसाः ॥

चकोरः कोकिलो रक्ताकुञ्चिसञ्चासमुद्गकौ।
कङ्कसारवशोभासः[1] शतपत्रप्लवङ्गमाः॥
उत्क्रोशो वर्हिणः क्रौञ्चश्चक्रवाकः शिलीमुखः।
पारावतकपोतौ च अभक्ष्याः पक्षिणः स्मृताः॥

भृङ्गराजो धूम्याटः, धनच्छाया इति प्रसिद्धः, चित्रकः चित्रकपोतः, कङ्को लोहितपत्रः। भक्ष्या इत्यनुवृत्तौ वौधायनः,—

पक्षिणस्तित्तिरिकपोतकपिञ्जललावलणमयूरवारणवर्ज्जीणाः पञ्च विष्किराः।

शङ्खः,—

तित्तिरश्च मयूरश्च लावकश्च कपिञ्जलम्।
वार्द्धीणं संवर्त्तकश्च भक्ष्यानाह यमः सदा॥

एवमुक्तानामपि पक्षिणां ब्राह्मणा मांसं न भक्षयन्त्येव।

## अथ पशवः।

वशिष्ठः,—

खड्गे तु विवदन्ते, ग्राम्यशूकरे च, खड्गग्राम्यशूकरयोर्मुनीनामपि विवादासत्वान्य[2]भक्षणसमाचारः।

(१) वर्षौ-।
(२) -विवादासत्वाद् भक्षणसमाचारः।

ब्राह्मे,—

पशोश्च मार्गमाणस्य न मांसं ग्राहयेद्द्विजः।
पृष्ठमांसं गर्भशय्यां शुष्कमांसमथापिवा॥
भूमेरन्तरितं कृत्वा मृद्भिश्चाच्छादितं च यत्।
पक्वमांसमृजेषन्तु प्रयत्नात्तन्न भक्षयेत्॥

एतेन भौमोष्मपक्वद्रव्यमात्रमभक्ष्यं, इति निबन्धकृतः।

मांसे तु विशेषः, भूम्यामन्तर्गतं इति पठित्वा भूम्यां गर्भे पक्वमिति व्याख्यानात् गर्त्ते धूमपक्वमपि ऋजेषपक्वमुक्तं, आहिताग्नेरस्य पृथक् निषेधः प्रायश्चित्तविशेषार्थं इति कर्काचार्य्याः।

मनुः,—

न भक्षयेदेकचरानज्ञातांश्च मृगद्विजान्।
भक्ष्येष्वपि समुद्दिष्टान् सर्वान् पञ्चनखांस्तथा॥

एकचरा एकाकिनः प्रायेण स्वभावतो ये चरन्ति सर्पादयः।

अभक्ष्यप्रकरणे आपस्तम्बः,—

पञ्चनखानां गोधाकच्छपश्वाविच्छल्यकखड्गशशपूतिशवर्जं, शल्यको भिङ्ग इति सिद्धः, पूतिशो हिमवति प्रसिद्ध इति कपर्दिभाष्यम्।

मनुः,—

श्वाविधं शल्यकं गोधां खड्गकूर्मशशांस्तथा।
भक्ष्यान् पञ्चनखेष्वाहुरनुष्ट्रांश्चैकतोदतः॥

एकतोदत एकदन्तान्,

महाभारते,—

आजङ्गव्यञ्च यन्मासं मायूरञ्च विवर्जयेत् ।

हारीतः,—

ग्राम्यारण्यानां पशूनामश्नन्ति, यथाजमेषमहिषहरिणखड्गरुरु-पृषतऋष्यन्यङ्कुमहारण्यनिवासिनश्च वाराहांस्तथा शशकशल्यकसे-धागोधाकूर्मवर्त्तिकतित्तिरिमयूरवार्द्धीणसलावककुक्कुटकपिञ्जलान्, सशल्कान् मत्स्यान्वयोपपन्नान् भक्षयेत् रुरुर्बहुशाखशृङ्गो मृगः, ऋष्यो मृदुशृङ्गो गोधा इति प्रसिद्धः, न्यङ्कुः, सम्बरसदृशः शृङ्गरहितः सेधा सलिलवर्त्ती ।

पैठीनसिः,—

ग्रामारण्याश्चतुर्द्दश, गौरविरजोऽश्वोऽश्वतरो गर्दभोमनुष्यश्चेति सप्त ग्राम्याः पशवः महिषवानरपक्षिसरीसृपरुरुपृषतमृगाश्चेति-सप्तारण्याः पशवः ।

## अथ मत्स्याः ।

मनुयमौ,—

यो यस्य मांसमश्नाति स तन्मांसाद उच्यते ।

मत्स्यादः सर्वमांसादस्तस्मान्मत्स्यान् विवर्जयेत् ॥

यमः,—

अभक्ष्या मकरसर्पसरीसृपमद्गुमयूरकर्मिकनक्रकर्कटकशिशु-माराः, ये चान्ये ह्यकर्णकाः, ये चान्येऽशल्कला मत्स्या उभय-

कास्याः, सर्पोऽत्र डुण्डुभः, सरीसृपोऽत्र जलौकाः मद्गुर्जलकाकः, मयूरोऽत्र तत्सदृशो जलपक्षी, कर्मिकः स्वल्पसर्पसदृशो मत्स्यः उभयतोमुखाः ।

पुनर्यमः,—

मत्स्यान् सकलान् वेदाध्यायी च वर्जयेत्, त्रैवर्णिकोऽत्र वेदाध्यायी ।

मनुः,—

पाठीनरोहितावाद्यौ नियुक्तौ हव्यकव्ययोः ।
राजीवाः सिंहतुण्डाश्च सशल्काश्चैव सर्वशः ॥

हव्यकव्ययोर्नियुक्तौ आद्यौ आदनीयावित्यर्थः,

भक्ष्या इत्यनुवृत्तौ बौधायनः,—

मत्स्याः सहस्रदंष्ट्रचिलिचिमोवर्मानीसृच्छिरसः 'सतिचीमशफरी-लोहितराजीवाः ।

अभक्ष्या इत्यनुवृत्तौ गौतमः,—

मत्स्याश्च विकृताः, मत्तास्मत्प्रपितामहकृष्णाद्वहत्यण्डिताः, आकारविकृता जन्मविकृताश्च अभक्ष्या इति । तथाच लवणजल-प्रभवचिङ्गटकानां अर्णजलाभावाज्जन्म वैकृतमिति न श्राद्ध-देयत्वम् ।

मत्स्यानामण्डजत्वं मनुराह,—

अण्डजाः पक्षिणः सर्पा नक्राः सर्पाः सकच्छपाः ।
यानि चैवंप्रकाराणि स्थलजान्यौदकानि च ॥ इति ।

(१) वृतिचिम- ।

## अथ मांसभक्षणवर्जनविधिः।

मनुः,—

एतदुक्तं द्विजातीनां भक्ष्याभक्ष्यमशेषतः।
मांसस्यातः प्रवक्ष्यामि विधिं भक्षणवर्जने॥
प्रोक्षितं भक्षयेन्मांसं ब्राह्मणानाञ्च काम्यया।
यथाविधि नियुक्तश्च प्राणानामेव चात्यये॥
प्राणस्यान्नमिदं सर्व्वं प्रजापतिरकल्पयत्।
जङ्गमं स्थावरं चैव सर्व्वं प्राणस्य भोजनम्॥
चराणामन्नमचरा दंष्ट्रिणाञ्चाप्यदंष्ट्रिणः।
अहस्ताश्च सहस्तानां शूराणाञ्चैव भीरवः॥
नात्ता दुष्यत्यदन्नाद्यान् प्राणिनोऽहन्यहन्यपि।
धात्रैव सृष्टा ह्याद्याश्च प्राणिनोऽत्तार एव च।
यज्ञाय जग्धिर्मांसस्येत्येष दैवो विधिः स्मृतः॥
अतोऽन्यथा प्रवृत्तिस्तु राक्षसो विधिरुच्यते।
क्रीत्वा स्वयम्वाऽप्युत्पाद्य परोपहृतमेव वा।
देवान् पितॄंश्चार्च्चयित्वा खादन्मांसं न दुष्यति॥

एतदुक्तं द्विजातीनामिति पूर्व्वोक्तभक्ष्याभक्ष्ययोर्ब्राह्मणादित्वयाधिककथनं शूद्रव्युदासार्थम्॥

तेन लसुनादिभक्षणेन दोषः, तन्मध्यपतितश्वकाकादिभक्षणं तु महाजनविगानाद्दोषावहं, अतो वक्ष्यमाणमांसवर्ज्जनविधानं

चातुर्वर्ण्यसाधारणं, वर्जनेऽत्र[1]विधिः [2]सूर्यानिचणवत्सङ्कल्परूपः, प्रोक्षितं यज्ञार्थं मन्त्रैः संस्कृतं, संस्कृतान् पशून् मन्त्रैरित्यादि वाक्यशेषात्, ब्राह्मणानां काम्ययेति, यदा ब्राह्मणाः किञ्चित्प्रत्येकम् कामयन्ते त्वया मांसं भोक्तव्यमिति तदा तेषामिच्छया एकवारं भक्षयतो न दोषः, सकृद्ब्राह्मणकाम्ययेति यमोक्तेः। प्राणानामेव चात्यय इति, रोगेण अन्नाभावेन वा यदा मांसभक्षणव्यतिरेकेण वा प्राणात्ययः सम्भाव्यते तदा मांसं भक्ष्यमित्यर्थः, एषामेव पूर्व्वोक्तानां अर्थवादाः प्राणस्यान्नमित्यादयः, वराहहरिणादयः, दंष्ट्रिणो व्याघ्रादयः, सहस्ता मनुष्यादयः, अहस्ता मत्स्यादयः, जग्धिर्भक्षणं, स्वयमुत्पाद्येति क्षत्रियविषयः।

तथाच महाभारते,—

क्षत्रियाणाञ्च यो दृष्टो विधिस्तमपि मे शृणु।
वीर्य्येणोपार्जितं मांसं यथाखादं न दुष्यति॥
आरण्याः सर्व्वदैवत्याः प्रोक्षिताः सर्व्वशो मृगाः।
अगस्त्येन पुरा राजन् मृगया येन युज्यते।
नात्मानमपरित्याज्या मृगया नाम विद्यते॥

समतामुपसङ्क्रम्य भूतं हन्येत वा नवा। क्रीत्वा स्वयम्बेत्यनेन च देवपित्रर्चनपूर्व्वके मांसभक्षणे दोषाभावः प्रदर्शितः।

यत्तु मांसवर्ज्जनात् फलश्रवणं तदप्येतत्प्रकारमांसवर्ज्जनभक्षणविषयं न नियुक्तादिविषयं तत्राकरणे दोषश्रुतेः।

---

(१) वर्जनेऽत्यविधिः।

(२) सूर्य्यानीक्षणवत्-।

यमः,—

भक्षयेत्प्रोक्षितं मांसं सकृद्ब्राह्मणकाम्यया ।

दैवे नियुक्ताः श्राद्धे वा नियमे तु विवर्ज्जयेत् ॥

नियमे मांसवर्ज्जनव्रते कृते सति, एतच्च प्रोक्षितातिरिक्तैः सर्व्वैरेव सम्बध्यते, प्रोक्षिते तु न सम्बध्यते, प्रत्यक्षश्रुतिविरोधात्, एवमन्यत्रापि ।

मांसभक्षणाभ्यनुज्ञाते स्मृत्यन्तरोक्ते बलवत्प्रामाण्यविषयं विहाय नियमे तु विवर्ज्जयेदिति सम्बन्धनीयम् ॥

पैठीनसिः,—

श्राद्धे तु मांसमश्नीयात्तथाऽतिथिनिमित्तके ।

यो नाश्नाति, यावन्ति पशुरोमाणि तावन्नरकमृच्छति । श्राद्धे निमन्त्रित इति शेषः, अतिथिनिमित्तके अतिथ्यर्थं यदुपात्तं तदतिथीनां भक्ष्यमित्यर्थः ।

यमः,—

आमन्त्रितस्तु यः श्राद्धे दैवे मांसं समुत्सृजेत् ।

यावन्ति पशुरोमाणि तावन्नरकमश्नुते ॥

हारीतशातातपौ,—

क्षत्रियैस्तु मृगव्येन विधिना समुपार्ज्जितं ।

श्राद्धकाले प्रशंसन्ति सिंहव्याघ्रहतञ्च यत् ।

न प्रशंसन्ति वै श्राद्धे यच्च मन्त्रविवर्ज्जितम् ॥

मृगव्येन आखेटेन विधिना, तीयंश्चोऽत्र सिंहादेरन्ये पशवः ।

आपस्तम्बः,—

हिंसार्थेनासिना च्छिन्नं मांसमभोज्यम् ।

प्राणिवधार्थमेव यन्निश्चितं तेन यच्छिन्नं पाकार्थङ्कृतं, असिग्रहण-मुपलक्षणम् ।

मनुः,—

नाद्यादविधिना मांसं विधिज्ञो नात्मविद्द्विजः ।
जग्ध्वा ह्यविधिना मांसम्प्रेत्य तैरद्यतेऽवशः ॥
मांसभक्षयिताऽमुत्र यस्य मांसमिहाद्म्यहम् ।
एतन्मांसस्य मांसत्वं प्रवदन्ति मनीषिणः ॥

हारीतः,—

भक्षयित्वा तु यो मांसमद्भिः शौचं समाचरेत् ।
हसन्ति देवतास्तस्य अशुचेः शुचिदर्शिनः ॥

मनुः,—

अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
संस्कर्त्ता चोपहर्त्ता च खादकश्चाष्टघातकाः ॥

यमः,—

यस्तु खादति मांसानि प्राणिनां जीवितैषिणां ।
हतानाञ्च मृतानाञ्च यथा हन्ता तथैव सः ॥
अनुमन्ता विशसिता निहन्ता क्रयविक्रयी ।
घातकः षट् समाख्याता भोक्ता तत्र तु सप्तमः ॥
सर्वां तेषां सकाशात्तु उपभोक्ताऽतिरिच्यते ।
क्रेतारं व्रजते पादः पादो भोक्तारमृच्छति ॥

घातकं व्रजति पादः पादमृच्छन्त्यतस्त्रयः।
यदि तत्खादको न स्याद्घातको न तथा भवेत्॥
खादको घातकः क्रेता त्रयस्तुल्या न संशयः।
न भूमौ जायते मांसं न च वृक्षात्प्ररोहति॥
घोरं प्राणिवधं कृत्वा तस्मान्मांसं विवर्जयेत्।
यस्तु खादति मांसानि ब्राह्मणो वेदवित्तथा॥
स पच्यते निरालम्बे नरके तेन कर्मणा।
यस्तु भक्षयते मांसं विधिं हित्वा पिशाचवत्॥
स लोकेऽप्रियतां याति व्याधिभिश्चैव पीड्यते।

याज्ञवल्क्यः,—

सर्वान् कामानवाप्नोति हयमेधफलं तथा।
गृहेऽपि निवसन् विप्रो मुनिर्मांसस्य वर्जनात्॥

ब्राह्मे,—

भक्षयित्वा तु मांसानि पश्चाद्ये मांसवर्जिताः।
तेषां ब्रह्मपुरे वासो निश्चलो नात्र संशयः॥

महाभारते,—

चतुरो वार्षिकान् मासान् यो मांसं परिवर्जयेत्।
चत्वारि भद्राण्याप्नोति कीर्त्तिमायुर्यशोबलम्॥
अथवा मासमप्येकं सर्व्वमासमभक्षयन्।
अतीत्य सर्व्वदुःखानि सुखी जीवेन्निरामयः॥
मासन्तु कौमुदं पक्षं वर्जितं सर्वराजभिः।
शारदं कौमुदं मासं ततस्ते स्वर्गमाप्नुयुः॥

ब्रह्मलोके च तिष्ठन्ति ज्वलमानाः श्रियावृताः ।

उपास्यमानाः श्रियावृताः,—

उपास्यमाना गन्धर्वैः स्त्रीसहस्रसमन्विताः ॥

कौमुदः कार्त्तिको मासः ।

बृहस्पतिः,—

रोगार्त्तोऽभ्यर्थितो वापि यो मांसं नात्त्यलोलुपः ।
फलं प्राप्नोत्ययत्नेन सोऽश्वमेधशतस्य तु ॥
मद्यं मांसं मैथुनञ्च भूतानां लालनं स्मृतम् ।
तदेव विधिना कुर्व्वन् स्वर्गं प्राप्नोति मानवः ॥

## अथ पशुहिंसाविधिप्रतिषेधौ ।

मनुः,—

यज्ञार्थं ब्राह्मणैर्वध्याः प्रशस्ता मृगपक्षिणः ।
भृत्यानाञ्चैव वृत्त्यर्थमगस्त्यो ह्याचरत्पुरा ॥

यज्ञार्थं इति दृष्टार्थम् ।

प्रशस्ता भक्ष्यत्वेन निर्द्दिष्टाः, भृत्यानां वृत्त्यर्थं प्रकारान्तरेण भृत्यभरणासम्भवे ।

मनुः,—

कुर्य्याद्घृतपशुं सङ्गे कुर्य्यात्पिष्टपशुन्तथा ।
न त्वेव तु वृथा हन्तुं पशुमिच्छेत्कथञ्चन ॥

घृतपशुं पशुकार्य्ये घृतं, सङ्गे लोकाचारप्राप्तौ सत्यां, यज्ञादौ पशु-बधप्रसङ्गे, अत घृतं पिष्टं कुर्य्यादित्यर्थः।

## अथ मद्यानि।

मनुहारीतयमाः,—

सुरा वै मलमन्नानां पाप्मा च मलमुच्यते।
तस्माद्ब्राह्मणराजन्यौ वैश्यश्च न सुरां पिवेत्॥
गौड़ी पैष्टी च माध्वी च विज्ञेया त्रिविधा सुरा।
यथैवैका तथा सर्व्वा न पातव्या द्विजोत्तमैः॥
यक्षरक्षःपिशाचानां मद्यं मांसं सुरासवम्।
तद्ब्राह्मणेन नात्तव्यं देवानामश्नता हविः॥
अमेध्ये वा पतेन्मत्तो वैदिकं वाप्युदाहरेत्।
अकार्य्यमन्यत्कुर्य्याच्च ब्राह्मणो मद्यमोहितः॥
यस्य कायगतं ब्रह्म मद्येनाप्लाव्यते सकृत्।
तस्य व्यपैति ब्राह्मण्यं शूद्रत्वं च नियच्छति॥

एतेन जातीफलादेरप्यधिकभक्षणे मादकत्वान्मद्यप्रायश्चित्तं, शक्रा-सनमहिफेनञ्च मादकत्वाद्विगीतमेव।

यथा एका सुरा सर्व्वैर्न पेया तथा त्रिविधा ब्राह्मणैर्न पेया, तथा पैष्टी मुख्यसुरा, तत्पाने महापातकत्वादकामतो द्वादश-वार्षिकं गौड़ीमद्यपाने कृच्छ्रातिकृच्छ्रे घृतप्राशनं पुनःसंस्कारश्च मद्यत्वेनैव निषेधात्। त्रिविधा सुरेति तयोरपि ब्राह्मणं प्रति

सुरापानसमानदोषत्वेन सुराशब्दस्य गौणत्वात् । गौणत्वं च गौड़ीमाध्वीप्रभृत्येकादशमद्यगणनोत्तरं द्वादशं तु सुरामद्यं सर्व्वेषामधमं स्मृतमिति पौलस्त्येन पैष्ट्यामेव सुराशब्दप्रयोगात् ।

वर्ज्यप्रकरणे गौतमः,—

मद्यं नित्यं ब्राह्मणः तेनानुपनीतस्यापि अनूढायाः कन्याया-अपि मद्यमात्रनिषेधः, जातिपुरस्कारेण निषेधात् ।

तथाच स्मृत्यन्तरे,—

सुरापाननिषेधस्तु जात्याश्रय इति स्थितिरिति ।

वशिष्ठो दशमद्यान्याह ।

माधूकमैक्षवं टाङ्कं कौलं खार्ज्जूरपानसम् ।
मृद्वीकारसमाध्वीकं मैरेयं नारिकेलजम् ॥
अमेध्यानि दशैतानि मद्यानि ब्राह्मणस्य तु ।
राजन्यश्चैव वैश्यश्च स्पृष्ट्वा वै [1]तैर्न दुष्यतः ॥

माधूकं मधुकपुष्पोद्भवं, इक्षुरसभवमैक्षवं टङ्कः कपित्थसदृशः, काश्मीरदेशप्रसिद्धस्तद्भवं टाङ्कं, कौलं कोलफलजं, खार्ज्जूरं खर्ज्जूर-वृक्षजं तत्फलजञ्च, एवं पानसं, मृद्वीका द्राक्षा तद्रसजं मृद्वीका-रसं, माध्वीकं मधुसन्धानजं, मैरेयं धातुकीपुष्पगुड़धान्यसहित-मिति शब्दार्णवे वाचस्पतिः ।

पौलस्त्यो द्वादशाह,—

पानसं द्राक्षमाधूकं खार्ज्जूरं तालमैक्षवम् ।
मधूत्थं सैरमारिष्टं मैरेयं नारिकेलजम् ॥

---

(१) स्पृष्टा वै न तु दुष्यतः ।

समानानि विजानीयान्मद्यान्येकादशैव तु ।
द्वादशन्तु सुरामद्यं सर्व्वेषामधमं स्मृतम् ॥

एतेषां जात्यैव मद्यत्वादत्यमप्यभक्ष्यं, न मांसभक्षणे दोषो न मद्य- इति क्षत्रियवैश्यविषयम् ।

कामादपि हि राजन्यो वैश्यो वापि समाहितः ।
पिवेतां मधु वा तत्र न दोषं किञ्चिदृच्छतः ॥

इति यमवचनात् ।

किन्तु तयोः शूद्रस्यापि पैष्टी सुरा निषिद्धैव ।

एवञ्च मैत्रारण्यां तथा मद्यं स्मृतौ भक्ष्यमुदाहृतमिति वृहस्पतिवचनमपि क्षत्रियवैश्यविषयम् ।

मद्यमूत्रपुरीषाणां भक्षणे नास्ति कश्चन ।
दोषाश्चापञ्चमाद्दर्षात् पूर्व्वं पित्रोः सुहृद्गुरोरिति कुमारवचन-मपि न ब्राह्मणविषयं, तद्विषयत्वे वा दोषाल्पत्वपरं, अन्यत् सर्व्वं प्रायश्चित्तप्रकरणे विवेचनीयम् ।

इति जातिदुष्टान्यभक्ष्याणि ।

15588

## अथ क्रियादुष्टानि ।

भविष्ये,—

न भक्षयेत्क्रियादुष्टं यद्दृष्टं पतितैः पृथक् ।

वशिष्ठः,—

उच्छिष्टमगुरोरभोज्यं स्वमुच्छिष्टमुच्छिष्टोपहतं वसनकीटोपहतञ्च अत्र गुरुपदं पितृज्येष्ठभ्रातृपरम् ।

पितुर्ज्येष्ठस्य च भ्रातुरुच्छिष्टं भोज्यं, धर्म्मविप्रतिपत्तावभोज्यमित्यापस्तम्बवचनात्, पितृज्येष्ठभ्रातृभिन्नगुरोरप्युच्छिष्टमभोज्यं तयोरपि धर्म्मविप्रतिपत्तावधार्म्मिकत्वे न भोज्यम् ।

मातापित्रोरथोच्छिष्टं बालो भुञ्जन्सुखीभवेदिति ब्राह्मणवचनं अनुपनीतपरं, तथैवाचारदर्शनात् ।

स्वमुच्छिष्टं भुक्त्वा त्यक्तमन्नं त्यक्तपात्रस्थं, उच्छिष्टोपहतं उच्छिष्टेनापि कालान्तरेण मिश्रितं, वसनोपहतं परिहितवस्त्रस्पृष्टम् ।

शङ्खः,—

शूद्रोच्छिष्टाशने मासं पक्षमेकं तथा विशः ।

क्षत्रियस्य तु सप्ताहं ब्राह्मणस्य तथाह्निकम् ॥

सोच्छिष्टाशने चान्द्रायणम् ।

आपस्तम्बः ।

अन्त्यानां भुक्तशेषन्तु भक्षयित्वा द्विजातयः ।

चान्द्रं तप्तकृच्छ्रं तदर्द्धञ्च ब्रह्मक्षत्रविशाम्विधिः ॥

अङ्गिराः,—

> चाण्डालपतितादीनामुच्छिष्टान्नस्य भक्षणे ।
> चान्द्रायणञ्चरेद्विप्रः क्षत्रः सान्तपनञ्चरेत् ॥
> षड्रात्रञ्च त्रिरात्रञ्च वर्णयोरनुपूर्व्वशः ।

षट्त्रिंशन्मते,—

> दीपोच्छिष्टन्तु यत्तैलं रात्रौ रथ्याहृतञ्च यत् ।
> अभ्यङ्गस्य तथोच्छिष्टं भुक्त्वा नक्तेन शुध्यति ॥

वृद्धशातातपः,—

> पीतशेषन्तु यत्तोयं भाजने मुखनिःसृतम् ।
> अभोज्यं तद्द्विजातीनां भुक्त्वा चान्द्रायणञ्चरेत् ॥

सुमन्तुः,—

क्षुतवचोऽभिहतं श्वभिराघ्रातं प्रेक्षितं चान्नमभोज्यमन्यत्र हिरण्योदकैः स्पृष्टात्, यस्यान्नस्य निकटे क्षुतं कृतं यस्य वा निकटे वचनमुच्चारितं तत्क्षुतवचोऽभिहतं, प्रेक्षितं श्वभिरेव, एतेषूपघातेषु-हिरण्यमिश्रजलसेकः शोधकः, तदकृत्वा भोजने गायत्र्यष्टोत्तर-शतजपः ।

मनुः,—

> मत्तक्रुद्धातुराणां च न भुञ्जीत कदाचन ।
> केशकीटावपन्नञ्च पदा स्पृष्टं च कामतः ॥
> भ्रूणघ्ना'वेक्षितञ्चैव संस्पृष्टञ्चाप्युदक्यया ।
> पतत्रिणावलीढञ्च शुना संस्पृष्टमेव च ॥

(१) भ्रताघ्ना- ।

याज्ञवल्क्यः,—

उदक्या स्पृष्टसंघुष्टपर्य्यायान्नञ्च वर्जयेत्, संघुष्टं क्षुधार्थिनः के सन्ति मद्गृहे भुज्यतामिति घोषणेन दत्तं, पर्य्यायान्नं,

ब्राह्मणानां ददच्छूद्रः शूद्रान्नं ब्राह्मणो ददत् इत्यादिरूपम् ।

तथा,—

अभोज्यं ब्राह्मणस्यान्नं वृषलेन निमन्त्रितम् ।
तथैव वृषलस्यान्नं ब्राह्मणेन निमन्त्रितम् ॥
विड़ालकाकाखूच्छिष्टं जग्ध्वाऽश्वनकुलस्य च ।
केशकीटावपन्नञ्च पिबेद्ब्राह्मीं सुवर्चलाम् ॥

काश्यपः,—

गर्द्दभोष्ट्राश्वोच्छिष्टभोजने त्रिरात्रम् ।

विष्णुः,—

गोरुच्छिष्टप्राशने दिनमेकं उपोषितः, पञ्चगव्यं पिबेत् ।

शङ्खः,—

काकोच्छिष्टं गवाघ्रातं भुक्त्वा पक्षं व्रती भवेत् ।

उशनाः,—

विड्वराहगृध्रश्येनकुक्कुटभासकंकवकमृगाणामुच्छिष्टप्राशने सान्तपनकृच्छ्रम् ।

यमः,—

काककुक्कुटसंस्पृष्टमभोज्यम् ।

आपस्तम्बः,—

अप्रयतोपहृतमन्नस्य 'प्रयत तत्त्वभोज्यम् ।

अन्नावधिश्रयणादिना शुद्धं कृत्वा भोज्यं भवति, एतच्चाप्रयतत्वात् ब्राह्मणादिस्पृष्टविषयम्।

तथा,—

प्रयतेन शूद्रेण स्पृष्टमभोज्यं, सर्व्वथाऽभोज्यमित्यर्थः।

तथा,—

अनर्हद्भिः समानपंक्त्यां, अभोज्यमित्यर्थः।

भुञ्जानेषु यदि कश्चिदुत्थायान्नं प्रयच्छेत्।

एकपंक्तौ कश्चित्स्वान्नं यदि भृत्यादिभ्यो दद्यादितरेषामन्नमभोज्यम्।

तथा,—

भुञ्जानेष्वर्द्ध भुक्तेषु कश्चिदाचामति तदन्येषामन्नमभोज्यम्।

तथा,—

कुत्सयित्वा यदन्यदत्तं, विषं भुंक्ष्वेत्यादिना इत्यर्थः।

तथा,—

मनुष्यैरवघ्रातं, प्रयत्नादित्यर्थः।

तथा,—

अमेध्यैरवघ्रातं, गर्द्दभादिभिरित्यर्थः।

न रजस्वलया दत्तं न पुंश्चल्या न क्रुद्धया, न मलवाससा नापरया द्वारा यद्दत्तं, न द्विःपक्वं, मलवाससाऽमेध्यवस्त्रया परस्वामिकमप्यन्नं, रजस्वलादिभिर्दत्तमन्नं न भोज्यमित्यर्थः, अपरद्वारं

(१) अत्र प्रयतं।

अतिथिभोजनमुख्यद्वारं विना द्वारान्तरं, द्विःपक्वं सिद्धमेवान्नं यदि पुनः पच्यते दोषत्यागाय, यत्तु धान्यं स्विन्नं तच्छोषणेन धान्यमेव जातं, तस्य स्विन्नता धान्ये गुणसम्पादनार्था, न त्वोदनार्था । तेन तण्डुलदशायामेवमन्नार्थं पाक इति द्विःपक्वता ।

एवम्,—

मरीचहरिद्रादावपि,[1] अतएवावर्त्तितदुग्धस्य[2] पुनः कालान्तरेण पाके द्विःपक्वता, पूर्व्वपाकेन दुग्धस्य सिद्धत्वात्, आमिक्षादशायां तस्य पुनः पाकेऽपि पूर्व्वपाकस्यामिक्षासाधकत्वाभावान्न द्विःपक्वता, एवं तद्विकाराणां लड्डुकादिसाधकत्वाभावान्न लड्डुकादेर्द्विःपक्वता ।

गौतमः,—

वृथान्नाचमनोत्थानव्यपेतानि उत्सृष्टमस्वामिकं, वृथान्नं स्वार्थमात्रपक्वं, उत्थानव्यपेतं यत्रार्द्धभुक्ते उत्थानं एवं यत्राचमनं तदूर्द्धमन्नमभोज्यम् ।

आपस्तम्बः,—

नापणीयमन्नमश्नीयात्तथाऽन्यरसानाममांसमधुलवणानि परिहाय ।

शङ्खलिखितौ, भीतरुदितक्रन्दितक्षुतावधूतान्नानि वर्ज्जयेत्, क्षुतञ्छिक्कितवान्, अवधूतः साधुत्यक्तः ।

पराशरः,—

एकपंक्त्युपविष्टानां विप्राणां सहभोजने ।
यद्येकोऽपि त्यजेत्पात्रं शेषमन्नं न भोजयेत् ॥

(१) -हरिद्रादेरपि । (२) आवर्त्तितस्य ।

अत्रिः,—

यस्तु भुंक्ते द्विजः पंक्त्यामुच्छिष्टायां कदाचन ।

अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति ॥

ब्राह्मे,—

शूद्रभुक्तावशिष्टं तु नाद्याद्भाण्डस्थितं त्वपि ।

भिन्नभाण्डगतं तद्वन्मुखवातोपशामितम् ॥

उच्छ्रुअपक्कमस्विष्टमवलित(१)मसंस्कृतम् ।

आपस्तम्बः,—

ऋणिकः प्रत्युपविष्टाय चानश्नन् परिवेशयते तावन्तं कालं, उत्तमर्णो यदि धनग्रहणार्थमनश्नन्नुपविशति तावत्कालं द्वयोरन्नमभोज्यम् ।

भविष्ये,—

उपक्षेपणधर्म्मेण शूद्रान्नं यः पचेन्नरः ।

अभोज्यं तद्भवेदन्नं स च शूद्रः पुरोहितः ॥

उपक्षेपणधर्म्मः शूद्रसम्बन्धे सत्येव ब्राह्मणसद्मनि पाकः शूद्रस्य कार्य्यार्थम् ।

ब्राह्मे,—

का क्रियास्मिन्निदं कस्य दीयते किमनेन वा ।

इत्युक्त्वा दीयते यच्च तन्नाद्यं विस्मयान्वितम् ॥

---

(१) -मवलीढ- । ॥

भक्ष्यन्त्वभक्ष्यवाक्येन दत्तं नाद्यं कथञ्चन ।

न भुञ्ज्येतेत्यनुवृत्तौ मनुः,—

उग्रान्नं सूतिकान्नं च पर्याचान्तमनिर्दशम् ।

पर्याचान्तं यस्यान्नस्य सन्निधावाचमनं कृतम् ॥

यमः,—

प्रेतान्नं प्रेतमुद्दिश्य शुचिनाऽपि दत्तम् ।

सूतिकामुद्दिश्य पक्वं सूतिकान्नम् ।

शङ्खः,—

ऋजीषपक्वं भुक्त्वा च त्रिरात्रं तु व्रती भवेत्, तल्लक्षणं पूर्व्वमुक्तम् ।

धौम्यः,—

ब्रह्मौदने च सोमे च सीमन्तोन्नयने यथा ।

जातश्राद्धे नवश्राद्धे भुक्त्वा चान्द्रायणञ्चरेत् ॥

ब्रह्मौदनमाधानाङ्गभूतचातुःप्राश्यम् ।

अत्र चत्वार ऋत्विजः प्राश्नन्तीति विधिः, सोमेऽग्निषोमीय-पर्य्यन्तं, अग्नीषोमीयसंस्थायां यजमानस्य गृहे भोक्तव्यमिति श्रुतेः, क्रीतराजको भोज्यान्न इत्याथर्व्वणश्रुतिरापद्विषया, क्रीतो राजा सोमो येनेति समासः ।

आपस्तम्बः,—

यज्ञार्थे वा निर्दिष्टे भोक्तव्यम् ।

यज्ञार्थं यावद्द्रव्यं अपेक्षितं, तावद्द्रव्ये पृथक् कृतेऽवशिष्टद्रोक्षि-तान्नं भोज्यमित्यर्थः ।

एतदप्यापद्विषयमेव ।

भरद्वाजः,—

अतिथौ तिष्ठति द्वारि ह्यपः प्राश्नन्ति ये द्विजाः ।

रुधिरं तद्भवेद्वारि पीत्वा चान्द्रायणञ्चरेत् ।

एवं श्राद्धद्रव्यमपि क्रियादुष्टम् ।

विष्णुः,—

प्राजापत्यं नवश्राद्धे पादोनञ्चाद्यमासिके ।

त्रैपक्षिके तदर्द्धं तु पादोनञ्च द्विमासिके ॥

षट्त्रिंशन्मते,—

पादोनं कृच्छ्रमुद्दिष्टं षण्मासे तु तथाब्दिके ।

त्रिरात्रञ्चान्यमासेषु प्रत्यब्दे चेदहः स्मृतम् ॥

भरद्वाजः,—

भुक्त्वा तु पार्व्वणश्राद्धे प्राणायामान् षडाचरेत् ।

उपवासस्त्रिमासादिवत्सरान्ते प्रकीर्त्तितः ॥

प्राणायामत्रयं ब्रह्मावहोरात्रं सपिण्डने ।

द्विगुणं क्षत्रियश्राद्धे त्रिगुणं वैश्यभोजने ॥

साक्षाच्चतुर्गुणं ह्येतत् स्मृतं शूद्रस्य भोजने ।

उशनाः,—

दशकृत्वः पिवेदापो गायत्र्या श्राद्धभुक्द्विजः ।

ततः सन्ध्यामुपासीत शुध्येत तदनन्तरं इति अनुक्तप्रायश्चित्तश्राद्धविषयम् ।

षट्त्रिंशन्मते,—

आमश्राद्धे भवेदर्द्धं प्राजापत्यञ्च सर्व्वदा ।

प्राजापत्यपदमुपलक्षणम्।

पक्षश्राद्धे यत्प्रायश्चित्तमुक्तं तत्स्थानापन्नामश्राद्धे तत्स्यादित्यर्थः।

ब्राह्मे,—

योगः पितृत्रयोदश्यां कुञ्जरच्छायसंज्ञकः।
भवेन्मघासंस्थिते च शशिन्यर्के करोस्थिते॥
सूतके मृतके चैव ग्रस्तयोश्चन्द्रसूर्य्ययोः।
छायायां कुञ्जरस्याथ भुक्त्वा चान्द्रायणञ्चरेत्॥

पितृपदेन मघानक्षत्रं, अत्र पूर्व्वनिर्द्दिष्टगजछायायोगे चन्द्रसूर्य्योपरागे च यत् श्राद्धं तत्राभोजनमित्यर्थः, पूर्व्वयोगनिर्द्देशस्यानन्यार्थत्वात्, छायायां कुञ्जरस्येति, गवामयनादिपदवदसमस्तस्यापि कुञ्जरछायेति एकं योगनाम, व्यत्ययनिर्द्देशस्तु छान्दसः।

अङ्गिराः,—

जन्मप्रभृति संस्कारे वालस्यान्नस्य भोजने।
असपिण्डैर्न भोक्तव्यं श्मशानान्ते विशेषतः॥

अन्नभोजने कर्म्माङ्गब्राह्मणभोजने, सपिण्डानां भोजने न दोषः।

श्मशानान्ते पितृमेधकर्मणि।

तथा,—

निवृत्ते चूड़होमे तु प्राङ्नामकरणात्ततः।

चरेत्सान्तपनं भुक्त्वा जातकर्म्मणि चैव हि।
ततोऽन्यत्र तु संस्कारे उपवासः प्रकीर्त्तितः॥'

मनुः,—

नाश्रोत्रियतते यज्ञे ग्रामयाजितते तथा।
स्त्रिया क्लीवेन च हुते भुञ्जीत ब्राह्मणः क्वचित्॥

अश्रोत्रियतते अश्रोत्रियर्त्विजे, एवं ग्रामयाजकर्त्विजे स्त्रिया क्लीवेन च वैश्वदेवे कृते तद्गृहे न भोक्तव्यं, समासमाभ्यां विषमं समञ्च दीयमानमभोज्यम्।

हारीतः,—

परमान्नकृशरशाललीमांससंयावापूपान्नं पाचयेदात्मार्थे, शलली मुद्गादिचूर्णसिद्धा सतिला स्नेहपक्वा, संयावो घृतक्षीर-चूर्णसिद्ध-उत्कलिकेति सिद्धः।

अत्र याज्ञवल्क्योक्तमुपवासत्रयं स्मृतम्।

श्रुतिः—

न ह वै स्नात्वा भिक्षेत, एतदनापदि।

अनापदि चरेद्वस्तुसिद्धां भिक्षां गृहे वसन्निति वचनात्।

यमः,—

एकाकी मृष्टमश्नाति वञ्चयित्वा सुहृत्सुतान्।
रौरवे नरके घोरे त्ववशः पात्यते नरः॥

तत्र विष्णूक्तकृच्छ्रपादः।

सम्वर्त्तः,—

समुत्पन्ने द्विजस्नाने भुञ्जीताथ पिवेत्तथा ।
गायत्र्यष्टसहस्रञ्च जपेत्स्नात्वा समाहितः ॥

स्नाने स्नाननिमित्तेऽभ्यङ्गादावित्यभियुक्ताः ।

शङ्खः,—

नीलीरक्तं परिधाय भुक्त्वा स्नानार्हकस्तथा ।
त्रिरात्रन्तु व्रतं कुर्य्याच्छित्त्वा गुल्मलतास्तथा ॥

जलादिपीतशेषपानमपि क्रियादुष्टं, अत्र चारणपूर्व्वकं पानं, तत्र प्रमाणञ्च लेखनीयम् ।

इति क्रियादुष्टान्यभक्ष्याणि,—

## अथ कालदुष्टानि ।

भविष्ये,—

कालदुष्टं तु विज्ञेयं ह्यस्तनं चिरसंस्थितम् ।
दधिभक्ष्यविकारांश्च मधुवर्ज्जं तदिष्यते ॥

ह्यस्तनमेकरात्रान्तरितं अन्नादिकं तथा चिरसंस्थितं अनेक दिनान्तरितं, तथा भक्ष्यविकारा विकृतभक्ष्याणीत्यर्थः, कालदुष्टानीत्यर्थः, एव पर्य्युषितदोषरहितमपि दध्यादिकं विकृतरसगन्धं सन्न भक्ष्यमित्यर्थः, मधु पुनर्न वर्ज्जनीयमित्यर्थः ।

शङ्खः,—

पर्य्युषितं भुक्त्वा त्रिरात्रं व्रती भवेत्, तत्रापवादः,

तथाच—

याज्ञवल्क्यः,—

अन्नं पर्य्युषितं भोज्यं स्नेहाक्तं चिरसंस्थितम् ।
अस्नेहा अपि गोधूमयवगोरसविक्रियाः ॥

यमः,—

अपूपाश्च करम्भश्च धाना वटकसक्थवः ।
शाकं मांसं च पूपं च सूपं कृशरमेव च ॥
यवागुं पायसं चैव यच्चान्यत्स्नेहसंयुतम् ।
सर्व्वं पर्युषितं भोज्यं शुक्तं च परिवर्जयेत् ॥

अपूपा गोधूमपिष्टकविशेषाः, करम्भो दधिमिश्रसक्थुः धाना-भृष्टयवा व्रीहयो वा, वटकं स्वनाम्ना प्रसिद्धं, सक्थवो भृष्टयव-चूर्णानि धान्यचूर्णानि च, उभयत्र प्रसिद्धेः, पूपाः पुलिका इति प्रसिद्धाः, कृशरस्तिलमुद्गाभ्यां सह सिद्ध ओदनः, पायसं परमान्नं, मन्यस्य सक्थुविकारात्सक्थुग्रहणेन ग्रहणम् ।

चरके,—

सक्थवो घृतसमिश्राः शीतवारिपरिप्लुताः ।
नातिसान्द्रा न चात्यच्छा मन्यमित्यभिधीयते ॥

एतान्येव पर्य्युषितत्वेन रसान्तरमापद्यन्ते यदि तदा न भक्ष्याणी-त्युक्तं शुक्तं परिवर्जयेदिति दिनान्तरे प्रायेणान्यरसापत्तेः शुक्तग्रहणं रसान्तरमात्रत्वेऽप्यभक्ष्यत्वात् ।

शङ्खलिखितौ,—

न पर्य्युषितमन्यत्र रागांशुक आड़वदधिगुड़गोधूमयवपिष्टक-

विकारेभ्यः, रागांशुका मुद्गदाड़िममांसाद्या अंशुकगालिताः प्रलेह्याः, षाड़वाः स्वाद्वम्लकटुप्रायवस्त्वाद्याः प्रलेह्या एव ।

आपस्तम्बः,—

पर्य्युषितं वर्ज्यमुक्ता, फाणितपृथकृतण्डुलशाकौषधिवनस्पतिफलमूलवर्जं, फाणितं पाकजन्य इक्षुरसविकारः, पृथकृतण्डुलाभृष्टनिष्पादितास्विपिटका इति प्रसिद्धाः, चुड़ा इति प्रसिद्धाः ।

पर्य्युषितापवादे मनुः, हविः शेषं च सर्व्वतः, एतच्च रात्र्यन्तरितहविःशेषादि ।

गौतमः,—

पर्य्युषितमभक्ष्यमांसमधुशाकादिवर्जं, पर्य्युषितमभक्ष्यमित्यर्थः । न भक्षयेदित्यनुवृत्तौ हारीतः, न पर्य्युषितमन्यत्र गुड़पिष्टकगौर[1]सर्षपनारिकेलस्नेहादिग्रहणम् ।

न भक्षयेदित्यनुवृत्तौ सुमन्तुः, पर्य्युषितं पुनः सिद्धं भुक्त्वा तु त्रिदमाचरेत्, यत्पक्वं पुनः पच्यते, यत्पुनः कदलीफलादि दिनान्तरे पुनः पच्यते तस्य द्वितीय एव दिने पाकनिर्वाहात् न द्विःपक्वता ।

एवं यदामिक्षापिष्टकादिकं दिनान्तरे गुड़ादिना संस्क्रियते मांसादि वा प्रथमदिनेऽसिद्धावस्थपाकं दिनान्तरे पच्यते तस्य द्वितीय एव दिने पाकस्य संपूर्णत्वात् न द्विःपक्वता, एतच्च यद्भक्ष्यत्वेनाभ्यनुज्ञातं पर्य्युषितं तदपि द्विःपक्वमभक्ष्यमित्युक्तं,

---

(१) तैलाद्याधिक्यात् तैलादीत्यादिग्रन्थेन सर्षप. ।

चातुर्मास्ये निषिद्धानि शिष्टाः पठन्ति।

कलिङ्गानि पटोलानि वृन्ताकं सन्धितानि च।
निष्पावान् राजमाषांश्च सुप्ते देवे तु भक्षयन्॥
सप्तजन्मार्जितं पुण्यं दह्यते नात्र संशयः।

कलिङ्गानि चक्रणाफलानि, पश्चिमे कलिङ्गपदेन प्रसिद्धेः, अस्याभक्ष्यत्वेऽपि चातुर्मास्ये दोषभूयस्त्वम्।

चातुर्मास्ये,—

पटोलं मूलकं चैव वार्त्ताकुं च न भक्षयेत्।
यानि कानि च पापानि ब्रह्महत्यादिकानि च॥

पुनः स्कान्दे,—

अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे।
नभःकृष्णाष्टमीं प्राप्य भुञ्जते ये द्विजाधमाः॥

तथा,—

त्रैलोक्यसम्भवं पापं भुञ्जन्त्येव न संशयः॥

तथा,—

अष्टम्यां च चतुर्दश्यां दिवा भुक्तौन्दवं चरेत्।
एकादश्यां दिवा रात्रौ नक्तं चैवान्यपर्वसु॥
अन्यपर्वाणि संक्रान्तिपौर्णमास्यमावास्याः।

तत्र संक्रमे संक्रमोपलक्षिताहोरात्रे रात्रिभोजननिषेध इति सम्प्रदायविदः, एवं तैलाभ्यङ्गमांसवर्जनकामोपवासादेरपि संक्रा-

विकारेभ्यः, रागांशुका मुद्गदाड़िममांसाद्या अंशुकगालिताः प्रलेह्याः, षाड़वाः स्वाद्वम्लकटुप्रायवस्त्वाद्याः प्रलेह्या एव।

आपस्तम्बः,—

पर्य्युषितं वर्ज्यमुक्ता, फाणितपृथक्तण्डुलशाकौषधिवनस्पति-फलमूलवर्जं, फाणितं पाकजन्य इक्षुरसविकारः, पृथक्तण्डुला-भृष्टनिष्पादितास्विपिटका इति प्रसिद्धाः, चुड़ा इति प्रसिद्धाः।

पर्य्युषितापवादे मनुः, हविः शेषं च सर्व्वतः, एतच्च रात्र्यन्त-रितहविःशेषादि।

गौतमः,—

पर्युषितमभक्ष्यमांसमधुशाकादिवर्जं, पर्युषितमभक्ष्यमित्यर्थः। न भक्षयेदित्यनुवृत्तौ हारीतः, न पर्य्युषितमन्यत्र गुड़पिष्टक-गौर[1]सर्षपनारिकेलस्नेहादिग्रहणम्।

न भक्षयेदित्यनुवृत्तौ सुमन्तुः, पर्य्युषितं पुनः सिद्धं भुक्ता तु त्रिदमाचरेत्, यत्पक्कं पुनः पच्यते, यत्पुनः कदलीफलादि दिनान्तरे पुनः पच्यते तस्य द्वितीय एव दिने पाकनिर्वाहात् न द्विःपक्कता।

एवं यदामिक्षापिष्टकादिकं दिनान्तरे गुड़ादिना संस्क्रियते मांसादि वा प्रथमदिनेऽसिद्धावस्थपाकं दिनान्तरे पच्यते तस्य द्वितीय एव दिने पाकस्य संपूर्णत्वात् न द्विःपक्कता, एतच्च यद्भक्ष्य-त्वेनाभ्यनुज्ञातं पर्य्युषितं तदपि द्विःपक्कमभक्ष्यमित्युक्तं,

---

(१) तैलाद्याधिक्यात् तैलादीत्यादिग्रन्थेन सर्षप.।

चातुर्मास्ये निषिद्धानि शिष्टाः पठन्ति।

कलिङ्गानि पटोलानि वृन्ताकं सन्धितानि च।
निष्पावान् राजमाषांश्च सुप्ते देवे तु भक्षयन्॥
सप्तजन्मार्जितं पुण्यं दह्यते नात्र संशयः।

कलिङ्गानि चक्षणाफलानि, पश्चिमे कलिङ्गपदेन प्रसिद्धेः, अस्याभक्ष्यत्वेऽपि चातुर्मास्ये दोषभूयस्त्वम्।

चातुर्मास्ये,—

पटोलं मूलकं चैव वार्त्ताकुं च न भक्षयेत्।
यानि कानि च पापानि ब्रह्महत्यादिकानि च॥

पुनः स्कान्दे,—

अन्नमाश्रित्य तिष्ठन्ति संप्राप्ते हरिवासरे।
नभःकृष्णाष्टमीं प्राप्य भुञ्जते ये द्विजाधमाः॥

तथा,—

त्रैलोक्यसम्भवं पापं भुञ्जन्त्येव न संशयः॥

तथा,—

अष्टम्यां च चतुर्दश्यां दिवा भुक्तौन्दवं चरेत्।
एकादश्यां दिवा रात्रौ नक्तं चैवान्यपर्वसु॥
अन्यपर्वाणि संक्रान्तिपौर्णमास्यमावास्याः।

तत्र संक्रमे संक्रमोपलक्षिताहोरात्रे रात्रिभोजननिषेध इति सम्प्रदायविदः, एवं तैलाभ्यङ्गमांसवर्जनकामोपवासादेरपि संक्रा-

न्युपलक्षिताहोरात्रं कालः, अन्यत्र तु तिथ्यवच्छिन्नरात्रिदिवस-ग्रहणं, एवं पर्वसु मांसमपि कालदुष्टम् ।

वामनपुराणे,—

जयासु मांसं, तृतीयाष्टमीत्रयोदश्यो जया ।

तथा,—

कुजे मांसं भौमवारे च, तथा, "मूले मृगे भद्रपदे च मांसं" एवमादिषु मांसभोजने स्नातकव्रतलोपादुपवासः, एवं ग्रहणात् पूर्वं तत्काले ग्रस्तास्तमने च सूर्य्यचन्द्रदर्शनपर्य्यन्तं नाश्नीयात्, एवममावस्यायां परान्नं नाश्नीयात् तद्रात्रौ च नाश्नीयात्, इत्यादि सर्वं कालदुष्टं, तत्र प्रमाणं तत्प्रकरणे लेख्यम् ।

विष्णुः,—

न रात्रौ तिलसम्बन्धः, न दधिसक्थुकोविदारवटपिप्पलशाकम् ।

देवलः,—

दिवा दधित्यधानासु रात्रौ च दधिसक्थुषु ।
श्लेष्मातके तथाऽलक्ष्मीर्नित्यमेव कृतालया ॥

ब्राह्मे,—

अपि प्रयाणसमये रात्रौ न प्राशयेद्दधि ।
मधुपर्कप्रदानं तु वर्जयित्वा तु कामतः ॥

आपस्तम्बः,—

दास्या वा नक्तमाहृतं, अभोज्यमित्यर्थः ।

अत्र न च रात्रौ प्रेष्याहृतमिति गौतमवचनमपि दासीपरम् ।

तथा रात्रौ रथ्याहृतमपि न भोज्यं, अनुक्तप्रायश्चित्तेषु प्राणायाम-शतं, गायत्र्यष्टसहस्रं वा, इति कालदुष्टान्यभक्ष्याणि ।

---

## अथाश्रयदुष्टानि ।

तानि यद्यपि भविष्ये विप्रेष्व नोक्तानि तथापि जातिक्रिया-रसामेध्यसंसर्गभावस्वभावदोषरहितानि द्रव्यस्वामिदोषेण दुष्टानि तानि गृह्यन्ते ।

आपस्तम्बः,—

त्रयाणां वर्णानां क्षत्रियप्रभृतीनां समावृत्तेन भोक्तव्यम् । प्रकृत्या ब्राह्मणस्य भोक्तव्यं, कारणादभोज्य' यत्राप्रायश्चित्तं कर्म्म सेवते, प्रकृत्या भोज्यमित्यस्य व्याख्या यत्राप्रायश्चित्तं कर्म्म प्रायश्चित्त-व्यतिरिक्तं नित्यनैमित्तिकं कर्म्म सेवते ।

ब्राह्मे,—

राज्ञां पर्वणि वैश्यानामश्नीयान्मङ्गले गवामिति राजान्नभोजना-नुज्ञा पर्वविषया वैश्यस्य गोमङ्गलविषया ।

पुनर्ब्राह्मे,—

गोभूमिरत्नलाभार्थं स शूद्रस्य गृहे सदेति प्रीतिदायेन गवादिलाभकामनया शूद्रस्यान्नं ग्राह्यम् ।

मनुः,—

नाद्याच्छूद्रस्य पक्वान्नं विद्वानश्राद्धिनो द्विजः ।
आददीताममेवास्मादवृत्तावेकरात्रकम् ॥

अश्राद्धिनो नित्यश्राद्धमकुर्व्वतः, अश्राद्धिन इत्युद्देश्यविशेषणत्वा-दविवक्षितं, श्राद्धिनोऽपि पक्वान्नमनापद्यग्राह्यमेव।

अवृत्तावापदि,—

यमहारीतजमदग्निपैठीनसयः,—

ब्राह्मणान्नं क्षत्रियान्नं वैश्यान्नं शौद्रमेव च।
तां तां योनिमवाप्नोति भुक्तान्नं यस्य वै मृतः॥

शूद्रान्नं भुक्त्वा मरणे हारीतः,—

स वै खरत्वमुष्ट्रत्वमवशत्वञ्चाधिगच्छति।

वशिष्ठः,—

शूद्रान्नपरिपुष्टाङ्गो ह्यधीयानोऽपि नित्यशः।
जुह्वन् वापि जपन् वापि गतिं पूर्वां न गच्छति॥
शूद्रान्नेन तु भुक्तेन मैथुनं योऽधिगच्छति।
यस्यान्नं तस्य ते पुत्रा न च स्वर्गार्हको भवेत्॥

अङ्गिराः,—

षण्मासान् यो द्विजो भुङ्क्ते शूद्रस्यान्नं विगर्हितम्।
स च जीवन् भवेच्छूद्रो मृतः श्वा चाभिजायते॥

तस्मात् प्रशस्तशूद्रस्याप्यामान्नभोजनं मरणसन्निधाने वर्ज्यं एवं षण्मासपर्य्यन्तं भोजनमपि।

हारीतः,—

कन्दुपक्वं स्नेहपक्वं पायसं दधिसक्थवः।
एतान्यशूद्रान्नभुजो भोज्यानि मनुरब्रवीत्॥

कन्दुपदेनाग्निस्थानवाचिनाग्निर्लक्ष्यते, तेन वाह्यजलनिरपेक्षयाग्निमात्रेण पक्वं लाजादि कन्दुपक्वमुच्यते, एवं वाह्यजलनैरपेक्ष्येण केवलघृतादिपक्वं स्नेहपक्वमुच्यते, पायसं पयोविकारो न परमान्नम्।

तथाचाङ्गिराः,—

गोरसञ्चैव सक्तूंश्च तैलं पिण्याकमेव च।

अपूपान् भक्षयेच्छूद्रादयच्चान्यत् पयसा कृतम्॥

अपूपा गोधूमविकाराः, एव शास्त्रसत्त्वेऽपि गोधूमविकारस्य जलनिरपेक्षगोरसमात्रपक्वस्य कन्दुपक्ववच्छूद्रगृहाद्ग्राह्यत्वोक्तावपि समाचारविरोधाद्वर्जनं तद्भक्षणे विगानञ्च, एवं लवणवाह्यजलनिरपेक्षस्नेहपक्वमूलकन्दादेरपि भक्षणे अस्मद्देशे विगानं स्नेहपक्वफलमूलकन्दादौ वाह्यजलभावेऽपि पाककाले तन्निःसृतजलस्य [1]सत्वाभावात्, अन्येषां गोरसादीनां भक्षणं निर्विगानमेव।

एवञ्च,—

गोरसे कन्दुशालायां तैलयन्त्रेषु यन्त्रयोः।

अमीमांसानि शौचानि स्त्रीषु राजकुलेषु च॥

इति शातातपवचनेऽशौचापवादोऽपि यथाचारं गृह्यते, मरीचादीनां खिन्नानां अपि शूद्रस्पर्शेऽपि परिग्रहस्य समाचारैकमूलपाकदोषरहितत्वेऽप्यन्नत्वान्मरणकाले वर्जनं, तस्मात्खिन्नतण्डुलादीनां मरणकाले वर्जनम्।

---

(१) सत्वात्।

यथा यतस्ततोऽप्यापः शुचिं यान्ति नदीं गताम् ।

शूद्राद्विप्रगृहेऽप्यन्नं प्रविष्टं च तथा शुचि, इत्यङ्गिरोवचनं शूद्राप्रतिग्रहलब्धविषयम् ।

तथा च पराशरः—

तावद्भवति शूद्रान्नं यावन्न स्पृशति द्विजः ।
द्विजातिकरसंलग्नं सर्वं तन्न विरुध्यते ॥

यमः,—

यथा जलं निर्गमनेऽप्यपेयं नदीगतं तत् पुनरेव पेयम् ।
तथाऽन्नपानं विधिपूर्वमागतं द्विजातिहस्तान्तरितं विशुद्धम् ॥

एतेन ब्राह्मणं भोजयामीति बुद्ध्या यदि शूद्र आमान्नं ददाति तद्यदि पक्त्वा ब्राह्मणो भुङ्क्ते तदा शूद्रान्नभोजनं तदेव मरणकाले वर्ज्यं, आमद्रव्यविधिना चेद्ददाति तद्यदि पक्त्वा भुङ्क्ते तदा प्रतिग्रहदोष एव न तु शूद्रान्नभोजित्वदोषः, प्रतिग्रहलब्धं भुक्त्वा मरणेऽपि न शूद्रजन्मलाभ इति लक्ष्मीधरस्वरसः, प्रशस्तशूद्रा निन्द्यशूद्रा अप्रतिग्राह्यान्नाश्च प्रतिग्रहप्रकरणे वक्ष्यन्ते ।

यो गृहीत्वा विवाहाग्निं गृहस्थ इति मन्यते ।
अन्नं तस्य न भोक्तव्यं वृथापाको हि स स्मृतः ॥

तदन्नाशने तु,—

प्राणायामं त्रिरभ्यस्य घृतं प्राश्य विशुध्यतीति च ।

तथा सूतकाद्यशौचान्नादि नाश्नीयात्, एतत्प्रमाणमशौचप्रकरणे लेख्यम् ।

अङ्गिराः,—

अन्त्यावसायिनामन्नमश्नीयाद्यदि मानवः ।
यतिचान्द्रायणं कुर्याच्चान्द्रायणमथापि वा ॥
[1]चण्डालश्वपचः क्षत्ता सूतवैदेहकौ तथा ।
मागधीयोगवौ चैव सर्वेऽप्यन्त्यावसायिनः ॥

विष्णुः,—

चण्डालान्नं भुक्त्वा त्रिरात्रं सिद्धं भुक्त्वा परान्नम् ।

वशिष्ठे पुनरुपनयनमधिकं,

पैठीनसिः,—

परिवित्तिपरिविदानविद्धप्रजनानां रुधिरमन्नं, अभोज्यमित्यर्थः ।

बौधायनः,—

अवलिप्तस्य मूर्खस्य दुर्वृत्तस्य च दुर्मतेः ।
अन्नस्य अश्रद्दधानस्य यो भुङ्क्ते ब्रह्महा तु सः ।

शङ्खलिखितौ,—

परपाकनिवृत्तस्य परपाकरतस्य च ।
अपरस्य च भुक्त्वाऽन्नं द्विजश्चान्द्रायणञ्चरेत् ॥
गृही चाग्निं समारोप्य पञ्चयज्ञान्न कारयेत् ।
परपाकनिवृत्तोऽसौ मुनिभिः परिकीर्त्तितः ॥

(१) चण्डालश्वपच,— ।

पञ्च यज्ञान् स्वयं कृत्वा परान्नमुपजीवति ।
सततं प्रातरुत्थाय परपाकरतस्तु सः ॥
गृहस्थधर्मवृत्तोऽसौ ददाति परिवर्जितः ।
ऋषिभिर्धर्मतत्त्वज्ञैरपरः परिकीर्त्तितः ॥

याज्ञवल्क्यः,—

परपाकरुचिर्न स्यादनिन्द्या मन्त्रणादृते ।

तत्रापवादः,—

गुर्वन्नं मातुलान्नं च श्वशुरान्नं तथैव च ।
पितुः पुत्रस्य चैकान्नं न परान्नमिति स्मृतम् ॥

यत्तु बौधायनः,—

श्वशुरान्नं तु यो भुङ्क्ते स भुङ्क्ते पृथिवीमलमिति ।
तद्गर्हितश्वशुरधनोपजीवनपरम् ।

श्वशुरान्नस्य वृत्तिः स्याद्विप्रस्तैन्यं करोति य इति महाभारत- वचनात् ।

एतेनासक्तिर्न कार्या ।

याज्ञवल्क्यः,—

यतिश्च ब्रह्मचारी च पक्वान्नस्वामिनावुभौ ।
तयोरन्नं न भोक्तव्यं भुक्त्वा चान्द्रायणञ्चरेत् ॥

भरद्वाजः,—

पक्षे वा यदि वा मासे यस्य नाश्नन्ति देवताः ।
भुक्त्वा दुरात्मनस्तस्य द्विजश्चान्द्रायणञ्चरेत् ॥

आदित्यपुराणे,—

विष्णुं जामातरं मन्ये तस्य मन्युं न कारयेत्।
अप्रजायां दुहितरि नाश्नीयात्तस्य वै गृहे॥
ब्राह्मदेये विशेषेण दैवतोढे सदैव हि।
गान्धर्वे राक्षसे चैव कुर्य्याच्चैव समागमम्॥

अत्र दैवब्राह्मविधिना दत्तायाः सुतायाः श्वशुरसम्बन्धेन भर्तृ-सम्बन्धेन वा यद्गृहं तत्र तत्स्वामिकस्यान्नस्य भोजने महान् दोषः, आर्षादिविवाहेऽपीयान् दोषः, गान्धर्वराक्षसयोर्न दोषः, दुहितरि मृतायां तद्गृहे भोजने न दोषः, प्रजापदस्यापत्यमात्र-वाचकत्वेऽपि यजमानप्रजासंख्यत्र्यम्बकहविःकरम्भपात्रादौ पुत्रा-पत्यग्रहणादिहापि तद्ग्रहणं, दुहितरि सत्यां जामातृनाशेऽपि पितुर्गृहे न भोजनं, तद्गृहे परकीयान्नभोजने न दोषः।

आपस्तम्बः—

बलाद्दासीकृता ये च म्लेच्छचण्डालदस्युभिः।
अशुभङ्कारिताः कर्म गवादिप्राणिहिंसनम्॥
उच्छिष्टमार्ज्जनञ्चैव तथोच्छिष्टस्य भोजनम्।
खरोष्ट्रविड्वराहाणामामिषस्य च भोजनम्॥
तत् स्त्रीणाञ्च तथासङ्गस्ताभिश्च सहभोजनम्।
मासोषिते द्विजातौ तु प्राजापत्यं विशोधनम्॥
चान्द्रायणं त्वाहिताग्नेः पराकस्त्वथवा भवेत्।
चान्द्रायणं पराकञ्च चरेत् सम्वत्सरोषितः॥

सम्वत्सरोषिते शूद्रे मासार्द्धं यावकं पिबेत् ।
माससम्वत्सरोषितः शूद्रः कृच्छ्रपादेन शुद्ध्यति ॥
ऊर्द्ध्वं सम्वत्सरात्कल्प्यं प्रायश्चित्तं द्विजोत्तमैः ।
सम्वत्सरैस्त्रिभिश्चैव तद्भावं सोऽधिगच्छति ॥

अनुक्तप्रायश्चित्तनिराचारनिषिद्धाचरित्वग्दृष्टान्नभोजने, षट्त्रिंशन्मते,—

निराचारस्य विप्रस्य निषिद्धाचरणस्य च ।
अन्नं भुक्त्वा द्विजः कुर्य्याद्दिनमेकमभोजनम् ॥

इत्याश्रयभूताख्यप्रतिग्रहीतृदोषदुष्टानि ।

## अथ संसर्गदुष्टानि ।

भविष्ये,—

सुरालसुनसंसृष्टं पेयूषादिसमन्वितम् ।
संसर्गदुष्टमेतद्धि शूद्रोच्छिष्टवदाचरेत् ॥

मद्यभाण्डस्थितशवोपहतजलादि च संसर्गदुष्टम् ।

तत्प्रमाणं जलशुद्धौ लिखितं, एवं गोघ्रातकेशकीटादिपातदूषितान्नादि संसर्गदुष्टं, तत्प्रमाणं अन्नादिशुद्धौ लेख्यम् ।

पराशरः,—

भाण्डस्थितमभोज्यानामपः पीत्वा पयोदधि ।
ब्रह्मकूर्च्चोपवासश्च योऽन्यं कर्म्मास्य निष्कृतिः ॥
शूद्रस्य नोपवासस्तु दिनेनैकेन शुध्यति ॥

स्मृत्यन्तरे,—

नारिकेलोदकं कांस्ये मधु ताम्रे च संस्थितम्।
गोरसं ताम्रपात्रस्थं मद्यतुल्यं घृतं विना॥

सम्वर्त्तः,—

शूद्राणां भाजने भुक्त्वा भुक्त्वा वा भिन्नभाजने।
अहोरात्रोषितो भूत्वा पञ्चगव्येन शुध्यति॥

विष्णुः,—

मृद्वारिकुसुमादींश्च फलकन्देक्षुमूलकान्।
विण्मूत्रदूषितान् भुक्त्वा कृच्छ्रपादं समाचरेत्॥

सन्निकृष्टेऽर्द्धमेव स्यात्कृच्छ्रं स्यात् शुद्धिशोधनम्। अत्र सर्वत्र अमेध्यावयवस्य साक्षात् प्रत्यभिज्ञाने तदमेध्यभक्षणे प्रायश्चित्तं अवयवप्रवेशशङ्कायामुक्तानि प्रायश्चित्तानि। इति संसर्गदुष्टान्न-भक्ष्याणि।

## अथ रसदुष्टानि।

भविष्ये,—

रसदुष्टं विकाराद्धि रसस्येति प्रकीर्त्तितम्।
पायसक्षीरपूपादि तस्मिन्नेव दिने यथा॥

दिनान्तरितस्य कालस्य दुष्टत्वात् तस्मिन् दिने यदि द्रव्या-न्तरायोगेनाम्लं भवति। तदा रसदुष्टमुच्यते। आदिपदेन गुड़-युक्तदुग्धदध्यादिकं पर्य्युषितप्रपानकादिकं च रसदुष्टम्। इदं

सर्वं दिनान्तरितमेव दुष्टमिति समाचारः । एवं शुक्तादिकं रस-दुष्टम् । तत्प्रमाणमामाचारादि शुद्धौ लेख्यम् ।

इति रसदुष्टान्यभक्ष्याणि ।

## अथ सहृल्लेखाख्यानि परनामकानि भावदुष्टानि ।

भविष्ये,—

विचिकित्सा तु हृदये यस्मिन्नन्ने प्रजायते ।

सहृल्लेखं तु विज्ञेयमिति, विचिकित्सा संशयः, सा च त्रिविधा अभक्ष्यद्रव्यसादृश्येन यत्राभक्ष्यभ्रान्तिर्भवति, आहार्य्यारोपो वा तत्र संशयहेतुसादृश्यसत्वात्संशयो भवतीति, अनाश्यसंषितं[1] गृह्यते यथा भेकादिसदृशफलमूलादि यथा पुरीषादिसदृशं, द्वितीय-प्रकारस्तु अभक्ष्यसंसर्गसंशयः ।

काकाद्युपघातसंशयो वा अन्नस्वामिदोषसंशयो वा, तृतीय-प्रकारस्तु भक्षितेऽपि द्रव्ये भक्ष्यं वा भुक्तमभक्ष्यं वा भुक्तमिति संशयः ।

पराशरः,—

वाग्दुष्टं भावदुष्टञ्च भोजने भावदूषिते ।
भुक्त्वा तु ब्राह्मणः पश्चात्त्रिरात्रेणैव शुध्यति ॥

वाग्दुष्टमिति वचसाऽपि संशयजनकत्वात् सहृल्लेखत्वेन संगृहीतं, शुद्धमपि यद्द्रव्यं यदि कश्चिद्वदतीदमभक्ष्यमिति तदा वाग्दुष्ट-मुच्यते, वाग्दुष्टपदेन सादृश्यातिरिक्ताभक्ष्यसंशयहेतुमात्रं संगृह्यते ।

(१) संषितं ।

वशिष्ठः,—

शङ्कास्थाने समुत्पन्ने अभोज्यं भक्ष्यशङ्किते ।
आहारशुद्धिं वक्ष्यामि तां मे निगदतः शृणु ॥
अक्षारलवणाम्रूक्षां पिबेद्ब्राह्मीं सुवर्चलाम् ।
त्रिरात्रं शङ्खपुष्पीं वा ब्राह्मणः पयसा सह ॥
पलाशपद्मपत्राणि कुशान् पत्रमुदुम्बरम् ।
क्वाथयित्वा पिबेदम्भस्त्रिरात्रेणैव शुध्यति ॥
सहस्रपरमां देवीं शतमध्यां दशावराम् ।
गायत्रीं वा जपेन्नित्यं महापातकनाशिनीम् ॥
सम्वत्सरस्यैकमपि चरेत्कृच्छ्रं समाहितः ।
अज्ञातभुक्तशुद्ध्यर्थं ज्ञातस्य तु विशेषतः ॥

इति भावदुष्टान्यभक्ष्याणि ।

## अथ स्वभावदुष्टानि ।

भविष्ये,—

पूर्व्ववाक्यस्य शेषः, पुरीषन्तु स्वभावतः, पुरीषपदं शारीरमलोपलक्षणम् ।

मनुः,—

अज्ञानात् प्राश्य विण्मूत्रं सुरासंसृष्टमेव च ।
पुनः संस्कारमर्हन्ति त्रयो वर्णा द्विजातयः ॥

विष्णुः,—

मद्यानां प्राशने चान्द्रायणम् ।

वसाशुक्रमसृङ्मज्जामूत्रविट्कर्णविन्नखाः ।
श्लेष्माश्रुदूषिका स्वेदो द्वादशैते नृणां मलाः ॥
मानुषास्थि शवं विष्ठां रेतो मूत्रार्त्तवं वसा ।
स्वेदाश्रुदूषिका श्लेष्मा मद्यं चामेध्यमुच्यते ॥

इत्यादिषु चान्द्रायणं पुनः संस्कारश्च, श्वविड्वराहगृध्रश्येनकुक्कुटश्यामभासवककाककङ्कमृगाणां मूत्रपुरीषप्राशने तप्तकृच्छ्रं, स्वभावदुष्टेषु छर्दनं छर्दनासम्भवे च त्रिरात्रं सप्तरात्रं वा उपोष्य निःपुरीषाभावः कार्य्यः ।

इति स्वभावदुष्टान्यभक्ष्याणि ।

## अथ अष्टविधभक्ष्याणि ।

सुमन्तुः,—

लशुनपलाशकुम्भीनवश्राद्धसूतिकामधुमांसमूत्ररेतोऽमेध्यभक्षणे मूर्द्ध्नि सम्पातानवनयेदुपवासश्च, एतान्येव व्याधितस्य भिषक्क्रियायामनिषिद्धानि भवन्ति यानि चान्यान्येवं प्रकाराणीति ।

अत्र यद्यपि सर्व्वत्र आत्मानं गोपायेदिति विधिनाऽनन्यौषधव्याधिनिवृत्त्यर्थं विहितस्याप्यभक्ष्यस्याप्यौषधस्याग्नीषोमीयहिंसावन्निषेधविषयत्वायोगात् पृथग्वचनमनर्थकं, तथापि,

कर्मणा येन केनापि मृदुना दारुणेन वा ।
उद्धरेद्दीनमात्मानं समर्थो दानमाचरेत्[1] ॥
धर्म्मश्च प्रथमं तावत्प्रायश्चित्तात्मको भवेत् ।
ततस्तेन विशुद्धस्य फलार्थोऽन्यो भविष्यति ॥

इति न्यायेन सर्व्वत्र आत्मानं गोपायेदित्यस्य न्यायप्राप्तानुवादात् । येषां व्याधिनाशप्राणात्ययादौ विशेषानुज्ञा नास्ति तेषामल्पदोषत्वं यत्र विशेषानुज्ञा तत्र दोषलेशस्याभावान्न प्रायश्चित्तं, तत्रापि महापातकहेतुसुरापानादेः प्राणात्ययादावपि त्याज्यतैव, न च यानि चान्यान्येवं प्रकाराणीति सुमन्तुवचनात् सुरापानस्यापि व्याधितस्य भिषक्क्रियायां निर्दोषता किं न स्यादिति वाच्यं, एवंप्रकारशब्देन महापातकहेतुव्यतिरिक्ताभक्ष्याणामेवोक्तत्वात्, अन्यथा तद्वैयर्थ्यापत्तेः ।

इत्यष्टविधान्यभक्ष्याणि ।

## अथ षष्ठसप्तमभागकृत्यम् ।

दक्षः,—

इतिहासपुराणाभ्यां षष्ठसप्तमकौ नयेत्, इतिहासो महाभारतं, पुराणान्यष्टादश तथोपपुराणान्यष्टादश, तन्निर्गतं नन्दिपुराणनरसिंहपुराणादि, विष्णुधर्म्मसौरधर्म्मविष्णुशिवसूर्य्यरहस्यानि रामायणञ्च ।

---

(१) धर्म्ममाचरेत् ।

विष्णुधर्म्मोत्तरादीनि च,—

एतच्च नित्यवद्विधानाद्वेदार्थज्ञानोपायत्वेन नित्यमेव कर्त्तव्यम् ।

तदुक्तं,—

इतिहासपुराणाभ्यां वेदं समुपवृंहयेत् ।

बिभेत्यल्पात् श्रुताद्वेदो मामयं प्रहरिष्यति ॥ इति ।

अतएवात्र इतिहासपुराणपदं वेदार्थज्ञानोपयोगिशास्त्रोपलक्षण-मिति ।

मनुः,—

बुद्धिवृद्धिकराण्याशु धन्यानि च हितानि च ।

नित्यं शास्त्राण्यवेक्षेत निगमांश्चैव वैदिकान् ॥

बुद्धिवृद्धिकराणि न्यायवैशेषिकसांख्यशास्त्राणि, धन्यानि नीति-शास्त्राणि हितानि वैद्यशास्त्राणि, निगमान् वैदिकान् निघण्टु-प्रभृतीन् ।

याज्ञवल्क्यः,—

वेदार्थानधिगच्छेच्च शास्त्राणि विविधानि च, विविधानि पातञ्जलपञ्चरात्रपाशुपतादीनि ।

साख्यं योगः पञ्चरात्रं वेदाः पाशुपतं तथा ।

अतिप्रमाणान्येतानि हेतुभिर्न विरोधयेत् ॥

इति याज्ञवल्क्येनैवोक्तेः,—

एवं मन्वादिधर्म्मशास्त्रावेक्षणस्याप्ययमेव कालः ।

सायं प्रातस्तथा रात्रौ शुचिर्भूत्वा शृणोति यः ॥

भविष्यपुराणाद्युक्तेतिकर्त्तव्यता च काम्यश्रवणविषया न तु वेदार्थ-ज्ञानोपयोगिपुराणाद्यवेक्षणे, पुराणादीनि पूर्व्वमुक्तानि।

इति षष्ठसप्तमभागकृत्यम्।

## अथाष्टमभागकृत्यम्।

दक्षः,—

अष्टमे लोकयात्रा तु वहिःसन्ध्या ततः परम्।

लोकयात्रा गृहाय व्ययचिन्ताधनार्ज्जनप्रकारान्वेषणञ्च सुहृदादि-गृहगमनञ्च, लोकयात्रान्तर्गतत्वाद्वैद्यशास्त्राद्यवेक्षणमिहैव।

उदयास्तमयं यावन्न विप्रः क्षणिको भवेदिति दक्षवचनाल्लोक-यात्राभावे पुराणशास्त्रावेक्षणाध्यापनविष्णुशिवदूर्गानामकीर्त्त-नादिकमिहापि कर्त्तव्यम्।

इत्यष्टमभागकृत्यम्। इत्यष्टधाविभक्तदिवसकृत्यानि।

---

## अथ सायंसन्ध्या।

यद्यपि वहिःसन्ध्या ततः परमित्यनेन अस्तमनानन्तरमेव-सन्ध्येति प्रतिभाति तथापि आतारोदयात्सायमर्द्धास्तमित-भास्करामिति व्यासवचनादर्द्धास्तमिते सन्ध्यारम्भः।

उपास्य पश्चिमां सन्ध्यां हुत्वाऽग्निस्तानुपास्य च।

भृत्यैः परिवृतो भुक्त्वा नातितृप्याथ संविशेत्॥

इति याज्ञवल्क्यवचनात्,—

श्रोत्राग्निमांस्तु, सूर्य्येऽस्तशैलमप्राप्ते षट्त्रिंशद्भिस्तथाऽङ्गुलैः, इत्युक्तकाले, उद्धरेति यजमानो ब्रूयात् सायं प्रातरग्निहोत्र इति कात्यायनवचनात्, अध्वर्य्युं प्रति उद्धरेति प्रैषः ।

स्वयं होमपक्षे प्रैषाभावः, उद्धरणं, उपासनस्यापि प्रादुष्करणं, ततोऽर्द्धास्तमिते सूर्य्ये सन्ध्यारम्भः ।

अथातः सन्ध्योपासनविधिं व्याख्यास्याम इत्युपक्रम्य मन्त्रस्नानं बौधायनेनोक्तमिति मन्त्रस्नानमदृष्टार्थं स्नाननिमित्ताभावेऽपि सायंसन्ध्यायां कार्य्यम् ।

याज्ञवल्क्यः,—

प्राणानायम्य संप्रोक्ष्य त्वृचेनाब्दैवतेन[1] तु ।
जपन्नासीत सावित्रीं प्रत्यगातारकोदयात् ॥

प्रत्यक् पश्चिमामुखः, तत्राञ्जलिदानकाले पश्चिमा सन्ध्या सरस्वती कृष्णवर्णा वृद्धा कृष्णवस्त्रा वृषारूढ़ा त्रिलोचना द्विभुजा डम्बरुत्रिशूलहस्ता रुद्राणी रुद्रदैवता सूर्यमण्डलादायान्ती कैलासनिलया इति गायत्रीध्यानम् ।

प्रत्यङ्मुखत्वेन यथारूपां सरस्वतीं ध्यात्वा यद्वा ध्येयः सदेत्यादि ध्यात्वा बहुनक्षत्रदर्शनपर्यन्तं सहस्रशतं दश वा गायत्रीजपः उपविश्य कार्य्यः ।

उत्थाय प्रत्यङ्मुखस्य इमं मे वरुण [2]तत्त्वायामीति द्वाभ्यां रात्रेरुपस्थानम् ।

---

(१) -त्वृचेन दैवतेन च ।  (२) तं त्वायामीति- ।

उपविश्य समाचारेत् अग्नये स्वाहा प्रजापतये स्वाहेति जलाञ्जलिद्वयदानम् ।

अन्यत्सर्वं प्रातःसन्ध्यावत्, दैवादुयथोक्तकाले सन्ध्याया असम्भवे प्रातस्तनात्प्रदोषाद्वा सन्ध्याकालो विभिद्यत इति वृद्धमनुवचनात् प्रथमप्रहरमध्ये करणं, साग्निकस्य विशेषतः ।

यावत् सम्यङ्न भाव्यन्ते नभस्यृक्षाणि सर्वतः ।

न च लोहितमत्येति तावत् सायं च हूयते ॥ इति

होमकालात् प्राक् जपत्यागेन होमारम्भः, गार्हपत्यं प्रदक्षिणीकृत्य यजमान उपविशेत् । अग्निर्ज्योतिषं त्वा वायुमतीं प्राणमतीं, स्वर्ग्याᳫं स्वर्गायोपदध्यामि भास्वतीं, इति मन्त्रेणाहवनीये समिधमादध्यात्, अग्निर्ज्योतिर्ज्योतिरग्निः स्वाहेति प्रथमाहुतिं जुहुयात्, प्राक्संस्थं समिदाधानं, धरापर्य्युक्षणं च, शेषः प्रातर्वत् ।

स्मार्त्तहोमे, अग्नये स्वाहेति प्रथमाहुतिः, शेषं प्रातर्होमवत्, "सायंप्रातर्वैश्वदेवः कर्त्तव्यो बलिकर्म चे"ति वचनात् पक्वान्नेन तण्डुलादिद्रव्यान्तरेण वा वैश्वदेवहोमो बलिहरणं च यथोक्तं, यत्तु सायं त्वन्नस्य सिद्धस्य पत्न्यमन्त्रं बलिं हरेदिति तद्यजमानस्य ऋत्विजां चासन्निधाने बोध्यम् ।

अप्रणोद्योऽतिथिः सायं सूर्य्योढ़े गृहमागते ।

इत्यतिथिपूजा च कार्य्या, हुत्वाऽग्नींस्तानुपास्ते चेत्युक्तेरग्नीनामुपस्थानं प्रदक्षिणावर्त्तनं प्रणामः ।

तत्र प्रदोषे सप्तजन्मपापक्षयार्थं शिवलिङ्गदर्शनं कार्य्यम् ।

त्रिकालं नो प्रपश्यन्ति मुखं कृष्णस्य नित्यशः ।
न तेषां पुनरावृत्तिर्विष्णुलोकात् कथञ्चन ॥

इत्युक्तेर्विष्ण्वालयं गत्वा दर्शनं कार्य्यम् ।

प्रदोषे न हरिं पश्येत् इत्युक्तः तदनन्तरं कार्य्यम् । प्रदोषो-रजनीमुखं न तु दर्शने चतुर्थ्यादिप्रदोषो ग्राह्यः । चतुर्थीसप्तमी-त्रयोदशीप्रदोषवाक्येषु अध्ययनस्य निषिद्धत्वात्, तत्प्रमाणं लेख्यं, यत्तु सा रात्रिः सर्वकर्मघ्नी महेशाराधनं विनेति पठन्ति, तत्प्रामाण्येऽपि न तावत्तिथिविशेषे रात्रिविशेषे विहितकर्मसु बाधकत्वम् । नापि,

दिवोदितं तु यत्कर्म कदाचिदतिवर्त्तते ।
रात्रौ प्रथमयामे तु कर्त्तव्यमविशङ्कितैरित्यत्र बाधकत्वम् ।

नापि त्रिकालविहितपूजाजपहोमादौ विहितप्रतिषेधे विकल्पा-पत्तेः । कर्मप्रकरणेऽस्य वाक्यस्याभावात् एतादृशरात्रिव्यतिरिक्ते पूजादिकं कार्य्यमिति न पर्युदासोऽपि ।

नापि,

सर्वकालमुपस्थानं सन्ध्ययोः पार्थिवेष्यते ।
अन्यत्र सूतकाशौचविभ्रमातुरभीतितः इति वाक्यवत्पर्य्यु-दासः । ईदृशवाक्याभावात् तेनाध्ययननिषेधस्यैवायमनुवादः, सर्वकर्मघ्नी सर्वविद्याध्यायनकर्मघ्नीत्यर्थः । "या या प्रतिष्ठिता मूर्त्तिस्तस्यास्त्रिकालमर्चन"मिति तत्त्वसारसंहितावचनात् प्रति-ष्ठितसर्वदेवपूजा कार्य्या, गोपालपूजायां ध्याने विशेषः ।

विक्रान्तध्वस्तवैरिव्रणमजितमुपास्तावनीभारमादे-[1]
रावीतं[2] नारदाद्यैर्मुनिभिरनुदिनं तत्त्वनिर्णीतहेतोः ।
सायाह्ने निर्मलं तं निरूपममजरं पूजयेन्नीलभासम्,
मन्त्री विश्वोदयस्थित्यपहरणपरं मुक्तिदं वासुदेवम् ॥

हारीतः,—

त्रिसन्ध्यमवस्कन्ददेवार्चनजपहोमध्याननियमानुष्ठानं दृढ़-व्रतत्वं त्रिसन्ध्यनियमिनां पाप्मा शीर्य्यते, तपो भूयस्त्वमुपैति, ब्रह्म प्रकाशतां गच्छति, अवस्कन्नं सर्वाङ्गोपेतं, देवार्चनादिनियमाः तैर्ब्रह्म प्रकाशतां यातीत्यर्थः । जप. प्रणवस्य, ध्यानं निराकारं साकारं च, होमस्तु नित्य एव ।

दक्षः,—

प्रदोषपश्चिमौ यामौ वेदाभ्यासेन तौ नयेत् ।
यामद्वयं शयानो हि ब्रह्मभूयाय कल्पते ॥
तस्मिन्नेव प्रयुञ्जानस्तस्मिन्नेव प्रलीयते ।

तस्मिन् प्रदोषपश्चिमयामे प्रयुञ्जानो वेदं पठन् तस्मिन्नेव पर-ब्रह्मणि लीयते, इति वचनाद्वेदाभ्यासः कार्य्यः, अत्र प्रदोष-पश्चिमयामयोः कर्मान्तरविधानादावश्यककर्मान्तरव्यतिरिक्त-काले वेदाभ्यास इति भोजनमपि प्रथमप्रहररूपे प्रदोषे, सार्द्ध-प्रहरयामत इति यामद्वयं शयान इत्यस्य सङ्कोचकत्वेन प्रदोषा-

(१) -माद्यै ।
(२) रागीत ।

सम्भवे बोध्यं, तेन पूजाद्यनन्तरं कियत्कालं वेदाभ्यासः। तदा सम्भवे तदूर्द्ध्वघटिकाद्वयं यावत् ।

अर्द्धरात्रे भोजननिषेधात् ।

महानिशा तु विज्ञेया मध्यमं घटिकात्रयम् ।

इति वाक्यस्य सन्मूलत्वेऽपि सूक्ष्मार्द्धरात्रस्य निषेधायोग्यत्वेन तदुभयपार्श्वकालग्रहणेन महानिशायां भोजनविगानं, अतएव मुक्ते शम्भिनि भुञ्जीत यदि न स्यान्महानिशा इति लिङ्गं दृश्यते, एवं नक्तं चैवान्यपर्वस्विति अमावास्यासंक्रान्तिपौर्णमासीसु नक्त-भोजनं निषिद्धम् ।

न सायं प्रातराशित इति वचनाद्दिवा पूर्णोदरस्य न रात्रौ भोजनं, तदा जलेन प्राणाहुतिस्तन्मन्त्रजपो वेत्युक्तं, भोजनधर्म्माः पूर्व्ववत् ।

शिष्टाः,—

रात्रौ भोजनकाले तु यदा दीपो विनश्यति ।
पाणिभ्यां पात्रमादाय भास्करं मनसा स्मरेत् ॥
ततो दीपं पुनर्दृष्ट्वा तच्छेषं भोजयेन्नरः ।
दधिसक्तुधानातिलसम्बन्धदास्याहृतानि वर्जयेत् ॥

बिल्वफलमपि श्रीकामेन नाद्यं, न रात्रौ दीपं विना, तेन चन्द्रा-लोकादिसत्वेऽपि दीप आवश्यकः, इति रात्रिभोजनप्रकरणम् ।

---

## अथ शयनम् ।

दक्षः,—

यामद्वयं शयानस्य ब्रह्मभूयाय कल्पते ।
शर्व्वर्य्यां मध्यमौ यामौ हुतशेषं हविश्च यत् ॥
भुञ्जानश्च शयानश्च ब्राह्मणो नावसीदति ।

अत्र त्रयाणां वर्णानां पूर्व्वरात्रे प्रजागरणमिति शङ्खलिखितवचनम् प्रथमयामपरम् ।

नारदः शङ्खश्च,—नार्द्रपादः सुप्यान्नोत्तरापरशिराः, न नग्नो नानुवंशं नाकाशे न पलाशशयने न पञ्चदारुकृते न [1]गजभग्नकृते न विद्युद्दग्धकृते ।

न भिन्ने नाग्निप्लुष्टे न घटसिक्तद्रुमजे न श्मशानशून्यालय-देवतायतनेषु, [2]न चपलमध्ये न धनधान्यगोगुरुहुताशसुराणामुपरि,

नोच्छिष्टो न दिवा स्वपेन्न सन्ध्यायां न भस्मनि ।
देशे न चाशुचौ नार्द्रे न च पर्व्वतमस्तके ।

अपरः पश्चिमप्रदेशः, वंशो गृहमूर्द्धन्यश्रेणीसम्बद्धदीर्घकाष्ठं तस्याधस्तात्तद्दैर्घ्यानुकारेण दत्तं काष्ठं अनुवंशं, पञ्चदारुकृते पञ्च-जातीयकाष्ठकृते, चपलोऽत्र व्यसनी, आर्द्रे देशे शयनादौ च ।

(१) न राजभग्नकृते- ।

(२) न च जलमध्ये न धनधान्यगो ह गुरुहुताशसुराणा मुपरि ।

क्वचित्तु, एकद्रुमे यश्च वृक्षद्वयनिर्म्मितश्च धन्यतरः, त्रिभिरात्मजवृद्धिकरश्चतुर्भिरपि यशश्चाग्र्यं, पञ्चवनस्पतिरचिते पञ्चत्वं याति यः शेते, षट्सप्ताष्टतरूणां काष्ठैर्घटिते च कुलक्षयः।

अन्येन च संयुक्ता तिन्दुकी शिंशपा च शुभफलदा।
न श्रीपर्णीतरुघटिता न देवदारुवृक्षरचिता च।

हारीतः,—

नान्यपूर्व्वे नाश्मपीठोपधाने न तिर्य्यगुदक्प्रत्यक्शिराः, न नग्नो नाशुचिर्नोच्छिष्टो न प्रगे नोच्चैर्निशायां भाषेत, अन्यपूर्व्वे पूर्व्वमन्योपभुक्ते, तिर्य्यक्शिरा विदिक्शिराः। शङ्खलिखितौ, न विशीर्णखट्वायां नान्यवर्णोपसेवितायां अनभ्युक्ष्य, न भूतपञ्चग्रहायतनेषु न श्मशानवृक्षच्छायासु न पर्व्वणि न रभसोत्सवे वा, अनभ्युक्ष्य अप्रक्षाल्य, इदमापदि, शुद्धान्तरं प्रमाणञ्च द्रव्यशुद्धिप्रकरणे लेख्यं, पर्व्वणि पर्व्वप्रतिपत्सन्धौ, रभसोत्सवे पुत्रजन्माद्युत्सवे,

उशनाः, न तैलेनाभ्यक्तशिराः स्वपेत्, न द्वारेण प्रविशेत्, नादीक्षितः कृष्णचर्म्मणि सुप्यात्, कृष्णचर्म्म कृष्णमृगचर्म्म, तत्र-शयनं निषिद्धं न तूपवेशनम्।

शिष्टाः,—

स्वगृहे प्राक्शिराः शेते स्वशुरे दक्षिणाशिराः।
प्रत्यक्शिराः प्रवासे तु न कदाचिदुदक्शिराः॥
सुधौतशुद्धपादस्तु स्वाचान्तः शयने शुचौ।
नृसिंहं पद्मनाभञ्च शयने संस्मरेत्सदा॥

सर्पाणां वारणार्थञ्च इमं मन्त्रमुदीरयेत्।
नर्म्मदायै नमः प्रातर्नर्मदायै नमो निशि॥
नमोऽस्तु, नर्म्मदे तुभ्यं त्राहि मां विषसर्पतः।
सर्पापसर्प भद्रन्ते गच्छ सर्प वनान्तरम्॥
जनमेजयस्य यज्ञान्ते आस्तिक्यवचनं स्मर।
आस्तिक्यवचनं स्मृत्वा यः सर्पो न निवर्त्तते॥
शतधा भिद्यते मूर्द्धा गिरिर्वज्रहतो यथा।
अगस्त्यो माधवश्चैव मुचुकुन्दो महामुनिः॥
कपिलो मुनिरास्तिक्यः पञ्चैते सुखशायिकाः।
हनूमानञ्जनासूनुरित्यादिस्तोत्रपठनञ्च॥

साग्निकस्य तु दर्शपौर्णमासयोः कात्यायनेन, आहवनीयगृह-स्याधः, गार्हपत्यस्य वा, इति यत् सूचितं तत् खट्टाशयन-निषेधपरं न तु वस्त्राद्यास्तरणनिषेधपरम्।

जायाया अलङ्कारग्रहणादिविशेषः।

तथाचापस्तम्बः,—

सदा निशायां दारान् प्रत्यलङ्कुर्वीत, इति अत्र सदेत्युक्तेरुप-भोगाभावेऽपि विशेषः कार्य्यः।

---

## अथ शयनपद्धतिः ।

रात्रिप्रथमयामानन्तरं यथोक्तशयने शयानो दक्षिणहस्तं जायाया दक्षिणांसेन हृद्देशं नीत्वा हृदयस्पर्शनं कुर्य्यात्, तत्र मन्त्रः, यत्ते सुषीमे हृदयं दिवि चन्द्रमसि श्रितम् ।

वेदाहं तन्मां विद्यात्पश्येम शरदः शतं जीवेम शरदः शतं, शृणुयाम शरदः शतं, इति एवमृतुगमनेऽनृतुगमनेऽपि एवमत-उर्द्धमिति पारस्करसूत्रात्, ततः सम्भोगः, ऋतौ तु सम्भोगात् पूर्व्वं योनिस्पर्शनं गोभिलोक्तम् ।

तत्र मन्त्रः, विष्णुर्योनिं कल्पयतु त्वष्टा रूपाणि पिंशतु ।

आसिञ्चतु प्रजापतिर्धाता गर्भं दधातु, गर्भं धेहि सिनीवाली-गर्भं धेहि पृथुष्टुके, गर्भन्ते अश्विनौ देवावाधत्तां पुष्करस्रजौ, इति सम्भोगानन्तरमृतौ शुक्रशोणितलेप्यं प्रक्षाल्य स्नात्वाऽनृतौ तु आचमनमात्रं कृत्वा पृथक्शय्यायां शयनम् ।

तथाचापस्तम्भः,—

ऋतौ च सन्निपातोदारेणानुव्रतमन्तरालेऽपि दार एव ब्राह्मणवचनाच्च संवेशनं स्त्रीवाससैव सन्निपातः स्यात्, यावत्सन्नि-पातं च सहशय्या ततो नाना, उदकोपस्पर्शनमपि वा लेपान् प्रक्षाल्याचम्य प्रोक्षणमङ्गानां, इति, सन्निपातः संयोगः, अनुव्रतं पर्वादिवर्जनरूपव्रतमनुगम्येत्यर्थः, अन्तरालेऽनृतौ, ब्राह्मणवचनात् विज्ञायते हीन्द्रस्त्वाष्ट्रमित्यादिवक्ष्यमाणवेदभागविशेषोक्तेः स्त्रीवासः स्त्रीभोगार्थवस्त्रं, ततो नानासम्भोगानन्तरं पृथग्भूतौ स्याताम् ।

उदकस्पर्शनं स्नानं, एतदृतौ, अनृतौ तु प्रोक्षणं,

वैद्यशास्त्रेऽपि,—

दिवा वा यदि वा रात्रौ यत्कालं मैथुनं व्रजेत् ।
अनन्तरं प्रस्वपतो बलवर्णौ प्रसीदतः ॥

यद्यपि दिवा मैथुनं निषिद्धं तथाप्येतद्वाक्यस्य निषेधमुल्लंघ्य तदाचरणवतोऽन्नस्य पथ्योपदेशकत्वादविरोधः ।

तथाच वृद्धशातातपः,—

ऋतौ तु गर्भशङ्कित्वात् स्नानं मैथुनिनः स्मृतम् ।
अनृतौ तु सदा कार्य्यं शौचं मूत्रपुरीषवत् ॥

मिथुनीभूय तया सह सर्व्वां न शयीत, सर्व्वां रात्रिमिति-शेषः ।

याज्ञवल्क्यः सोऽपि ।

द्वावेतावशुचौ स्यातां दम्पती शयनङ्गतौ ।
शयनादुत्थिता नारी शुचिः स्यादशुचिः पुमान् ॥

जायायाः शुचित्वं स्नानप्रोक्षणव्यतिरेकेणापि, स्वपतो जाग्रतो वा, स्वयं रेतःस्कन्दने वृहदारण्यके श्रूयते, सुप्तस्य वा जाग्रतो वा रेतः स्कन्दति तदभिमृशेदनु वा मन्त्रयेत, यन्मेऽद्य रेतः पृथिवी-मस्कान्त्सीद्यदोषधीरप्यसरद्यदपः, इदमहन्तद्रेत आददे पुनर्मा मैत्विन्द्रियं पुनस्तेजः पुनर्भगः पुनरग्निर्धिष्ण्या यथास्थानं कल्पन्ता-मित्यनामिकाङ्गुष्ठाभ्यामन्तरेण स्तनौ वा भ्रूवौ निमृज्यात् । इति, तथाच रेतःस्कन्दने शौचाचमने कृत्वा यन्मेऽद्य रेत इत्यादि कल्पन्तामित्यनेन मन्त्रेण रेतसो दर्शने तदभिमर्शनं, स्तनयो-

भ्रुवोर्व्वा मध्ये निर्म्मार्ज्जनं, अदर्शने तु मनसा पठनरूपमनुमन्त्रणं, इति व्यवस्थितो विकल्पः, विज्ञानेश्वरीये तु हरतो दर्शनादर्शनयोरपि अनुमन्त्रणपक्षो लिखितः, तदनन्तरं मृदाद्भिः क्षालनं आचमनं च, इति शयनपद्धतिः ।

तत्र ऋतुविचारः ।

मनुः,—

ऋतुकालभिगामी स्यात्स्वदारनिरतः सदा ।
पर्व्ववर्जं व्रजेच्चैनां तद्व्रतो रतिकाम्यया ॥
ऋतुः स्वाभाविकः स्त्रीणां रात्रयः षोड़श स्मृताः ।
तासामाद्याश्चतस्रस्तु निन्दितैकादशी च या ॥
त्रयोदशी च शेषाः स्युः प्रशस्ता दश रात्रयः ।
युग्मासु पुत्रा जायन्ते स्त्रियोऽयुग्मासु रात्रिषु ॥
तस्माद्युग्मेषु पुत्रार्थी संविशेदार्त्तवे स्त्रियम् ।
पुमान् पुंसोऽधिके शुक्रे स्त्री भवेदधिके स्त्रियाः ॥
समेऽपुमान् पुंस्त्रियौ वा क्षीणेऽल्पे च विपर्ययः ।
निन्द्यास्वष्टसु चान्यासु स्त्रियो रात्रिषु वर्जयन् ॥
ब्रह्मचार्य्येव भवति यत्र तत्राश्रमे वसन् ।

ऋतुः स्त्रीणां गर्भधारणयोग्यावस्था, तदुपलक्षितः काल ऋतुकालः, तत्राभिगम एव व्रत यस्य स ऋतुकालाभिगामी ।

व्रते इति सूत्रेण व्रतार्थे णिनिः, पर्व्ववर्ज्जमित्यृतावनृतौ च, पर्व्वाणि तु पूर्णिमामावास्याऽष्टमीचतुर्द्दशीसंक्रान्तय इति पूर्व्वमुक्तानि, भार्य्या रतिकाम्यया भार्य्यां सुरतकामनया निमित्त-

भूतया, तद्भार्य्यागमनमेव व्रतं यस्य स तथोक्तः, ऋतावनृतौ च भार्य्याकामनायां न दोष इत्यर्थः।

तथाच याज्ञवल्क्यः,—

यथाकामी भवेद्वापि स्त्रीणां वरमनुस्मरन्।

स्त्रीवरश्च वेदे,—

विज्ञायते हीन्द्रस्त्वाष्ट्रं त्रिशीर्षं हत्वा पापगृहीतमात्मानममन्यत, सर्व्वा भूतान्यभ्याक्रोशन् भ्रूणहन्निति।

स स्त्रिय उपधावदस्य मे भ्रूणहत्यायै तृतीयं प्रतिगृह्णीतेति, ता अब्रुवन् किं नोऽभूदिति, सोऽब्रवीद्वरं वृणीध्वमिति।

ता अब्रुवन् ऋतौ प्रजा विन्दामह इति, काममाविजनितोः सम्भवाम इति, तथेति ताः प्रतिजगृहुः, आदिजनितोरिति तोसुन्।

पुत्रजन्मपर्य्यन्तं कामसम्भवाम, अस्मदिच्छया पुरुषसम्भोगं लभेमहीति यावत्, पुत्रजन्मानन्तरं पुत्रान्तरजननमपेक्ष्य यथाकामित्वमिति ज्ञेयम्।

एवं स्त्रीकामनायां व्यभिचारशङ्कानिवृत्तयेऽनृतावपि गमनमावश्यकम्। युग्मास्वित्यादौ श्रुतिः,—युग्मासु[1]ल्पी[1]भवत्यान्तर्वमयुग्मास्वाप्यायते तस्मादासु क्रमात्पुत्रा दुहितरश्च जायन्ते इति, समे स्त्रीपुंशोणितशुक्रे समेऽपुमान् नपुंसकः।

---

(१) युग्मस्वनीभवत्याभिवम्।

तथाच यमः,—

युगपद्दयत्र वर्त्तेत विद्यात्तत्र नपुंसकमिति, शुक्रशोणितसाम्ये-पुंस्त्रियौ वा तादृशयमलं वा ।

पुनर्यमः,—

यदि सम्भोगकाले तु पुरुषो रागमोहितः ।
द्विधा समुत्सृजेच्छुक्रं यमलं तत्र जायते ॥

अर्थात् शुक्राधिक्ये द्विधोत्सर्गे स्त्रीयुगलमित्यर्थः । क्षीणे निःसारे अल्पे परिमाणतो न्यूने च विपर्य्ययो गर्भानुत्पत्तिः ।

निन्द्यासु आद्यचतुष्टयैकादशीत्रयोदशीरूपासु षट्सु । अन्यासु अनिन्द्यासु अष्टसु अर्थादनिन्द्यदशरात्रिमध्ये युग्मास्वयुग्मासु अष्टसु वर्ज्जयन् रात्रिद्वयमेव गच्छन्नित्यर्थः । ब्रह्मचार्य्यै ब्रह्मचर्य्यफलभागित्यर्थः । यत्र तत्राश्रमे गार्हस्थ्येऽपीत्यर्थः । स्त्रीवरसत्वेऽपि ब्रह्मचर्य्यफलकामस्यानृतौ न गमनशङ्केत्यर्थः ।

याज्ञवल्कीये तु विशेषः,—

षोड़शर्त्तुर्निशाः स्त्रीणान्तासु युग्मासु संविशेत् ।
ब्रह्मचार्य्येव पर्व्वाण्याद्याश्चतस्रस्तु वर्ज्जयन् ॥
एवं गच्छन् स्त्रियं क्षामां मघां मूलाञ्च वर्ज्जयेत् ।
स्वस्थ इन्दौ सकृत्पुत्रं लक्षण्यं जनयेत् पुमान् ॥

क्षामां रजस्वलाव्रतैरक्षण्यलघ्वाहारादिभिश्चाल्पवलामित्यर्थः । मघां मूलाञ्चेति गण्डलक्षणं, स्वस्थ इन्दौ वलवति चन्द्रे, एतच्चान्यशुभग्रहोपलक्षणं, एतत्प्रथमर्त्तुनिरूपणे वाच्यम् ।

षोड़शरात्रिमध्ये रात्रिचतुष्टयं वर्ज्जं, अवशिष्टासु द्वादशसु

रात्रिषु पञ्चमसप्तमनवमैकादशत्रयोदशपञ्चदशरूपा अयुग्मरात्रय-स्त्याज्याः, अवशिष्टासु षट्सु रात्रिषु पर्व्वाणि त्यक्ता सङ्गमे विशिष्टः पुत्रो भवति। एकस्या रात्र्यां सक्वदेव गमनं न द्विस्त्रिरेवं सति ब्रह्मचर्य्यफलभागित्यर्थः। अत्रायुग्मरात्रित्यागो नाधर्म्महेतुः किन्तु पुत्रोत्पादनार्थं एव, पर्व्वत्यागस्तु अधर्म्महेतु-तयैवेति ज्ञेयम्।

यद्यपि वामनपुराणे, पूर्णासु योषित्परिवर्ज्जनीया, पूर्णाश्च पञ्चमीदशमीपञ्चदश्यः, तथा बुधेन योषामिति बुधवारो निषिद्धः, योषिन्मघाकृत्तिकासूत्तरासु च, इति नक्षत्राणि।

वाराहे,—

षष्ठ्यष्टमी अमावास्या उभे पक्षे चतुर्द्दशी।
मैथुनं न च सेवेत द्वादशीञ्च मम प्रियाम्॥

इति षष्ठी द्वादशी च निषिद्धे। चतुर्थ्यां मैथुनवर्ज्जनं विष्णुलोक-प्राप्तिफलकत्वात्काम्यं न नित्यम्। पर्व्वसु षष्ठ्याञ्च यमोक्त्यादिषु यो विशेषनिषेधः स दोषातिशयार्थं इति तद्वचनानि न लिखितानि।

तिथिवारनक्षत्रेषु निषेधाः सन्ति ते च प्रथमर्त्तावेव।
दक्षिणदिङ्मुखगमनञ्चाप्यभिनवासु नारीषु।

व्ययमपि शस्यफलाना न बुधा बुधवासरे कुर्य्युरित्यादि वचनान्त-रात्। बहुनिषेधपरिपालने सङ्गमस्य निर्विषयत्वापत्तेश्च पर्व्व-वर्ज्जनन्तु सर्व्वर्त्तुष्वपि, सर्व्वत्र तिथिनक्षत्रयोर्मैथुनादिनिषेध-स्तत्तत्तिथ्यादिव्याप्तिसमय एव नत्वहोरात्रे, संक्रान्तौ तु तदव-

च्छिन्नाहोरात्रे इति पूर्व्वमुक्तम्। चतुर्थदिवसरात्रौ सङ्गमस्य मानवीयाद्युक्तिषु निषिद्धत्वेऽपि "स्नातां चतुर्थदिवसे रात्रौ गच्छेद्विचक्षण'," इति महाभारते। चतुर्थेऽह्नि स्नातायां युग्मासु वा गर्भाधानवदुपेतो ब्राह्मणो गर्भं सन्दधातीति हारीतीये। चतुर्थीप्रभृत्युत्तरोत्तराः प्रजानिःश्रेयसार्थमिति आपस्तम्बीये। चतुर्थरात्रौ विहितत्वात् रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्गुण-वर्ज्जित इति दोषसहिष्णुतयैव चतुर्थरात्रौ सङ्गमाचारः सङ्गच्छते। केवलं प्रथमर्त्तावेव चतुर्थरात्रिनिषेधो दृश्यते। तथाच षोड़शरात्रीणां फलानि।

रात्रौ चतुर्थ्यां पुत्रः स्यादल्पायुर्गुणवर्ज्जितः।
पञ्चम्यां पुत्रिणी नारी षष्ठ्यां पुत्रस्तु मध्यमः॥
सप्तम्यामप्रजा योषिदष्टम्यामीश्वरः सुतः।
नवम्या शुभगा नारी दशम्या प्रवरः पुमान्॥
एकादश्यामधर्म्मा स्त्री द्वादश्यां पुरुषोत्तमः।
त्रयोदश्यां सपापा स्त्री धर्म्मसङ्करकारिणी॥
धर्म्मध्वजी (१)कृतज्ञश्च आत्मवेदी दृढव्रतः।
प्रजायते चतुर्द्दश्यां गुणोघैरन्वितः सुतः॥
जायन्ते पञ्चदश्यान्तु बहुपुत्रा पतिव्रता।
विद्वान् लक्षणसम्पूर्णः सत्यवादी जितेन्द्रियः॥

(१) क्रतकश्च-।

आश्रयः सर्व्वभूतानां षोड़श्यां जायते सुतः। इति,

तीर्थस्मृतुः।

देवलः,—

अतीर्थगमनात् पुंसस्तीर्थसंगुहनात् स्त्रियाः।
उभयोर्द्धर्मलोपः स्याद्द्वेषेण च विशेषतः॥
यौगपद्ये च तीर्थानां विवाहः क्रमशो भवेत्।
रक्षणार्थमपुत्राणां ग्रहणं क्रमशोऽपि वा॥

द्वेषेण ऋतौ पुंसोऽगमने द्वेषेण स्त्रिया ऋतुगोपने च महान् दोषः, वह्वीषु ऋतुमतीषु अपुत्रा प्रथमं गन्तव्या। सर्व्वासु पुत्रिणीषु वा ऋतुप्राथम्येन, ऋतुसमानकालत्वे च विवाहक्रमेण गमनमित्यर्थः।

यमः,—

ऋतुस्नातां तु यो भार्य्यां सन्निधौ नोपगच्छति।
घोरायां ब्रह्महत्यायां पच्यते नात्र संशयः॥
भार्य्यामृतुमुखे यस्तु सन्निधौ नोपगच्छति।
पितरस्तस्य त मासन्तस्मिन् रेतसि शेरते॥

बौधायनः,—

ऋतौ नोपैति यो भार्य्यामनृतौ यश्च गच्छति।
तुल्यमाहुस्तयोर्दोषमयोनौ यश्च सिञ्चति॥

ऋतावगत्वाऽनृतौ गमनेऽयं दोषो न तु ऋतुगमनानन्तरमनृतुगमने, स्त्रीवरेण [1]तस्यादुष्टत्वात्।

(१) तस्य दुष्टत्वात्।

देवलः,—

य: स्वदारानृतुस्नातान् स्वस्थ: सन्नोपगच्छति ।
भ्रूणहत्यामवाप्नोति गर्भम्प्राप्य विनश्यति ॥

एवं चास्य चान्द्रायणादिगुरुप्रायश्चित्तार्हत्वेन "ऋतुं न गच्छेद्भार्य्यां यः सोऽपि कृच्छ्रार्द्धमाचरे"दिति बृहस्पत्युक्तिर्दैशान्तरस्थविषया ।

अयमृतुकालविधिरपूर्व्वविधि:, पुत्रोत्पादनफलं प्रत्यप्राप्तस्य तद्गमनस्य शास्त्रेण विधानात्, नियमविधेस्तु नाशङ्का, पुत्रोत्पादने ऋतुगमनस्य पाक्षिकप्राप्तेरभावात् । विज्ञानेश्वरैस्तु नियम इति यदुक्तं तत्पुत्रोत्पादनस्य नित्यत्वाच्च ऋतुगमनमपि नित्यमित्यभिप्रायेण इति बोध्यम् ।

नापि परिसंख्या, ऋतुगमनस्य पुत्रोत्पादनं प्रति प्राप्तेरभावात् ।

तथाच,—

विधिरत्यन्तमप्राप्तौ नियम: पाक्षिके सति ।
तत्र चान्यत्र च प्राप्तौ परिसङ्ख्येति कीर्त्यते ॥

एवञ्च ऋतुगमनं सन्ध्यावन्दनादिवन्नित्यम्, द्विरात्रिमात्रगमनं पुरुषार्थो ब्रह्मचर्य्यफलार्थत्वात्, तेन फलकामनाविरहे निषिद्धवर्ज युग्मसर्व्वरात्रिगमनं पुत्रार्थिना कार्य्यं, एकस्यां रात्रौ एकवारमिति च पुत्रोत्पादनविधिशेषत्वान्न पृथक् पुरुषार्थ: तेन बह्वीषु ऋतुमतीषु सकृत्सकृद्गमनमेकरात्रावप्यविरुद्धं, अनृतुगमननिषेधश्च स्त्रीकामनाविरहे, स्त्रीकामनायां तु तत्रा-

ष्यभिगमनं नित्यं उत्पन्नपुत्रस्य तु न ऋतुकालगमननियमः।

ऋतुकालाभिगामी स्याद्यदि पुत्रो न जायते, इति कौर्मोक्तेः उत्पन्नैकपुत्रस्य तु स्त्रीकामनाविरहे ऋतावगमने न दोषः।

स्त्रीकामनाया ऋतावनृतावपि गमनं नित्यमेव, अतएव बहुपत्नीकस्यैकस्यां पुत्रोत्पादनेऽपि अन्यस्याः सकामनियमादृताव-गमने दोषः।

एष्टव्या बहवः पुत्रा यद्येकोऽपि गयां व्रजेत्।
यजेत वाऽश्वमेधेन नीलं वा वृषमुत्सृजेत्॥

इत्युक्तेः पुत्रवतः पुत्रान्तरोत्पादनं काम्यम्।

तस्य ऋतौ गमनं काम्यमेव।

न मांसभक्षणे दोषो न मद्ये न च मैथुने, इति मनूक्तेः।

एवं दुहितृकामनार्थमयुग्मरात्रिगमनमपि काम्यमेव।

यदा तु जातकादिवशेन पुत्रोत्पत्त्यभावनिश्चयो "दौहित्रस्य-मुखं दृष्ट्वा किमर्थमनुशोचसी"त्युक्त दिशा दौहित्रद्वारा आनृण्य-मिच्छेत्तदा दुहितृजननार्थमयुग्मरात्रिगमनमपि नित्यमेव। पुत्रोत्पादनविधौ संस्कारविधौ वा पुंस्त्वस्योद्देश्यविशेषणत्वेनाविव-क्षितत्वात्, अतएव पुराणेषु दत्तकृत्रिमादिषु (१)दुहितृनुकल्पः स्मर्य्यते, यदा कुन्तिभोजेन स्वसुता कुन्तुशूरनाम्ने यादवाय दत्ता।

यस्तु द्विभार्य्यः पुरुषो स्नेहेनैकां तु पश्यति।

(१) दत्तकृत्रिमादिदुहितृत्रानुकल्प।

तेन पापेन लिप्येऽहं यद्यहं नागमे पुनरिति वाराहोक्तौ समदृष्टित्वमुक्तं तत्स्नेहवशेन सत्कारतारतम्यविषयम् ।

स्त्रीणां सौभाग्यतो जैष्ठ्यमिति कात्यायनोक्त्या स्नेहस्य कर्त्तुमुचितत्वात्, स्त्रिया ऋतुसत्वे स्त्रीकाममनायां सप्ततिवर्षस्यापि पुरुषस्य ऋतावनृतौ स्त्रीगमनेऽधिकारः ।

तथाच वृद्धाः,—

नर्त्ते वै षोड़शाद्वर्षात्सप्तत्याः परतोऽपि वा ।

आयुष्कामो नरः स्त्रीभिः संयोगङ्कर्त्तुमर्हति ॥

इति षोड़शवर्षादृते षोड़शभिन्निनेत्यर्थः, तथाच षोडशवर्षादूर्द्धं सप्ततिवर्षपर्य्यन्तं स्त्रीगमनेऽधिकार इत्यर्थः । ननु "द्वितीयमायुषो-भागं कृतदारो गृहे वसेदि"त्युक्त्या पञ्चाशद्वर्षपर्य्यन्तमेव गार्हस्थ्योक्तेस्तदूर्द्धं गृहस्थधर्म्ममध्यपतितस्त्रीगमनस्यापि निषेधः प्रतीत इति चेत्, न ।

गृहस्थस्तु यदापश्येद्वलीपलितमात्मनः ।

अपत्यस्यैव चापत्यं तदारण्यं समाश्रयेदिति मनूक्तौ अव्यवस्थितकालवलीपलितपौत्रोत्पत्त्यवधित्वेन गार्हस्थ्यस्मृतेः । एवं चतुर्विंशतिवर्षावधिकस्यायुःप्रथमभागस्य ब्रह्मचर्य्यकालत्वेनोक्तावपि तन्मध्ये सम्पूर्णवेदैकशाखस्य स्नातकत्वेन पञ्चदशचतुर्द्दशवर्षादौ विवाहे पञ्चविंशतिवर्षात्पूर्व्वमृतावभिगमनस्याशास्त्रीयत्वापत्तेश्च ।

तथाच पञ्चाशद्वर्षादूर्द्धमपि गृहस्थाश्रमित्वे ऋतुगमनं न विरुद्धम् ।

कूर्म्मपुराणे,—

उदासीनः साधकश्च गृहस्थो द्विविधो मतः।
कुटुम्बभरणे [1]सक्तः साधकोऽसौ गृही भवेत्॥
ऋणानि त्रीण्यपाकृत्य त्यक्त्वा भार्य्यागृहादिकम्।
एकाकी यस्तु विचरेदुदासीनः स मौक्षिकः॥

इति गृहस्थस्यैव द्वैविध्योक्तिः।

ब्रह्मज्ञानञ्च गृहस्थस्यापि कार्य्यम्।

तथाच मनुः,—

यथोक्तान्यपि कर्म्माणि परिहार्य्य द्विजोत्तमः।
आत्मज्ञाने च सक्तः स्याद्वेदाभ्यासे च यत्नवान्॥

याज्ञवल्क्यः,—

यस्तु न्यायागतधनस्तत्त्वनिष्ठोऽतिथिप्रियः।
श्राद्धकृत्सत्यवादी च गृहस्थोऽपीह मुच्यते॥

इति गृहस्थत्वापरित्यागेन मोक्षाधिकारित्वोक्तिः।

किञ्च,—

विरक्तः प्रव्रजेद्विद्वान् सरक्तस्तु गृहे वसेत्।
सरक्तः प्रव्रजेन्मूढ़ो नरकं प्रतिपद्यते॥

तथा,—

अनधीत्य द्विजो वेदमनुत्पाद्य तथात्मजान्।
अनिष्ट्वा विधिवद्यज्ञैर्मोक्षमिच्छन् व्रजत्यधः॥

---

(१) -घ।

इति सरक्तस्य पुत्त्रोत्पादनं विना सन्न्यासेऽप्यनधिकारः, यावज्जीवमग्निहोत्रं जुहुयादिति विरोधाच्च पाक्षिकाग्निसमारोपवद्वानप्रस्थस्य सरक्तत्वं प्रत्यनवकाशः ।

पुत्त्रेषु दारान्निक्षिप्य वनं गच्छेत्सदैव वा ।

प्राजापत्यं निरूप्येष्टिं सर्व्ववेदस्य दक्षिणाम् ॥

आत्मन्यग्नीन् समारोप्य ब्राह्मणः प्रव्रजेद्गृहात् ।

इति स्मृत्या यावज्जीवश्रुतेर्वाधो न युक्तः, तेन ऋणापकरणमन्तरेण पुरुषमेधं विना न वनवासः सन्न्यासो वा, विरक्तस्य तु वनीभूत्वा प्रव्रजेत् ॥

यदहरेव विरजेत्तदहरेव प्रव्रजेदिति श्रुत्या यावज्जीवसङ्कोचेन सन्न्यास इति ।

तदूर्द्ध्वं ब्रह्म सम्पद्यत इत्यपि विरक्तविषयं, पञ्चाशद्वर्षादूर्द्ध्वं वैराग्यस्य प्रायिकत्वात्, तेन पञ्चाशद्वर्षादूर्द्ध्वं सरक्तस्य वानप्रस्थधर्म्मत्वेन ऊर्द्ध्वरेतस्त्वमिति न वक्तुं शक्यम् ।

किञ्च,

कलौ वानप्रस्थाश्रमो निषिद्धः, तस्मात् स्त्रीकामनाया पञ्चाशद्वर्षादूर्द्ध्वमपि स्त्रीसङ्गमेऽधिकारः ।

मनुः,—

रजसाभिप्लुतां नारीं नरस्य ह्युपगच्छतः ।

प्रज्ञा तेजो वलं चक्षुरायुश्चैव प्रहीयते ॥

एतत्त्रिरात्रविषयं, अशुद्धदिवसेष्विति देवलोक्तेः । प्रथमेऽहनि चाण्डालीति वक्ष्यमाणब्रह्माण्डोक्तेश्च ।

ब्रह्माण्डे,—

ऋतावभिगमः शस्तः स्वपत्नामवनीपते।
पुन्नाम्नृक्षे[1] शुभे काले स्त्रियो युग्मासु रात्रिषु॥
न स्नातां तु स्त्रियं गच्छेन्नातुरां न रजस्वलाम्।
नाप्रशस्तां न कुपितां नानिष्टां न च गुर्व्विणीम्॥
नादक्षिणां नान्यकामां नाकामां नान्ययोषितम्।
क्षुत्क्षामामतिभुक्तां वा स्त्रियं चैभिर्गुणैर्युतः॥
स्नातः स्रग्गन्धधृक्श्रान्तो नाश्रान्तः क्षुधितोऽपि वा।
सकामः सानुरागश्च व्यवायं पुरुषो व्रजेत्॥

नोपेयादित्यधिकारे शङ्खलिखितौ, न मलिनां नाशक्तां नाभ्यक्तां नाभ्यक्तः न रोगार्त्तां न रोगार्त्तः।

न हीनाङ्गीं नाधिकाङ्गीं तथैव च वयोऽधिकाम्।
नोपेयाद्गर्भिणीं नारीं दीर्घमायुर्जिजीविषुः॥

रोगोऽत्र सम्भोगवर्द्धनीयः, वयोऽधिका उपरतरजस्का।

वशिष्ठः,—

न मलवद्वाससा सह संविशेन्नरजस्वलया नायोग्यया, मलवद्वाससाऽमेध्यलिप्तवस्त्रया, अयोग्ययाऽप्राप्तयौवनया।

गौतमः,—

न कन्यां श्लिष्येत रिरंसयेति लक्ष्मीधरः

---

(१) पुन्नामर्क्षे-।

पुनः शङ्खलिखितौ,—

न दिवा मैथुनं व्रजेत्, क्लीवा अल्पवीर्य्यादि वा प्रसूयन्तेऽल्पायुषश्च तस्मादेतद्वर्जयेत्प्रजाकामः पितॄणां नोह वै तन्तुं छिन्द्यात्, प्रतिसिद्धमैथुनेनेत्यर्थः।

तथा,—

न श्राद्धं भुक्त्वा न हत्वा नामन्त्रितः श्राद्धे न व्रती न दीक्षितश्च, दीक्षितत्वमवभृथेष्टिपर्य्यन्तं, न देवायतनश्मशानशून्यालयेषु, न वृक्षमूले, न दिवा न सन्ध्ययोः।

वशिष्ठः,—

ऋतुकालाभिगामी स्यात्पर्व्ववर्जं स्वदारेषु नातीर्थ उपेयात्।
अतीर्थं योनिभिन्नं। अथाप्युदाहरन्ति।

यस्तु पाणिगृहीताया आस्ये कुर्वीत मैथुनम्।
पिबन्ति पितरस्तस्य तन्मासं रेतसो भुजः॥

वौधायनः,—

यस्तु पाणिगृहीताया आस्ये गच्छति मैथुनम्।
तस्येह निष्कृतिर्नास्तीत्येवमाह प्रजापतिः॥

अत्र निष्कृत्यभावेन महापातकप्रायश्चित्तेन शुद्धिः।

एतच्च रेतःसेकपर्य्यन्तं, स्त्रियाश्च व्यवाये तीर्थगमने धर्म्मभ्यश्च निवर्त्तत इति धर्म्मानधिकारः, तत्र तस्या रेतोमूत्रप्राशने चान्द्रायणं पुनः संस्कारश्च प्रायश्चित्तम्। रेतःसेकात्पूर्व्वं यः पुनर्ब्राह्मणो धर्म्मपत्नीमुखे मैथुनं सेवते स प्राजापत्येन शुध्यति,

देशकालावस्था-मैथुनेष्वपत्यगत-दोष-श्रवणादपत्योत्पादनाङ्गत्वम्। केषाञ्चित्संयोगपृथक्त्वेन पुरुषार्थत्वञ्च।

## अथ रजस्वलाधर्म्माः।

तत्र वशिष्ठः,—

न दिवा स्वप्यात्, न मांसमश्नीयात् न ग्रहान् परीक्षेत, न हसेन्न किञ्चिदाचरेत्। नाञ्जलिना पिबेन्न लोहितायसेन वा। न किञ्चित्कुर्य्यादगृहलेपनाद्यपि।

लोहितायसेन ताम्रेण,

पैठीनसिः,—

मलवद्वासो धारयमाणा नोपमार्ज्जयेत्, न वस्त्रजं धारयेत्, न गन्धान् सेवेत न विभूषयीत, नाग्निं स्पृशेत्।

हारीतः,—

रजःप्राप्ता चेदधःशयीत, न च देवकार्य्यङ्कुर्य्यात्, भूमौ कार्ष्णायसे मृत्पात्रे पाणौ चाश्नीयात्।

देवकार्य्यनिषेधः पूजोपकरणस्याप्यनवेक्षणमित्यर्थः कार्ष्णायसमयःपात्रम्।

तैत्तिरीयश्रुतिः,—

या मलवद्वाससं सम्भवन्ति यस्ततो जायते सोऽभिशस्तो यामरण्ये तस्यै स्तेनो याम्पराचीं तस्यै ह्रीतमुखोऽपगल्भो या

स्नाति तस्यै अप्सु मारको याऽङ्क्ते तस्यै दुश्चर्म्माख्यया प्रलिख्यते तस्यै खलतिरपमारी याऽङ्क्ते तस्यै काणो यादतो धावते तस्यै श्यावदन्तः। या नखानि निकृन्तते तस्यै क्लीवः। या रजः सृजति तस्या उद्बन्धुकः, या पर्णेन पिबति तस्या उन्मादकः।

या खर्व्वेण पिबति तस्यै खर्वः।

तिस्रो रात्रीर्व्रतञ्चरेदञ्जलिना वा पिबेदेव खर्वेण वा पात्रेण प्रजायै गोपीथायेति, सम्भवन्ति मैथुनं कुर्व्वन्ति, अरण्ये यां सम्भवतीत्यन्वयः, तस्यै इति षष्ठ्यर्थे चतुर्थी, तस्यास्तेनः पुत्र इत्यर्थः, पराचीं ग्रामाद्वहिर्गतां सम्भवन्तीत्यन्वयः ह्रीतमुखो लज्जाकुलमुखः, अपगल्भोऽप्रगल्भः, या स्नाति तत्पुत्रो जलचर-मत्स्यादिमारकः, प्रतिलेखनं भूमेः, खर्वो वामनह्रस्तः एवं व्रता-चरणाभावे प्रजावैगुण्याद्व्रतं पजारचार्थं कार्य्यं इत्यर्थः।

वृहदारण्यके,—

अहं कंसेन पिबेदहतवाससा नैना वृषलो न वृषल्युपहन्यात् त्रिरात्रं आप्नुयुरिति, वृषलो वृषलीति शूद्रशूद्रीस्पर्शनं निषिद्धं, पुनस्तत्रैव, मनवद्वाससं यशस्विनीमभिक्रम्योपमन्त्रयते, इन्द्रियेण ते यशसा आदधामोति, सा च तदभिमन्त्रणं नाङ्गीकरोति स्थानत्यागादिना, '(१)एनादस्तेनानमस्यामन्त्रयते, इन्द्रियेण ते रेतसा रेत आददात्यभिपरः।

(१) एनादूरस्थे मनसा मन्त्रयते।

एवं त्रिरात्रं व्रतधारणम्, ब्रह्माण्डे,—

पटाच्छादनसंयुक्ता गृहाभ्यन्तरमाविशेत्।
न कस्यचिन्मुखमपि द्रष्टुमर्हा भवेत्तु सा॥
रम्भापत्रेण चाश्नीयादन्नमामिषवर्ज्जितम्।
न छिन्द्याच्च नखैः किञ्चिन्न सुवेशप्रधारिणी॥
प्रथमेऽहनि चाण्डाली द्वितीये ब्रह्मघातिनी।
तृतीये रजकी प्रोक्ता चतुर्थेऽहनि शुध्यति॥
पञ्चमेऽहनि पाकाय संशुद्धा नात्र संशयः।
यावत्सूर्य्योदयो न स्यान्न रटन्तीह पक्षिणः॥
तावत्कालं समारभ्य स्नायात्सुविमले जले।
सुप्रसन्नमनाः साध्वी चतुर्थेऽहनि शोभना॥
पटाच्छादितसर्व्वाङ्गा ध्यायन् विष्णुं प्रजापतिम्।
न कस्यचित् मुखं पश्यन् स्नायात्सुविमले जले॥
अन्त्यजातिमुखं दृष्ट्वा दृष्टान्यप्राणिनामपि।
यदि गर्भधरा कन्या सूते पुत्रञ्च कुत्सितम्॥

तथा चतुर्थदिवसे श्रौतकर्म्मण्यधिकारो भर्त्तृपादसम्बाहनादौ च। अपत्यगतदोषसहिष्णोश्चतुर्थेऽपि सम्भोगः। पञ्चमेऽहनि स्मार्त्तकर्म्मण्यधिकारः सम्भोगे चेति। सर्व्वमिदमस्मत्कृते कालसारे सप्रमाणं लिखितम्।

## अथ रजस्वलाया अस्पृश्यस्पर्शादौ प्रायश्चित्तम् ।

वृद्धशातातपः,—

उदक्या सूतिका वापि अन्त्यजं संस्पृशेद्यदि ।
त्रिरात्रेणैव शुध्येत इति शातातपोऽब्रवीत् ॥
रजस्वला यदा स्पृष्टा चण्डालान्त्यश्ववायसैः ।
तावत्तिष्ठेन्निराहारा स्नात्वा कालेन शुद्ध्यति ॥
रजस्वले तु ते नार्य्यावन्योऽन्यं स्पृशतो यदि ।
सवर्णे पञ्चगव्यन्तु ब्रह्मकूर्चमतःपरम् ॥

ब्रह्मकूर्चस्वरूपमाह जावालिः,—

अहोरात्रोषितो भूत्वा पौर्णमास्यां विशेषतः ।
पञ्चगव्यं पिवेत्प्रातर्ब्रह्मकूर्चविधिः स्मृतः ॥

चतुर्द्दशीमुपोष्याथ पौर्णमास्यां समाचरेदिति वृद्धशातातपोक्तेः ।

वृहस्पतिः,—

पतितान्त्यश्वपाकेन संस्पृष्टा स्त्री रजस्वला ।
तान्यहानि व्यतिक्रम्य प्रायश्चित्तं समाचरेत् ॥
प्रथमेऽह्नि त्रिरात्रन्तु द्वितीये द्व्यहमेव च ।
अहोरात्रं तृतीयेऽह्नि चतुर्थे नक्तमाचरेत् ॥
शुना गोच्छिष्टया शूद्रा संस्पृष्टान्त्यहमाचरेत् ।
अहोरात्रं तृतीयेऽह्नि परतो नक्तमाचरेत् ॥

वशिष्ठः,—

स्पृष्टे रजस्वलेऽन्योऽन्यं सगोत्रे त्वेकभक्तके ।

कामादकामतो वापि सद्यः स्नानेन शुद्ध्यतः॥

मार्कण्डेये तु सवर्णस्य स्पर्शेऽपि स्नानमात्रमुक्तम्।

बृहद्वशिष्ठः,—

स्पृष्टे रजस्वलेऽन्योऽन्यं ब्राह्मणी शूद्रजाऽपि च।

कृच्छ्रेण शुद्ध्यते पूर्व्वा शूद्रा दानेन शुद्ध्यति॥

बृहद्विष्णुः,—

रजस्वलां हीनवर्णां स्पृष्ट्वा तावन्नाश्नीयाद्यावन्न शुद्धा भवेत्।

सवर्णामधिकां स्पृष्ट्वा स्नात्वा सुशुध्यति।

स्मृत्यन्तरे,—

रजस्वला तु भुञ्जाना श्वान्त्यजादीन् स्पृशेद्यदि।

गोमूत्रयावकाहारा षड्रात्रेण विशुद्ध्यति॥

अशक्ता काञ्चनं दद्याद्विप्रेभ्यो वापि भोजनम्।

मार्कण्डेयः,—

द्विजान् कथञ्चिदुच्छिष्टान् रजस्वला स्त्री स्पृशेद्यदि।

अधोच्छिष्टे त्वहोरात्रं मूर्द्धोच्छिष्टेऽत्र्यहङ्क्षिपेत्।

कलौ क्षत्रियवैश्ययोरभावात् स्त्रीस्पर्शविचारो न लिखितः॥

तस्माच्छुक्रविवृद्ध्यर्थं वृष्यं स्निग्धं च भोजयेदिति बृहस्पत्युक्तेः, पुरुषस्य वृष्यभक्षणं न स्त्रियाः। वृष्याणि च दुग्धादीनि वैद्यशास्त्रादवगन्तव्यानि। प्रजामुत्पादयेदौषधमन्त्रसंयोगेनेति बौधायनोक्तेः पुंसः स्त्रिया अपि वैद्यशास्त्राद्युक्तान्यौषधानि भक्ष्याणि।

मन्त्रादिप्रयोगाश्च स्मृतिपुराणाद्युक्ताः कार्य्याः। पुत्त्रप्रदव्रत-

दानादीन्यपि कार्य्याणि । काम्यत्वात् स्वप्नपरीक्षा न लिखिता ।

इति नित्याहोरात्रकृत्याचारः ।

## अथ प्रसङ्गात् प्रथमरजोविचारः ।

ज्योतिःशास्त्रे,—

सूर्य्येन्दुभौमबुधजीवसितार्किवारे ।
स्त्रीणामृतौ फलमिदं प्रथमप्रवृत्तौ ॥
व्याध्यन्विता पतिहिता मरणं सुखाढ्या ।
पत्यर्थभाग् बहुसुता रहिता च भाग्यैः ॥ इति वारफलम् ।
दौर्भाग्यञ्च शुभं क्षेममारोग्य रोगयुक्तता ।
सौभाग्य परगात्वं स्त्रीः स्यात्पतिव्याधिकारिता ।
वैधव्यं सुसुतप्राप्तिर्मृतवत्सात्वमेव च ।
स्वैरिणीत्व पुत्रधनप्राप्तिश्चञ्चलबुद्धिता ॥
मृत्युस्तिथिष्वमात्रेषु पूर्णिमाया तु सम्पदः ।

इति तिथिफलम् ।

सुतार्थसम्पद्बहुभोगयुक्ता सौभाग्यशीला प्रियवादिनी च ।
स्यादश्विभे वेगवती यमर्क्षे त्वन्यप्रसक्ता खलु दुर्भगा च ॥
मातङ्गिनीनां च बलिप्रवृत्ता विहीनपुत्रा दहने पुरन्ध्री ।
परोपकर्त्री सुतसौख्ययुक्ता धनान्विता स्यात्कमलासनर्क्षे ॥
सौभाग्यसौख्यातिसुशीलयुक्ता धनान्विता पुष्पवती मृगर्क्षे ।
दुष्टा विवृत्ता पतिविप्रयुक्ता व्ययोज्झिता शङ्करतारकायाम् ॥

मायाविनी सम्भविकीर्णकामा स्याद्दम्भकी पापरताऽदितौ च।
साध्वी गुणाढ्या सुतवित्तयुक्ता पतिप्रिया वाक्पतिभेऽङ्गना स्यात्॥
वैधव्यसम्वेगवती च कन्या वियोगिनी स्यात्पवनाशनर्क्षे।
सौभाग्यसौख्यातिसुशीलयुक्ता रजोवियोगो बहुदुःखयोगः॥
भर्त्तुर्वियोगस्त्वथवा मघाया,—
स्याद्दुर्भगा दुश्चरिताऽर्थहीना प्रच्छन्नपापा भगदेवतायाम्।
धनान्विता चार्थयुताऽर्यमर्क्षे सुतान्विता स्यात्प्रियवादिनी च॥
साध्वी गुणाढ्यां सुतवित्तयुक्ता सदात्मजा धर्म्मवती करेभे।
भोगान्विता ख्यातिवती सुशीला चित्रासु साध्वी गुणवित्तयुक्ता॥
स्वातौ गुणाढ्या पतिवल्लभा स्यादिन्द्राग्निभे पुत्रवती गुणाढ्या।
मैत्रेषु सौभाग्यवती सुपुत्राऽभीष्टार्थसम्पत्तियुता च कन्या॥
तेजस्विनी पुत्रवती च साध्वी धनान्विता चार्थवती च शक्रे।
मूले सती भर्त्तृपरायणा स्यात् प्रभान्विता सौख्यवती च कन्या॥
वियोगदुःखा विधवा दरिद्रा स्याद्दुर्विनीता कुलटा जलर्क्षे।
सौख्यान्विता पुत्रवती गुणाढ्या कुलद्वयानन्दकरी च विश्वे॥
धर्म्मार्थकामात्मजशीलयुक्ता सम्पत्तिसौभाग्यवती हरेर्भे।
भोगान्विता वित्तवती च कन्या धनान्विता स्याद्वसुभे सुवेशा॥
इष्टान्विता पुत्रवती धनाढ्या सुखान्विता स्याच्छततारकायाम्।
नीचा कुवृत्ता मलिनाऽप्रियम्वदा निःस्वाऽतिदुःखा खलु पूर्व्वभाद्रभे॥
स्यादुत्तराया धनधान्ययुक्ता प्रतापिनी भोगवती सुपुत्रा।
पौष्णे तु चारित्रवती च साध्वी द्रव्यान्विता स्यात् पतिवल्लभा च॥

इति नक्षत्रफलम्।

त्रिपूर्व्वासु सप्तमासान्मघाग्न्योः पञ्चमासकम् ।
याम्येन्द्रयोर्दश शिवसर्पयोर्वत्सरं त्यजेत् ॥

इति गण्डपुष्पनिर्णयः ।

कृत्तिकादीनि ऋक्षाणि दिक्ष्वष्टसु लिखेद्बुधः ।
चत्वारि दिक्षु ऋक्षाणि कोणेषु त्रितयं लिखेत् ॥
कृत्तिकादीनि ऋक्षाणि दिक्षु कृत्वा च संलिखेत् ।
विदिक्षु त्रीणि ऋक्षाणि अभिजिच्छ्रवणोत्तराः ।
औदन्ध्या सुभगा चैव विपुत्रा पुत्रिणी तथा ॥
विधवा सर्व्वसम्पन्ना वेश्या चेति क्रमात् फलम् ।
नक्षत्राणां तु गणना स्यादतः कृत्तिकादितः ॥

इति रजश्चक्रम् ।

अजे दरिद्रा गवि गोधनाढ्या धनान्विता सौख्यवती नृयुग्मे ।
कुलद्वयानन्दकरी चतुर्थे सक्तप्रसूतिः किल सिंहलग्ने ॥
कन्याप्रसूः कन्यगते विलग्ने धनान्विता लग्नगते तु लाभे ।
अलौ विलग्ने कुलटाऽतिपापा चापाख्यलग्ने व्यभिचारिणी स्यात् ।
मृगे प्रिया स्याज्जनहर्षिणी च कुलद्वयानन्दकला(१) घटाख्ये ।
मत्स्ये विलग्ने व्यभिचारिणी च लग्ने फलं स्याद्रजःप्रवृत्तौ ॥

इति लग्नफलम् ।

दारिद्र्यं मेषमासे स्याद्वृषे गोधनपुष्टयः ।
सौभाग्यं मिथुने चैव कर्कटे सुखमाप्नुयात् ॥

---

(१) करी- ।

सिंहे सक्षत्प्रसूतिः स्यात् कन्ये कन्या न संशयः।
तुले धनान्विता नारी वृश्चिके कुलटा भवेत्॥
धनुषि चञ्चला नारी मकरे सुखमाप्नुयात्।
कुम्भे बहुसुता सा च मीने वेगवती भवेत्।

इति मासफलम्।

कुतिथिकुलिकवेलापापगर्व्वोदयानाम्।
दुरितखचरदृष्टे वैधृतौ पातविष्ट्योः॥
मदननिधनराशौ पापदृष्टेऽथ युक्ते-
ष्वशुभमिलितपुष्पं विद्धि मृत्युं वरस्य॥

पातो व्यतीपातः,—

प्रत्यरौ जन्मनक्षत्रे विपत्तारे निरंशके।
आदौ रजसि नारीणां भर्त्तृरोगो धनक्षयः॥
अष्टमस्थे निशानाथे भर्त्तुर्निधनतारके।
यदि स्यात् प्रथमं पुष्पं तस्य मृत्युं विनिर्द्दिशेत्॥

इति कुतिथ्यादिफलम्।

पुष्पवत्याः शुभं प्रातः पूर्व्वाह्ने प्रीतिवर्द्धनम्।
मध्याह्ने सुखसौभाग्यं पराह्ले पुरचारिणी॥
सायाह्ने बहुभर्त्ता स्यात् सन्ध्यायां गणिका सदा।
पूर्व्वरात्रे भवेद्वन्ध्या विधवा मध्यरात्रके॥
निशान्ते सुखसौभाग्ये रात्रावेवं फलं लभेत्।

इति प्रातरादिफलम्।

शुभं स्याच्छ्वेतवस्त्रेण रोगिणी च कुवाससा ।
नीलाम्बरधरा नारी विधवा पुष्पयोगतः ॥
मलाम्बरधरा नारी दरिद्रा स्याद्रजस्वला ।
भोगिनी पीतवस्त्रा स्याच्चित्रवस्त्रा पतिप्रिया ॥
अशुभा जीर्णवस्त्रा स्याच्छुक्लवस्त्रा पतिव्रता ।
क्षौमवस्त्रा राजपत्नी नववस्त्रा सुखप्रदा ॥

इति परिधानवस्त्रफलम् ।

पुष्पं दृष्टं निन्दिते भे यदि स्याच्छान्तिं कुर्य्यादङ्गनानाञ्च पूर्व्वम् ।
तत्संयोगं वल्लभा वर्ज्जयेयुर्यावद् भूयो दृश्यते शस्तभे तत् ॥

इति वचनात् पुनः शुभदिने पुष्पे निषेकः कार्य्यः ।

तथाच,—

पापासंयुतमध्यगेषु दिनकृल्लग्नचपास्वामिषु,
तद्दूनेष्वशुभोज्झितेषु विकुजे छिद्रे विपापे शुभे,
सद्युक्तेषु त्रिकोणकण्ठकविधुष्वायत्रिषष्ठान्विते,
पापे युग्मनिशासु गण्डसमये पुंशुद्धितः सङ्गमः ।
अश्विनीमघमूलानां तिस्रो गण्डाद्यनाड़िकाः ।
अन्ते पौष्णोरगेन्द्राणां पञ्चैव यवना जगुः ॥

तत्र प्रथमर्त्तौ स्नानदिने निषेकदिने च नारिकेलपक्वकदली-शर्करालाजादिकं स्त्रीभ्यो ददातीति समाचारः ।

अन्नं पानं फलं मूलं गन्धपुष्पाणि चैव हि ।
दद्याद्ब्राह्मणपत्नीभ्य इति ब्रह्माण्डोक्तेः ।

तत्र प्रथमर्त्तुदोषशान्तये होमः कार्य्यः,

तथाच, दूर्व्वातिलाज्यैर्जुहुयात्सहस्रं गायत्रीमन्त्रेण तदुक्तदोषे। इति।

दूर्व्वातिलहोमयोर्होमे हस्तस्य साधनत्वं आज्यहोमे स्रुवस्य साधनत्वमिति समुच्चयहोमस्यासम्भवात् षट्त्रिंशदधिकशतत्रयहोमे प्रत्येकद्रव्यसम्बन्धेन अष्टोत्तरसहस्रहोमः सिध्यति। सहस्रशतहोमादिषु अष्टोत्तरत्वस्य नियतत्वात्। ननु द्वन्द्वसमासात्समुच्चयपक्ष एव प्राप्नोतीति चेत्, न। भिन्नवस्तुद्रव्यं प्रति साहित्यस्याप्युपपत्तेः।

केचित्तु,—

नक्षत्रतिथिवारेषु क्षतपुष्पं च दुष्यति।
होमङ्कुर्य्याच्च गायत्र्या वारदोषे तिथावपि॥
कुशैराज्यैश्चाष्टशतं दूर्व्वाभिश्च तथैव च।
तिलैराज्येन दूर्व्वाभिर्होमङ्कुर्य्यात् शुभे दिने॥
नक्षत्रदोषशान्त्यर्थं प्रत्येकन्तु सहस्रकम्।

तथागतव्यवस्था,—

वारदोषव्यपोहनार्थमाज्यमिश्रितानां दूर्व्वाणामष्टोत्तरशतहोमः। नक्षत्रदोषे आज्यमिश्रितकुशानामष्टोत्तरशतहोमः। लग्नदोषे आज्ययुक्ते तिलाष्टोत्तरशतहोमः। इति व्यवस्थामाहुः।

ननु अशूद्राधिकरणे स्त्रीशूद्रयोर्व्वैदिकमन्त्रे स्वाधिकाराभावस्य निर्णीतत्वाच्छूद्रस्य गायत्रीमन्त्रकरणकहोमस्य सर्व्वथा कर्त्तव्यत्वाभावेन दोषशान्तिः कथमिति चेत्। उच्यते,—

योगस्य हेमकरणस्य च धान्यमिन्दुः,
शङ्खञ्च तण्डुलमणिस्तिथिवारयोश्च।
तारावलाय लवणान्यथ गाञ्चराशे-
र्दद्याद्विजाय कनकं शुचिनाड़िकायाम्॥

इति सामान्यशान्तिः कार्य्या इति केचित्।

वस्तु तस्तु सर्व्वदोषशान्त्यर्थं यथाशक्ति हेमदानमेव प्रत्येकं कार्य्यम्।

सर्व्वदोषोपशमनं हेमदानं प्रकीर्त्तितमित्युक्तेः।

यत्तु कैश्चिदुक्तं शूद्रेण ब्राह्मणप्रतिनिधिद्वारा गायत्रीहोमः कार्य्य इति तथा सति ब्राह्मणद्वारा यागादिष्वधिकारोऽप्यनिर्वार्य्यः स्यात्। इति, सर्व्वथा न तथाचारो दृश्यते, ब्रह्माण्डोक्तहोमस्य काम्यत्वात् सर्व्वैर्न क्रियते तस्यान्यशुभदिनेऽपि विहितत्वान्न निषेकदिननियमः।

निषेककर्म्मणि वृद्धिश्राद्धाभाव.,

विवाहादिः कर्म्मगणो य उक्तो गर्भाधानं शुश्रुम यस्य चान्ते।

विवाहादावेकमेवात्र कुर्य्यात् श्राद्धं नादौ कर्म्मणः स्यादिति छन्दोगपरिशिष्टोक्तेः।

वृद्धिश्राद्धाभावान्मातृपूजावसोर्द्धारायुष्यमन्त्रजपानामप्यभावः।

तत्पूर्व्वापरभावस्य नियमात्, ननु राजगृहादिषु शिष्टैरपि वृद्धिश्राद्धं कुतः कार्य्यमिति चेत्।

उच्यते,—

अस्मत्पितामहकृष्णवृहत्पण्डितमहापात्रैस्तु नीतिरत्नाकरे

नान्दीमुखश्राद्धस्य गर्भाधाने विहितप्रतिषिद्धत्वाद्विकल्प इति तत्करणपक्षोऽपि सङ्गच्छत इति समादधुः । वस्तु तस्तु वृद्धि-श्राद्धाभावेऽपि, निषेककाले सोमे च सीमन्तोन्नयने तथा ।

ज्ञेयं पुंसवने चैव श्राद्धं कर्माङ्गमेव चेति ।

विष्णुपुराणोक्तेः,—

तथा भविष्योक्तेश्च कर्म्माङ्गश्राद्धन्तत् ।

कर्म्माङ्गं वृद्धिवत्तमिति पारस्करोक्तेर्वृद्धिश्राद्धेतिकर्त्तव्यता । अतएव हरिहरभाष्यपद्धतौ मातृपूजापूर्व्वकं स्वयमाभ्युदयिकं कृत्वेत्युक्तम् ।

शिष्टब्राह्मणानाञ्च सोमादिष्वपि कर्म्माङ्गश्राद्धकर्म्मणः समा-चाराभावान्नात्रापि तत्करणमिति सिद्धान्तः । निषेकदिने प्रात-र्नित्यकृत्यानन्तरं गणपत्यादिपूजा ।

"स्वस्ति वाच्यः स्त्रियं गच्छेदि"ति ब्राह्मोक्तेः स्वस्तिवाचन-मत्रावश्यकम् । गर्भाधानकर्म्मणि स्वस्ति भवन्तो ब्रुवन्तु इत्यादि वाक्यम् । बहुब्राह्मणभोजनाशक्तौ, तु "गर्भाधानेषु सर्व्वेषु ब्राह्म-णान् भोजयेद्दशेति याज्ञपार्श्वोक्तेः कर्म्माङ्गदशभोजनमावश्यकम् । इति प्रथमर्त्तुनिर्णयः ।

श्रीनिलाम्बरनामराजगुरुराख्यातो हरेकृष्णभू-

नाथग्रामगजातपत्र उदभूद्दयोयायजूकः सुधीः ।

श्रीमान् राजगुरुर्गदाधरसुधीस्तस्यात्मजः कौशिको-

ग्रन्थं संशयनाशकं रचितवानाचारसाराभिधम् ॥ इति ।

# आचारसारधृतप्रमाणग्रन्थानां ग्रन्थकृताञ्च अनुक्रमणी ।

ख

---

# आचारसारस्य विषयानुक्रमणी।



अ

पृष्ठे

ऋ



ए

पृष्ठे

ओ



क

पृष्ठे

पृष्ठे

ब

पृष्ठे

पृष्ठे

श